REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः

# SABDARTHACİNTAMANIH

चतुर्थ खण्ड

भाग - ब

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

नाबुद्धिरूपिणा ।' श्रौतशास्त्रतथाप्रोक्तमग्न्याधानपटादिकम् । आपस्तम्बश्रुतिवाक्यानादृश्य अम्लोकगर्हितम ॥ कर्मस्वरूपस्याज्ञत्वमनवप्रतिपद्यते । सर्वकर्मपरिभ्रष्ट कर्म्म यस्तु तदुच्यते ॥ गौतमप्रोक्तशास्त्रार्थनिरता . सर्वएवहि । शार्गालीं योनिमापन्ना . सन्दिग्धा ' सर्वकर्मस्विति ॥ शास्त्रविहीनोऽस्य । यथि शास् । अनेकसंशयोच्छेदिपरोक्षार्थस्यदर्शकम् । सर्वस्यलोचनं शास्त्रं यस्यनास्त्यन्धएवस ॥ इति ॥ शासनम्॰ शिष्यतेऽनेनवा । शासुअनुशिष्टौ । सर्वधातुभ्यष्ट्रन् ॥ विहायशास्त्रजालानियत्सत्यंतदुपास्यताम् ॥

शास्त्रकृत् । पुं॰ ऋषौ । मुनौ ॥ त्रि॰ शास्त्रकारि ॥

शास्त्रगण्ड ' । पुं॰ प्रघटाविदि । छात्रगण्डे ॥ पदाद्यविदि । स्नोका धवेत्तरि ॥

शास्त्रचक्षु । न॰ व्याकरणे ॥

शास्त्रचारण : । पुं॰ शास्त्रदर्शिनि ॥

शास्त्रज्ञ ' । त्रि॰ शास्त्रविदि । आगमज्ञे । बहुयोग्ये ॥ यथा । अनियुक्तोनियुक्तोवाशास्त्रज्ञोपञ्चमर्हति । दैवीवाच सवदतिय शास्त्रमुपजीवतीति । शास्त्रजानातिमारद । ष्णा॰ । क ' ॥

शास्त्रतत्त्वज्ञ । परमार्थविदि ॥ गणके ॥ शास्त्रतत्त्वजानाति । ष्णा॰ । क ॥

शास्त्रदर्शी । त्रि॰ शास्त्रज्ञे ॥

शास्त्रदृष्टि । स्त्री॰ विवेकनयनप्रसारणाम् ॥

शास्त्रयोनि ' । पुं॰ वेदप्रमाणके , परमात्मनि ॥ शास्त्रयोनि कारणप्रमाणमस्य । यतोशब्दमानिभूतानीत्यादिशास्त्रादेवप्रमाणाज्जगतोजन्मादिकारण ब्रह्माधिगम्यते ॥ वेदात्मकनिश्वासे ॥

शास्त्रयोनित्वम् । न॰ शास्त्रस्यवेदस्यापिकारणत्वे ॥ शास्त्रयोनिकारणम्प्रमाण यस्य॰ तस्यभावे ।

शास्त्रवित्॰द्॰ । त्रि॰ तन्त्रविदि । शास्त्रज्ञे ॥ शास्त्रवेत्ति । विद॰ । सत्सूद्विषेत्यादिनाक्विप् ,

शास्त्रविधि । पुं॰ शास्त्रसम्बन्धिलिङादिशब्दे । कुर्यान्नकुर्यादित्येवप्रवर्त्तनानिवर्त्तनात्मककार्य्याकार्य्यज्ञानहेतौ विधिविधाख्ये ॥ विधिनिषेधातिरिक्तमपिब्रह्मप्रतिपादकं शास्त्रमस्तीतिसूचयितुं विधिशब्द ' ॥

शास्त्रशिल्पिन । पुं॰ भूमिकीरेषु । काश्मीरदेशे ॥

शास्त्रित । त्रि॰ शिक्षिते ॥ शास्त्रं सञ्जातमस्य । तारकादित्वादित

शिख० । अत्रम॑क्तत्वात् कर्तरि क्तः ।

शिखिताच्छर । पु० प्रज्वरमुखे । ज्ञा र्थ ॥

शिख्य । त्रि० नियम्ये ॥

शिखण्ड । पु० बर्हे । मयूरपिच्छे । मोरपङ्ख०हू० भा० ॥ चूडायाम् ॥ शिखिनाश्रम्यते । अमगत्यादिषु । अमन्ताड्डः । शकन्ध्वादि ॥

शिखण्डक । पु० काकपक्षे । पट्टे० हू० भा० । शिखात्रये ॥ यथा । वालानाञ्च शिरः कार्यं त्रिशिखण्डमेवचेति ॥ पु० न० केकिपुच्छे ॥

शिखण्डिक । पु० कुक्कुटे । शिखण्डोऽस्त्यस्य । ठन् ॥

शिखण्डिका । स्त्री० शिखायाम् ॥

शिखण्डी । पु० कलापि । बर्हे । मोरपङ्ख० हू० भा० ॥ मयूरे । बर्हिणि ॥ गाङ्गेयारौ । भीष्मरिपौ । द्रुपदराजपुत्रे ॥ कुक्कुटे ॥ वाणे ॥ गोपवेशधरे विष्णौ ॥ शिखण्डो बर्हकलापो लङ्कारत्वमस्याशिन् वास्ति अतइनिठनाविती नि ॥

शिखण्डिनी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ द्रुपदराजकन्यायाम् ॥ मयूरपिच्छभूषणायाम् ॥ मयूरकान्तायाम् ॥ शिखण्डोऽस्त्यस्याः । इन्नन्तान् ङीप् ॥

शिखण्डी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ गौरादित्वात् ङीष् ॥

शिखर । पु० न० द्रुमाग्रे । शिरसि । अग्रे ॥ पर्वतशृङ्गे । कूटे । शृङ्गे ॥ पुलके ॥ कक्षे ॥ पक्वदाडिमबीजाभमाणिक्यशकले ॥ अग्रे ॥ कोटौ ॥ शिखाऽस्यास्ति । शिखायाश्च ल इति र ॥ शिखारात्रिवा । रा० । क । ड्रापोरितिह्रस्वः ॥

शिखरवासिनी । स्त्री० उमायाम् । दुर्गायाम् ॥ सा तु भक्तसुप्रीता देवी शिखरवासिनी । उग्रे चातपसा लब्धो यया पशुपतिः पतिः ॥

शिखरा । स्त्री० मूर्वायाम् ॥

शिखरिणी । स्त्री० रसालाप्रभेदे ॥ यथा । गव्यमावर्त्तितं दुग्धं निवद्ध दधिमाहिषम् । एकीकृत्य पटे घृष्टं शुभ्रशर्करयासमम् । एलालवङ्गकर्पूरमरीचैः समन्वितम् । नाम्ना शिखरिणी कुर्याद्रुचिसज्जनस्तभा ॥ अत्यष्टि १७ प्रभेदे ॥ यथा । रसै रुद्रैश्छिन्नायमनसभलाग शिखरिणी ॥ यथा । कराद्भ्रष्टं नन्तुशिखरिणीदृष्टिशिशी । विलीना सा सत्य नियतमवधेयत दखिले । इतिव्याद्गोपानुग्वितनिभृतालापजनितस्मितं विभ्रद्देवो जगदवतु गोवर्द्धनधरः ॥ इशिशतिशिशोद्रुतिच्छेदः । नारीरत्ने ॥ मल्लिकायाम् ॥ रोमावल्याम् ॥ नवमालिकायाम् ॥

द्राक्षाविशेषे ॥ मूर्वायाम् ॥

शिखरी । पुं॰ अपामार्गे । शैले । पर्वते । पादपे । द्रुमे ॥ कोट्टे ॥ कोयष्टौ ॥ वन्दाके ॥ कर्कटशृङ्ग्याम् ॥ कुन्दुरुसल्लकीनिर्यासे ॥ याव नालि । शिखरमस्त्यस्य । अतइनि ॥

शिखशोचित । पुं॰ कुकुरमुडा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ क्षुप ॥

शिखा । स्त्री॰ शाखायाम् ॥ बर्हिचूडायाम् ॥ लाङ्गलिकायाम् ॥ अग्रमात्रे ॥ शिरोमध्यस्थकेशेषु । चूडायाम् । केशपाश्यायाम् । चोटी॰ इ॰ भा॰ ॥ अग्निज्वालायाम् । ज्वालि । अर्चिषि । प्रपदे ॥ प्रधाने ॥ शिफायाम् ॥ चूर्णौ । कामज्वरे ॥ मात्राछन्दः प्रभेदे । यथा । द्विजवर शिरसि सगुणितसुपनयतदनुगणमपिनिधेहि रसगुणितमपरदलमपिकुरु वरफणिपतिमुखभणितवचिरशिखेति । यथा । वकुलवनमृदुपवनरयनिहतविरहिशतसुरभिरयमेति । दयिततमविरहिममहृदयमतितपतिसखियदिहतविधुरयमुदेति ॥ शिते । शीङोक्षणर्णेतिप्व । क्षणविधिसामर्थ्यान्नगुणः ॥

शिखाकन्दम् । न॰ गृञ्जने । सलगम॰ इ॰ भा॰ प्र॰ ॥

शिखाजटः । पुं॰ ब्रह्मचारिविशेषे ॥ शिखैवजटाजातायस्य ॥ अपरि॰ शिर केशामुण्डिताब्रह्मचर्याधि शीब्रह्मचारी॰ शिखाजटवृत्त्यस्ति ॥

शिखाण्डक । पुं॰ काकपक्षे ॥

शिखातरु । पुं॰ दीपवृक्षे ॥ दीवट॰ इ॰ भा॰ प्र॰ दीपाधारविशेषे ॥

शिखाधर । पुं॰ मयूरे । मञ्जुघोषे ।

शिखाधार । पुं॰ मयूरे ॥

शिखामूलम् । न॰ गृञ्जने ॥

शिखालु । पुं॰ मयूरशिखायाम् ॥

शिखावान् । पुं॰ अग्नौ ॥ चित्रके ॥ केतुग्रहे ॥ त्रि॰ शिखायुक्ते ॥ शिखास्त्यस्यमतुप ॥

शिखावती । स्त्री॰ मूर्वायाम् ॥

शिखावर । पुं॰ पनसद्रुमे ॥

शिखावल । पुं॰ शिखिनि । मयूरे ॥ शिखास्त्यस्य । दन्तशिखात्संज्ञायामितिवलच् ॥

शिखावला । स्त्री॰ मयूरशिखायाम् ॥

शिखावृद्धि । स्त्री॰ कालिकावृद्धौ ॥

शिखाह्वः । पुं॰ शिखातरौ ॥

शिखिकण्ठम् । न॰ तीक्ष्णे । मयूरग्रीवे । तुत्थाञ्जने ॥

शिखिग्रीवम् । न॰ तुत्थे ॥ शिखिनोग्रीवा । शिखिग्रीवाभमस्ति । तद्वर्णत्वात ॥ अर्शआद्यच् ॥

शिखिध्वज । पुं॰ कार्तिकेये ॥ शिखीमयूरोध्वजश्चिह्नमस्य । धूमे ॥

शिखनोध्वज ॥

शिखी । पुं॰ अग्नौ वैश्वानरे ॥ चित्रकवृक्षे ॥ बलीवर्दे ॥ शरे ॥ केतुग्रहे ॥ द्रुमे ॥ मयूरे ॥ कुक्कुटे ॥ हयै ॥ शिखा सन्त्यस्य । शिखा स्त्यस्यवा । इनूहोपतामिति॰ द्रू॰ शि॰ ब्रीह्यादिभ्याश्च ॥ अजमोदायां ॥ सितावरे ॥ मेथिकायाम् ॥ शूकशिम्ब्याम् ॥ त्रि॰ शिखायुक्ते ॥

शिखिनी । स्त्री॰ मयूर॰ शिखायाम् ॥

शिखिपुच्छम । न॰ मयूरपिच्छे ॥

शिखिप्रिय । पु॰ लघुबदरे ॥

शिखिमण्डल । पुं॰ वरुणद्रुमे ॥

शिखिमूलम् । न॰ गृञ्जने ॥

शिखिमोदा । स्त्री॰ अजमोदायाम् ॥

शिखियूप । पुं॰ शौकारीमृगे ॥

शिखिवर्द्धक । पु॰ कूष्माण्डे ॥

शिखिवाहन । पु॰ कार्त्तिकेये । महासेने ॥ शिखीमयूरोवाहनमस्य ॥

शिखिव्रतम् । न॰ व्रतविशेषे ॥

शिग्रु । पु॰ शाकमात्रे ॥ शोभाञ्जने । अस्यपर्यायायथा । शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचका' । रक्तोसौमधुशिग्रु' स्यादिति ॥ अस्यगुणायथा । शिग्रुस्तुकटुक ' पाके तीक्ष्णोष्णोमधुरोलघु ' । दीपनोरोचनोरूक्ष . क्षारस्तिक्तोविदाहकृत् ॥ सङ्ग्राही शुक्रलोहृद्य : पित्तरक्तप्रकोपण : चक्षुष्य : कफवातघ्नोविद्रधिश्वयथुक्रमीन ॥ मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान्हरेत । श्वेत प्रोक्तगुणोज्ञेयोविशेषाद्दाहकृद्भवेत् । प्लीहानंविद्रधिंहन्तिव्रणघ्न पित्तरक्तहृत् ॥ मधुशिग्रु प्रोक्तगुणोविशेषाद्दीपन सर । शिग्रुवल्कलपत्राणांस्वरसपरमार्त्तिहृत् ॥ अपिच । कोलिम्बराजकबिम्बाबनिताबतयेशिग्रोरसुपुष्पकाथिनौलिकिमुपयोग । एतस्यपल्लवरसात्समघो किमन्यदृष्ट्वा शिमाअहरयमहिलायगयो ॥ द्रूति ॥ शिनोति । शिञ्निशाने । अमवृगादयश्चतिनिपातित ॥ शोक्यतेवा । शोकृसेचने । बाहुलकाद्रुक्॰ हलो॰ गश्च ॥

शिग्रुकम् । न॰ वाह्लीकेषुप्रसिद्धेशाकविशेषे ॥

शिग्रुजम् । न॰ श्वेतमरिचे । शोभाञ्जनबीजे ॥ अस्यगुणा । चक्षुष्यंशिग्रुजंशीततीक्ष्णोष्णंविषनाशनम् । अवृष्यंकफवातघ्नं तन्नस्येनशिरोर्त्तिनुत् ॥ त्रि॰ शिग्रुभवे ॥ शिग्रौजायतेस्म । जनी॰ । ड ॥

शिग्रुपुष्पम् । न॰ शोभाञ्जनकुसुमे । तत्पुष्पगुणा । शिग्रो पुष्पन्तुकटुकंतीक्ष्णोष्णंस्नायुशोथनुत् । क्रिमिहृत्कफवातघ्नं विद्रधिप्लीहगुल्म

ने । त्विन् ० त्विञ्वा । शते सौ यात् ॰ क्रमितमिश्रतित्वञ्चामत इत्येति ॰ इत्यसचकित् ॰ चतद्वदा देशीया ॥

शितिकण्ठ । पु ॰ शम्भौ । दूष्टी । शिवे । शिति काला कण्ठोऽस्य ॥ दात्यूहखगे ॥

शितिचर । पु ॰ सुनिषण्णशाके ॥

शितिचार । पु ॰ शाकविशेषे ॥

शितिच्छद ।) शितिपक्ष ) पु ॰ हंसे ॥

शितिसार । पु ॰ तिन्दुके । स्फूर्जके । तेंदू ॰ इ ॰ प्र ॰ द्रुमे ॥ शिति काल सारो मज्जायस्य ॥

शितिसारक । पु ॰ शितिसारे ।

शिथिलम् । त्रि ॰ श्लथे । ढीला इ ॰ भा ॰ । न ॰ मन्दकर्मणि ॥ श्लथ बन्धे । सर्वेगविशेषे ॥ श्वथेत् चने । श्रथिरशिथिरशिथिलेतिकिरच् ॰ उपधायाह्रस्वम ॰ रेफलोप श्चयरेफस्यलत्वञ्चनिपात्यते ॥

शिथिलित । त्रि ॰ विश्लथिते ॥

शिनि । पु ॰ सात्यकेः पितामहे ॰ क्षत्रियविशेषे ॥

शिनिनप्ता । पु ॰ सात्यकौ । शिने र्नप्ता ॥

शिपिः । पु ॰ रश्मौ ॥ पशौ ॥ पा ॰ ॥ बाहुलकात् किः ॥

शिपिविष्ट ।) पु ॰ खलतौ । खल्वाटे । दुश्चर्मणि । पिनाकिनि । शिवे ॥ विष्णौ । यथा । शैत्याच्छयनयोगा च्छीतशरिप्रपद्यते । ततपानाद्र श्मयाश्च शिपयोरश्मयोमता । तेषुप्रवेशाद्विश्वेश शिपिविष्टइहो च्यते ॥ शिपिषु ॰ रश्मिषु पशुषु वा विष्ट प्रतिष्ठितोयस्सरूपेयो त्ततथा ॥

शिप्र । पु ॰ कालिकापुराणप्रसिद्धे ॰ सरोवरविशेषे ॥

शिप्रा । स्त्री ॰ अवन्तिदेशप्रसिद्धपुण्य सरिद्विशेषे ॥

शिफा । स्त्री ॰ वटादिद्रुमाणांजटायाम् । मूले ॥ सरिति ॥ मांसकायाम् ॥ मातरि । शतपुष्पायाम ॥ हरिद्रा याम् ॥ शेते । बाहुलकात् ॰ शी ड फक् ह्रस्वश्च ॥

शिफाक । पु ॰ पद्ममूले ॥

शिफाकन्द । पु ॰ कसेरौ । पद्म मूले । शिफामूलतरुप्ररोह तस्य इव कन्दोमूलम ॥

शिफाधर । पु ॰) शिफाधरा । स्त्री ॰) शाखायाम् ॥

शिफारुह । पु ॰ वटवृक्षे ॥

शिमृडी । स्त्री ॰ क्षुपविशेषे । मति दायाम् । इश्रत्पल्याम् । वात घ्नाम ॥ गुच्छपुष्पाम ॥

शिम्ब । पु ॰ रक्तचक्रमर्द्दके ॥

शिम्बा । स्त्री ॰ सम्याम् । बीजगुप्त्याम । सेमफली ॰ इ ॰ भा ॰ ॥

शिम्बेति । शिञ • । उणादय इतिसाधु ॥

शिम्बाभव । पु • शमीधान्ये ॥

शिम्बि । स्त्री • शिम्बायाम् ॥ शिम्बी पुस्तकशिम्बीतिभेदात्शिम्बिर्द्विधा मता ॥ शिम्बिवयस्तमधुररसीपाकी स्निग्धगुरु । बल्या दाहकरप्रोक्ता संप्रलवातपित्तजित् ॥ शिम्बेति । शिञ • । कन् ॥

शिम्बिक । पु • कृष्णमुद्गे ॥

शिम्बिका । स्त्री • शिम्बायाम ॥

शिम्बिज । त्रि • शमीधान्ये ॥

शिम्बिपर्णी । स्त्री • मुद्गपर्ण्याम् ॥

शिम्बी । स्त्री • मुद्गपर्ण्याम ॥ शूकशिम्ब्याम् ॥ शिम्बायाम ॥

शिम्बीफलम् । न • आढक्यां । पीतपुष्पे । काञ्चनपुष्पके ॥

शिर । पु • पिप्पलीमूले ॥ मस्तके । शिरसि । यथा । शिरोवा चीशिरोऽहन्तीरशोवाचीरजस्यै तिश्रीधास्तरम् ।। पिशङ्गश्रासया शिरेकुतिरावलीयै ॥ शूकादिषु अर्थे ॥

शिरफल । पु • नारिकेले ।

शिरःशूलम् । न • मस्तकवेदनारोगे ॥ तदौषधंयथा । अश्वतापराजितां सपिप्पलीशुण्ठिसंयुतम् । परिपिष्ट शिरोलेपाच्छिरःशूलविनाशनम ॥

शिरज । पु • केशे • चिकुरे ॥

शिर । न • मस्तके । मूर्ध्नि ॥ तद्रोगनाशकौषधं यथा । शिरशिरःलेपात्पुष्पाम्लसकाञ्जिकमिति ॥ सश्रीतद्भेदोऽरैवक्रमश्चारवत् शिरसश्चतुर्विंशभेदाउक्ताः । यथा । आकम्पितकम्पितधु • धूत • विधूतमेव । परिवाहित • आधूत • अवधूत • तथाञ्चितम् । आकुञ्चित • पराहत • मुत्क्षिप्त • चाप्यधोगतम् । लोलितं • प्रश्नतयेति • चतुर्विंशविधंशिरःक्वति ॥ प्रधाने ॥ सेनाये ॥ शिखरे ॥ नगाग्रे ॥ शय्याये ॥ श्रीयते • उष्णीषादिना । श्रिञ सेवायाम् । श्रयते स्वाङ्गशिर किंत्सासुन् • धातो • शिरादेशश्च ॥

शिरसिज : । पु • कुन्तले ॥ आशे । केशे ॥ शिरसिजात । सप्तम्यामितिड । तत्पुरुषेकृतीति • इत्यादितिवाऽलुक् ॥

शिरस्कम् । न • शिरस्त्राणे ।

शिरस्त्रम् । न • शिरोरक्षणसन्नाहे । शीर्षण्ये । शीर्षके । टोप • इ • भा • ॥ शिर . त्रायतेऽनेन । त्रै ङ पालने । आतश्चोपक ॥

शिरस्त्राणम् । न • शिरस्त्रे ॥

शिरस्थ । पु • शिरोऽद्युताथये । कामादिना • निर्मलेकेशे । शी

र्व्वणि ॥ शिरसिभव · शिरसिधि तौवा । शरीरावयवाद्यत् ॥

शिरा । स्त्री॰ धमन्याम्॰ नाड्याम् ॥ श्रिणाति । शिञ् • बहुलमन्यत्रापीतिरक् ॥

शिरापत्र । पु॰ हिन्तालवृक्षे ॥ कपित्थे ॥

शिराखम् । न॰ कर्म्मरङ्गे ॥ षि॰ शिरासन्तते ॥

शिरालक । पु॰ अस्थिभङ्गवृक्षे ॥

शिरावृत्तम् । न॰ सीसके ॥

शिरि । पु॰ शलभे ॥ हिंस्रे ॥ हन्तरि ॥ शृणाति । शॄ॰ । कॄगॄशॄपॄकुटीत्यादिनाइ ॥ खड्गे ॥ शरे ॥

शिरीष । पु॰ कपीतने । भण्डिलि । सिरसइतिप्रसिद्धवृक्षे ॥ शिरीषोमधुरोनुष्णस्तिक्तस्तुवरोलघु । दोषशोथविसर्पघ्नः कासव्रणविषापहः ॥ शृणातिशीर्य्यतेवा । शॄ॰ । शॄपॄभ्यांकिच्चेति॰ ईषन् ॥

शिरीषपत्रिका । स्त्री॰ श्वेतकिणिह्याम् ॥

शिरोग्रहम् । न॰ चन्द्रशालायाम् ॥ शिरसिग्रहम् । इ॰ दि॰ स्त्र ॥

शिरोधरा । स्त्री॰ ग्रीवायाम् ॥ शिरसोधरा ॥ इ॰ दि॰ स्त्रः ॥

शिरोधानम् । न॰ उच्छीर्षके । उपधाने । गण्डौ । सिरहना॰ इ॰ भा॰ ॥ शिरोधीयतेऽत्र । डुधाञ् करणाधिकरणयोश्चेत्यधिकरणेल्युट् ॥

शिरोधि । स्त्री॰ ग्रीवायाम् ॥ शिरोधीयतेऽस्याम् । कर्म्मण्यधिकरणेचेतिकिः ॥

शिरोमणि । पु॰ स्त्री॰ शिरोधार्य्यरत्ने । चूडामणौ ॥ शिरसःमणि ॥

शिरोमर्म्मा । पु॰ शूकरे ॥

शिरोरत्नम् । न॰ शिरोमणौ ॥ शिरसोरत्नम् ॥

शिरोरुजा । स्त्री॰ ललाटपट्टव्याधौ । शिरोरोगे ॥

शिरोरुह । पु॰ केशे । मूर्द्धजे । शिरसिरोहति । इगुपधेतिकः ॥

शिरोरोग । पु॰ शिरःपीडायाम् ॥

शिरोवल्ली । स्त्री॰ बर्हिचूडायाम् ॥

शिरोव्रतम् । न॰ मर्दिचे ॥ श्रीदेवीभागवतैकादशस्कन्धे श्रीनारायणप्रोक्तेव्रतविशेषे ॥

शिरोवृत्तफल । पुं॰ रक्तापामार्गे ॥

शिरोवेष्ट । पुं॰ उष्णीषे । पेशीवस्त्रके ॥ इ॰ षि॰ श्रम ॥

शिरोवेष्टनम् । न॰ शिरोवेष्टे ॥

शिरोस्थि । न॰ मस्तकास्थनि । करोटौ । शिरस्त्राणे ॥

शिरोषिका । स्त्री॰ धारिशिरोषिका

म् । चतुर्दश्यामिवपारणम् । यथो क्तम् । ब्रह्माण्डोदरमध्यतुयानितो र्थानिसन्तिवै । पूजितानिभवन्तो ह भूताश्चपारणेकृतेकृति ॥

शिवलिङ्गम् । न॰ महादेवस्यशिश्ने ॥

शिवलोकः । पु॰ कैलासे ॥

शिववल्लभः । त्रि॰ शिवप्रिये ॥ शि वस्यवल्लभः । शिवोवल्लभोस्यवा ॥

शिववल्लभा । स्त्री॰ शतपत्र्याम् ॥

शिवशिखा । स्त्री॰ लिङ्गिन्याम् ।

शिववल्ली स्त्री॰ श्रीवल्ल्याम् ॥ लिङ्गिन्याम्

शिववाहनः । पुं॰ वृषभे ॥

शिवबीजम् । न॰ पारदे ॥

शिवशेखरः । पुं॰ वकद्रुमे ॥ ध त्तूरे ॥ शिवमस्तके ॥

शिवसायुज्यम् । न॰ शिवेनसहयोगे ॥

शिवसुन्दरी । स्त्री॰ भवनेश्वर्याम् । गौर्याम् ॥

शिवा । स्त्री॰ गौर्याम् । भवान्याम् । यथा । शिवामुक्तिः समाख्या तायोगिनांमोक्षगामिनी । शिवा यसांजपेद्देवीशिवालोकेततःसुखं तीतिदेवीपुराणम् ॥ अपिच । शि वाकल्याणरूपाचशिवऋद्धाचशिवप्रि या । प्रियेद्दातरिवाशब्दः शिवातेन प्रकीर्त्तितेतिब्र॰ वै॰पुराणम् ॥ पु नश्च । शिवकल्याणवचनश्चैवोत्कृ ष्टवाचकः । समूहश्चाचकश्चैवदा कारोदातृवाचकः ॥ श्रेष्ठ . सङ् घोत्कृष्टदात्रीशिवातेनकीर्त्तिता । श्वपरांशिमूर्त्तिसतांशिवातेन प्रकीर्तितेतिचब्र॰ वै॰ पु॰ ॥ च त्मानुभूतिनिष्पातोवेतभावविव- र्जिता । तेपिपमृगाभवल्य नामित्थसर्वेसमांशिवेल्युमासंस्थि ता ॥ मुक्तौ ॥ फेरौ ॥ सत्व्यापला याम् ॥ झाटामलौषधौ ॥ अभ यायाम् ॥ आमलक्याम् ॥ श म्याम् ॥ हरिद्रायाम् ॥ दूर्वाया म् । गोरोचनायाम् ॥ कुटिशक्ति विशेषितारायाम ॥ शिवमस्यस्त्या शिवोशिवभर्तृत्वेनयस्याकृतिशा । अपर्णायाम् ॥ शिव । शिवाख्या देवताग्निभक्ता अपर्णायाम् । शकुनाविद्कत्वात् ॥ शिवंकरोति । तत्करोतीतिणिच् । पचाद्यच् ॥ शिवयतिवा ॥

शिवाक्षम् । न॰ रुद्राक्षे ॥

शिवाटिका । स्त्री॰ वनपत्र्याम् ॥

शिवात्मकम् । न॰ सैन्धवे ॥ त्रि॰ शिवमये ॥

शिवानी । स्त्री॰ जयन्तीवृक्षे ॥ दु र्गायाम् ।

शिवापीडः । पुं॰ चन्द्रमसि ॥ ब कवृक्षे ॥ शिवस्यापीडः ॥

शिवाप्रियः । पुं॰छागे ॥

शिवाफला । स्त्री॰ शमीवृक्षे ॥

शिवाराति । पु॰ सारमेये ॥

शिवारुतम् । न॰ शृगालध्वानिनादे ॥

शिवालय । पु॰ हरमन्दिरे ॥ र क्तातुलस्याम ॥ श्मशाने ॥

शिवालु । पु॰ शृगाले ॥

शिवास्मृति । स्त्री॰ जयन्तीवृक्षे ॥

शिवाह्लाद । पु॰ बकवृक्षे ॥ शि वस्यानन्दे ॥

शिवाह्वय । पु॰ पारदे त्रि॰ शिव नामके ॥

शिशाखा । स्त्री॰ रुद्रजटायाम् ॥

शिवि । पु॰ उशीनरदेशाधिपतौ भूपतिवरे ॥ औशीनरे ॥ उदारो ऽयमशीपतिर्येनस्वमांसश्येनायदत्वा॰ शरणागत . कपोतोरक्षित ॥ भू र्जपत्रवृक्षे ॥ व्याडि । हिंस्रपशौ ॥

शिविका । स्त्री॰ याप्ययाने । भाषा न॰डोला॰चौपाला॰पालकी॰ इ त्यादिभाषाप्रसिद्धे बहुविधे । शि बीरथे ॥ शिवेव । शिवंकरोतिशिवा । तत्करोतिण्यन्तात्॰ वुन् ॥

शिविरम् । न॰ युद्धवेश्मनि ॥ नि वेशे । आगन्तुकसैन्यवसतौ ॥ सेनो यावासस्थाने ॥ राजनिवेशे ॥ य थशिविरलक्षणम् । श्रीभगवानुवा च । शिविरपरिखायुक्तमुच्चैः प्राका रवेष्टितम् । युक्तद्वारचतुष्कसिंहद्वा रपुरस्कृतम् ॥ युक्तं चित्रैर्विचित्रैश्च कृत्रिमैः कपाटकैः । निर्मितव्रचर

स्थितप्रसिद्धश्चपुरस्कृतम् ॥ सुत्र स्ययचन्द्रवेध प्र.ड्. यष्टतथैवचे ति । विशेषोव्रह्मवैवर्त्ते द्रष्टव्य कृष्णखण्डे १०२ अध्याये ॥ श्र मृत्यञ्च । शवगतौ । वाहुलकात्कि रच॰ अतद्वृत्वञ्च ॥ यद्वा । शेरते राजवलान्यस्मिन । शीङ्स्वप्ने । वाहुलकात्किरच् । शीङोवुगदृ स्वश्च ॥

शिवो । स्त्री॰ गौर्याम् ॥ प्रयोगेष्वे व ॥

शिवीरथ । पु॰ शिविकायाम् ॥ इ॰ हाली ॥

शिवेष्ट । पु॰ बकवृक्षे ॥ त्रि॰ शि वप्रिये ॥

शिवेष्टा । स्त्री॰ दूर्वायाम् ॥

शिशयिषु । त्रि॰ शयितुमिच्छौ ॥ शी ङः सन्नन्तादुप्रत्यय ॥

शिशिर । पु॰ हिमे । तुषारे ॥ द्वीपा न्तरप्रसिद्धगिरिविशेषे ॥ पु॰ न॰ ऋतुविशेषे । तपस्तपस्ययोः । माघ फाल्गुनयोः । काम्पने । शीते । हिमकूटे ॥ अस्यगुणायथा । शिशि र शीतलोऽतीवरूक्षोवातान्निवर्द्ध न । अपिच । शिशिरशीतलवध्य शीतवातप्रकोपचमिति ॥ अत्रका लश्यापयम् । मिष्टान्नभोगोमधुरप्र चादीकलवपुष्पादियुत . घृधात्त । क्षौमोसुधौतारुकलेवरस्थ प्रसु

रच विष्णुपुराणे २ अंशे १२ अ
ध्यायेयथा । शिशुमारस्तुय प्रोक्त
सध्रुवोयत्रतिष्ठति । सन्निवेशस्तत
स्यापिश्रृणुष्वमुनिसत्तम ॥ यदह्नाकु
रुतेपापंदृष्ट्वातन्निशिमुच्यते । ताव
त्यश्चैवतारास्ता शिशुमाराश्रिता
दिवि ॥ तावन्त्यैवतुवर्षाणिजीवत्य
भ्यधिकानितु । उत्तानपादस्तस्याथ
विज्ञेयोह्युत्तरोहनु ॥ यज्ञोऽधर
श्चविज्ञेयोधर्मोमूर्द्धानमाश्रित ॥
हृदिनारायणश्चास्तेअश्विनौपूर्वपा
दयो ॥ वरुणश्चार्यमाचैवपश्चिमेत
स्यसक्थिनी । शिश्नेसंवत्सरस्तस्यमि
त्रोऽपान समाश्रित ॥ पुच्छेऽग्नि
श्चमहेन्द्रश्चकश्यपोऽथततोध्रुव । ता
रकाशिशुमारस्यनास्तमेतिचतुष्टय
म ॥ इत्येषसन्निवेशोयंपृथिव्यांज्यो
तिषांतथा । द्वीपानामुदधीनाञ्चप
र्वतानाञ्चकीर्त्तित ॥ वर्षाणाञ्च
नदीनाञ्चयेचतेषुवसन्तिवै । तेषां
स्वरूपमाख्यातसंक्षेप श्रूयतां
पुन ॥ यदम्बुवैष्णव कायस्ततो
विप्रवसुन्धरा । पद्माकारासमुद्भूता
पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि
विष्णुर्भुवनानिविष्णुर्वनानिविष्णु
र्गिरयोदिशश्च । नद्य समुद्राश्च
सएवसर्वंयदस्तियन्नास्तिचविप्रवर्य
॥ ज्ञानस्वरूपोभगवान्यतोऽसावशे
षमूर्त्तिर्नतुवस्तुभूत ॥ ततोहिशै

लाब्धिधरादिभेदान्जानीहिविज्ञा
नविजृम्भितानि ॥ यदाहिशुद्धं नि
जरूपसर्वंकर्म्मक्षयेज्ञानमपास्तदो
षम् । तदाहिसङ्कल्पतरो फला
निभवन्तिनोवस्तुषुवस्तुभेदा ॥ मही
घटत्वं घटत कपालिकाकपालिका
चूर्णरजस्ततोऽणु । जनै स्वक
र्मस्तिमितात्मनिश्चयैरालक्ष्यते
ब्रूहिकिमत्रवस्तु । इति ॥ अपिच
॥ तारामयभगवत शिशुमाराकृ
तिप्रभो । दिविरूपंहरेर्यत्तुतस्य
पुच्छेस्थितोध्रुव ॥ सैषभ्रमन्भ्रा
मयतिचन्द्रसूर्यादिकान्ग्रहान् ।
भ्रमन्तमनुतंयान्तिनक्षत्राणिचचक्र
वत् ॥ सूर्याचन्द्रमसौतारानक्षत्रा
णिग्रहै सह । वातानीकमयैर्बन्धै
र्ध्रुवेबद्धानितानिवै ॥ शिशुमारा
कृतिप्रोक्तंयद्रूपंज्योतिषांदिवि । ना
रायणोयनंधाम्नांतस्याधार स्वयं
हृदि ॥

शिशुवाहक । पुं । वनच्छागे । त्रि । वालकवोढरि ॥

शिशुवाहक । पु । पण्डिते । वनच्छागे ॥

शिश्न । पु । मेढ्रे । मेहने । शिश्नसि ॥ शशति । शश । शिश्नोतिवा । शिश्न् निशाने । वाहुलकान्नक् । पृषोदरादि ॥

शिश्नक । पु । मेढ्रे ॥ स्वार्थेकन् ॥

शिश्निदान । त्रि । चक्षुषाकर्म्मणि ।

तासत्वले । अम्बुकणेषु ॥ शीकते । शीकसेचने । तालव्यादि । स्फाकेररन्निति वा । ऊचकादरन् ॥ न० सरलद्रवे ॥

शीघ्रम् । न० उशीरे । नलदे । चक्राङ्के ॥ त्वरिते । लघुनि । क्षिप्रे । चरे । द्रुते । सत्वरे । चपले । तूर्णे । अविलम्बिते । आशुनि ॥ नु पर्यायोऽयं क्रियाविशेषणवद्द्रव्ये वर्त्तमानः क्लीबे । यथा० शीघ्रं कुरु इति । सत्वगामी तुर्याश्च विप्र । यथा । अशीघ्रा जरा० शीघ्रो मृत्युः शीघ्रश्रयस्तथेति ॥ शिङ्घति व्याप्नोति । शिघि आघ्राणे । शीघ्रादयश्चेति रगन्तो निपातितः ॥ त्रि० द्रुतगतौ ॥

शीघ्रग । त्रि० नभस्वति । वायौ ॥ त्रि० त्वरितगामिनि ॥

शीघ्रगामी । त्रि० आशुगमनशीले । द्रुतगतौ ॥

शीघ्रचेतन । पुं० शुनि । त्रि० त्वरितचेतनायुक्ते ॥

शीघ्रजन्मा । पुं० पूतिकरञ्ज ॥

शीघ्रपुष्प । पुं० वकवृक्षे । अगस्त्यागे ॥

शीघ्रवेधी । पुं० लघुहस्ते । शिक्षितास्त्रे । आशुशरादिना लक्ष्यवेधकर्त्तरि ॥

शीघ्रा । स्त्री० उदुम्बरपर्णीम् । दन्त्याम् ॥

शीत । पुं० वानीरे । वञ्जुले । वेतसवृक्षे । शीतमस्यास्ति । अर्श आद्यच् । शीतवीर्यत्वेपाद्दाश्ममनाक्ष । उद्दाले । बहुवारके ॥ निम्बे ॥ पर्पटे । कर्पूरे ॥ अशनपर्णीम् ॥ नरकान्तरे । हिमर्त्तौ । न० हिमगुणे । जले ॥ त्वचे । दारचीनी० इ० भा० ॥ शीतं तुषारं वानीरं बहुवारं द्रुमेषु चेत्यजयः ॥ त्रि० शीतले । अलसे शीतस्पर्शे । शीतमिव अतेऽस्य । आर्श आद्यच् ॥ विशेष्यीभूत शीतशब्दो नपुंसकम् । यस्मिन् द्रव्ये शीत स्पर्शः स्यात् तद्विशेषणीभूतस्तु शीतशब्दो विशेष्यनिघ्नः ॥ श्यायतक्तिर्णीत । श्यैङ् गतौ । भावे क्त । द्रवमूर्त्तिस्पर्शयोः श्य इति सम्प्रसारणम् । हलः इति दीर्घः । श्योऽस्पर्श इति पर्युदासान्न निष्ठानत्वम् ॥

शीतक । पुं० शीतकाले ॥ ऋत्वाणु अयशीते० इ० यावादिषु पाठात् स्वार्थे कन् ॥ अशनपर्णीम् ॥ त्रि० सुस्थिते । सुखे ॥ अलसे । दीर्घसूत्रिणि । मन्दे ॥ शीतं करोति । शीताख्याभ्याकारिणीति कन् ॥ वृश्चिके ॥

शीतकर । पुं० चन्द्रे ॥ त्रि० शीतलपाणियुक्ते ॥ शीतकारिणि ॥

शीतकषाय । पु॰ हिमकषाये यथा । चूर्णा द्रव्यपल सम्यकषड्भिर्नीरप ले प्लुतम् । सर्वरीमुषित म स्याद्धिम शीतकषायकइतिवैद्य कम् ॥

शीतकाल । पु॰ हिमर्तौ । मार्गशी र्षयो । हिमर्त्तौ । कूपोदकवटच्छाया श्यामास्त्रीइष्टकागृहम । शीतका लभवेदुष्णमुष्णकालेचशीतलम् । हेमन्तशिशिरर्त्तौ ॥

शीतकिरण । पुं॰ हिमांशौ । चन्द्र मसि ॥ यथा । कान्ते कीयमुदेतिशी तकिरणोजात ' कुतोवारिधौकस्ते सुन्दरिसोदर . करमहोदर्त्तस्तदी ये सर्गे । धन्यास्त्वयुवतीसतीकुच वतीभ्रातापिधन्यस्तवइत्य शीपरि हासकेलिकलयासुग्धीहरि पातु व ॥

शीतकुम्भ । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजद्रव्यविशेषे । शिउलीछोप॰ इ॰ गौ॰ भा॰ प्र॰ । अस्या पर्यायायथा । शीतलीशीत कुम्भीचश्वकपुष्पाअपिप्लवेतिरत्नमा ला ॥

शीतकृच्छ्र ' । पु॰ व्रतविशेषे । यथा । त्र्यहंशीतपिबेत्तोयत्र्यहंशीतंपय ' पिबेत् । त्र्यहंशीतघृतपीत्वावायुभ क्ष . परंत्र्यहमितियमस्मृ ति ॥

शीतसारम् । न॰ श्वेतटङ्कणे ॥

शीतगन्ध । पु॰ श्वेतचन्दने ॥

शीतगु । पु॰ चन्द्रे ॥

शीतचम्पक . । पु॰ आतपर्णे । त र्पणे ॥ दिशि ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूर्यवल्ल्याम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गाया म् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाट्यालके ॥ गुञ्जा याम् ॥ काकोल्याम् ॥

शीतपुष्प ' । पुं॰ अर्कहर्षे । शिरीष ॥ न॰ परिपेलि ॥ शैलेये ॥

शीतपुष्पक : । पुं॰ अर्कहर्षे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ । पु॰ कर्पूरे ॥ त्रि॰ शीत लप्रभायुक्ते ॥

शीतप्रिय । पुं॰ पर्पटे ॥ त्रि॰ शी तप्रीतियुक्ते ।

शीतफल ' । पुं॰ उदुम्बरे ॥ वकुलवा रे । शिलौ ॥ पीलौ ॥ शीतानिफ लानियस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु । पु॰ चन्द्रे ॥ शीताभा नव किरणायस्य . ॥

शीतभीत : । त्रि॰ शीतार्ते ॥

शीतभीरु ' । स्त्री॰ मल्लिकायाम् ॥ शीतात्॰ भीरु . ॥ त्रि॰ शीतभी ते ॥

शीतभीरुक । त्रि॰ शीतार्त्त

शीतभीरुका । स्त्री॰ मल्लिकायाम् ॥

शीतमञ्जरी । स्त्री॰ शेफाल्याम् ॥

शीतमयूख । पु॰ चन्द्रे ॥ कर्पूरे ॥

शीतमरीचि । पु॰ इन्दौ । कर्पूरे ॥

शीतमूलकम् । न॰ उशीरे ॥

शीतरम्य । पु॰ प्रदीपे । त्रि॰ शीतेरमणीये ॥

शीतरश्मि । पुं॰ चन्द्रे ॥ कर्पूरे ॥

शीतरस । पु॰ शीधुप्रभेदे ॥

शीतल । पु॰ असनपर्य्याम् ॥ अर्हद्विशेषे ॥ सुधांशौ । चन्द्रे । व्रतविशेषे ॥ चम्पके ॥ बहुवारके ॥ धूनके । राले ॥ कर्पूरभेदे ॥ न॰ पुष्पकासीसे ॥ शैलजे ॥ मलयोद्भवे । चन्दने ॥ पद्मके ॥ मौक्तिके ॥ श्वेत्ये ॥ वीरणमूले ॥ त्रि॰ सुषीमे । शिशिरे ॥ शीतगुणोऽस्यास्ति । सिध्मादित्वाल्लच् ॥ शीतलातिवा । लाभादाने । आतद्वतिका ॥

शीतलक । पुं॰ मरुवके ॥ न॰ सितोत्पले ॥

शीतलच्छद । पु॰ चम्पके ॥ शीतलपर्णे ॥

शीतलजलम् । न॰ उत्पले ॥ शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहेषु विषेरक्तेमदात्यये । भ्रमेश्रमेविदग्धेऽन्नेतमकेवमथौतथा । ऊर्द्ध्वगेरक्तपित्ते चशीतमम्भः प्रशस्यते ॥ पार्श्वशूले प्रतिश्यायेवातरोगेगलग्रहे । आध्माने स्तिमितेकोष्ठे सद्यःशुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषुविद्रधौ ॥ हिक्कायांस्नेहपाने च शीताम्बु परिवर्ज्जयेत् ॥

शीतलत्वम् । न॰ शीतलतायाम् ॥ जडत्वे ॥

शीतलत्वकम् । न॰ शीतलत्वे ॥

शीतलप्रद । पु॰ चन्दने । त्रि॰ हिमदातरि ॥

शीतलमम् । न॰ तीर्थविशेषे ।

शीतलवातक । पु॰ असनपर्य्याम् ॥

शीतला । स्त्री॰ शीतलीवृक्षे ॥ यथा । शीतलाशीतलोशीतकश्शीघ्राखुरपुष्पकेति शब्दचन्द्रिका ॥ कुट्टिन्याम् । जलेरुहायाम् ॥ बालुकायाम् ॥ आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्र्याम् ॥ यथा । नमामि शीतलां देवीं रासभस्थांदिगम्बरीम् । मार्जनीकलशोपेतां सूर्पालङ्कृतमस्तकामिति स्कन्दपुराणम् ॥

शीतली । स्त्री॰ जलजवृक्षविशेषे । शीतकुसुमाम् ॥ कालानुसारि

यायाम् ॥

शीतवल्क । पु० उदुम्बरे ॥

शीतवीर्य्यक । पु० प्लक्षवृक्षे ।

त्रि० शीतलवीर्य्ययुक्ते ॥

शीतशिव । पु० सक्तुफलावृक्षे ॥ मधुरिकौषधौ ॥ न० सैन्धवलवणे । मा गिसन्थे ॥ शैलेयनामगन्धद्रव्ये ॥ शीतमस्यास्ति । अच् । शिवमस्यास्ति । अच् । शीतश्चासौ शिवश्च ॥

शीतशिवा । स्त्री० मिश्रेयायाम् । शमीवृक्षे ॥

शीतसह । पुं० पीलुवृक्षे ॥ नीलसिन्धुवारके ॥

शीतसहा । स्त्री० नीलसिन्धुवारे । वासन्त्याम् ।

शीतहर । पु० कुचोपधि ॥ शीतम्हरति । हृज० । हरतेरनुद्यमनेऽजिन्त्यच् ॥ त्रि० शीतापहे ॥

शीता । स्त्री० रामपत्न्याम् । सीतायाम् ॥ यथा । शीतानभःसरिति लाङ्गलपद्धतौ च शीताद्यानलरिपौ सहधर्म्मिणीच । शीतश्च तद्विमद्यु ऽबलदन्विलेचशीतोऽलसेचचन्दुवा रतरीचदृष्ट ॥ शतिलालघ्यादौध रस्थि ॥ दूर्वायाम् ॥ शिल्पिन्यामोषधौ ॥ अतिबलायाम् । कुटुम्बिन्याम् । पथ्यायाम् ॥ कौसुद्याम् । ज्योत्स्नायाम् । शीतेम । गत्यर्थेत्यादिनाशीक्त । टाप् ॥

शीतांशु । पु० विधौ । चन्द्रे ॥ कर्पूरे ॥

शीतांशुतैलम् । न० कर्पूरतैले ॥

शीताङ्ग । त्रि० शीतलाङ्गे ॥

शीताङ्गी । स्त्री० हंसपद्याम् । गोधापद्याम् ॥ शीतलाङ्ग्याम् ॥

शीताद । पु० दन्तरोगविशेषे ॥ तल्लिङ्गानयथा । शोणितं दन्तवेष्टेभ्योकस्मात्प्रवर्त्तते । दुर्गन्धीनिसकृष्णानिप्रक्लेदीनिमृदूनिच ॥ दन्तमांसानिशीर्य्यन्ते पचन्तिचपरस्परम् । शीतादोनामसव्याधिः कफशोणितसम्भवः ॥ तच्चौषधंयथा । शीतादेहृतरक्ते तुतोयनागरसर्षपान् । निष्क्वाथ्यत्रिफलाञ्चापिकुर्य्याद्गण्डूषधारणम् ॥ कासीसचिप्रङ्गुष्ठामनशिलासप्रियङ्गुतेजोह्वा । एतच्चूर्णं मधुयुक्शीतादेपूतिमांसहरम् ॥ तैलोह्वा० तेजवत्या । तैलघृतवाचात्र शीतादेसम्प्रशस्यते ॥ इ० भा० प्र० म ॥

शीतार्त्त । त्रि० शीतार्त्ते । शीतेनऋतः ॥

शीतालु । त्रि० शीतार्त्ते । शीतम्सहते । शीताच्चाद्यसहत्वमित्यनुद्यलु ॥ शीतालुराच्छादयति ॥

शीतावजा । स्त्री० महासमङ्गायाम ॥

शीताश्मा । पु० चन्द्रकान्तमणौ ॥ शीतलपाषाणे ॥

शीतीभाव: । पुं० मोक्षे ॥ इ० त्रि०

शिष ॥

शीतोत्तमम् । न॰ जले ॥

शीत्कार : । पु॰ वरस्त्रीणां रतिकाल ध्वनौ ॥ यथा । शीत्कारोरसनारा च सुरतैवरयोषिताम् ॥

शीत्कृतम् । न॰ शीत्कारे ॥ त्रि॰ धर्षिते

शीधु : । पु॰ न॰ इक्षुरसे ॥ मद्ये ॥ पु॰ स्त्री॰ आसवे ॥ यथा । शीधुरिक्षुरसे पक्वैरपक्वैरासवोभवेत् । इतिमाधव ॥ अपिच । इक्षो पक्वैरसै . सिद्ध शीधु : पक्वरसश्च स । आमैस्तैरेव सिद्ध स तु शीतरस स्मृत ॥ शीधु पक्वरस श्रेष्ठ स्वराग्निबलवर्णकृत् । वातपित्तकरोसद्य . स्नेहनोरोचनो हरेत् ॥ विबन्धमेद : शोफार्श : शोषोदरकफामयान् । तस्मादल्प गुण शीतरस संलेखनस्मृ॰ 'त ' ॥ शेरतेऽनेन । शीङ्धुक ॥ शीध्य तेऽनेनेतिशीधुरितिमल्लिनाथ .

शीधुगन्ध ' । पु॰ बकुलवृक्षे ॥ मद्य गन्धे ॥ यथा । बिभ्यासेस्मसुशीधुग न्धिललनावक्त्रासवामोदितैर्भ्रान्तिभ्रं रमन्मथोऽमरसैकनिद्रचन्द्रा तपा सर्वस्याकृतिदीपितास्वकृतिचि रात्प्राप्ताभिषेकाकृतिरत्नाकृति तापसाकृतिरिदं बाधस्तेजंगस्थयती ॥ कृत्य शिवाभिख्याव्यवहरन्ति ॥

शीधुगन्धि : । त्रि॰ सुरागन्धयुक्ते ॥

शीधुप ' । त्रि॰ मद्यपे । सुरापे ॥ शीधुपिबति । पापाणि । गापोष्ठगि त्यत॰ पिबति सुराशीध्वोरितिवा र्तिकात् टक् । स्त्रियांटित्वान्ङीपि ॰ शीधुपी ॥

शीधुपुष्प ' । पु॰ कदम्बे बकुले ॥

शीधुपुष्पी । स्त्री॰ धातक्याम् ॥

शीधुरस ' । पु॰ आम्रे ॥

शीधुसंज्ञक : । पु॰ बकुले ॥

शीन । पु॰ अजगरे ॥ त्रि॰ मूर्खे ॥ द्रवस्याया काठिन्यप्राप्तेघृता दौ ॥ श्यैङ्गतौ । क्त । द्रव मूर्तिस्पर्शयो श्य इतिसम्प्रसार णम् । श्योऽस्पर्शइतितस्यन ॥

शीभव . । पु॰ शीकरे ॥

शीर । पु॰ अजगरसर्पे । सूर्ये ॥ शेते । स्फायितञ्चीतिशीङोरक् ॥

शीर्षम् । न॰ स्थौणेये ॥ त्रि॰ त नौ । कृशे ॥ विशीर्णे ॥ शीर्यते स्म । शृ॰ । क्त । ऋदन्ताद्वपर । रदाभ्यामितिन । णत्वम् ॥

शीर्षपत्र । पु॰ पट्टीलोध्रे ॥ कार्णि कारवृक्षे ॥ निम्बे ॥ न॰ विशी र्णपत्रे ॥

शीर्षपर्ण : । पु॰ निम्बवृक्षे । न॰ विशीर्णपत्रे ॥

शीर्षपाद : । पु॰ मण्डिपध्वजे ॥ यमे ॥

शीनवा । शीलमसमाधौ॰ यथन्ता हो॰ घञ॰ शीवा । यद्वा । शीलोशुकसकवलजवालनद्वति॰ लक । अर्द्धर्चादि ॥

शीलनम् । न॰ पाठनिश्चये । गुणन्यास् । भविन्यास् ॥

शीलवान् । त्रि॰ सुखभावयति । सुशीले । सद्वृत्ते ॥

शीलहीन । त्रि॰ अनियतपुरुषे दास्यादिजने ॥

शीला । स्त्री॰ कौण्डिन्यमुनेः पत्न्याम् ॥

शीलितम् । न॰ शीर्णे ॥ त्रि॰ अभ्यस्ते ॥ शील्यतेस्म । शील॰ । क्त ॥

शीली । त्रि॰ शीलवति ॥ शीलमस्यऽस्य । सुखादिभ्यसेतीनि ॥

शीवा । पु॰ अजगरे ॥ शेते । शीङ् स्वप्ने । शीङ्श्रुषिरुषिभिश्चित् धूम्र क्वनिप् ।

शीवलम् । न॰ शैवाले । शैवाले । जलेशैतेतिष्ठतिशीङ्कोवलन् । बाहुलकाद्गुणाभाव ॥

शु । अ॰ पूजायाम् ॥ आश्चर्ये ॥

शुक । पु॰ व्यासमुते । बादरायणौ ॥ कीरे । मेधाविनि । फलाशने । तोता॰ इ॰ भा॰ प्र॰ पक्षिणि । अशुभसूचकत्व यथाप्रमार्गे॰ शुभंभवेद्दक्षिणत प्रविशे । वनेचरा काकशुका प्रयातु स्युः सिद्धिदा सम्मुखमापतन्त । इति ॥ रावणसचिवविशेषे । शिरीषवृक्षे ॥ न॰ ग्रन्थिपर्णे ॥ वस्त्रे । वस्त्रावृत्ते ॥ शिरस्त्रे ॥ शोचति॰ शवर्तिशा । शुचशोके॰ शुगतीवा । शुकवल्कोल्काइतिसाधु ॥ शेभते । शुभदीप्तौ । पूर्ववत्साधु ॥ यद्वा । शोकति । शुकगतौ ॥ इगुपधेतिक ॥

शुकच्छदम् । न॰ स्थौणेये ॥

शुकजिह्वा । स्त्री॰ शुकाननायाम् । सुवाठोठी॰ इ॰ भा॰ प्र॰ ॥

शुकतरु । पु॰ शिरीषवृक्षे ॥

शुकतुण्ड । पु॰ छिङ्गुलभेदे ॥ सपीत शुकतुण्डक ॥

शुकद्रुम । पु॰ शुकतरौ ॥

शुकनामा । स्त्री॰ शुकजिह्वायाम् ॥

शुकनाशन । पु॰ दद्रुघ्ने ॥ त्रि॰ शुकनाशके ॥

शुकनास । पु॰ शोणकद्रुमे ॥ शुकनासेवपुष्पमस्यास्ति । अर्शआद्यच् ॥ त्रि॰ शुकवन्नासायुक्ते ॥

शुकपिच्छ । स्त्री॰ शुकशिम्ब्याम् ॥

शुकपुच्छ । पु॰ गन्धके ॥ शुकस्य लाङ्गूले ॥

शुकपुच्छकम् । न॰ स्थौणेये ॥

न० । मज्जजातधातौ । तत्पर्याया
यथा । शुक्रं० तेजोरेतसीच० बी
जवीर्येन्द्रियाणिचेति ॥ नेत्ररोगवि
शेषे । शुक्लवर्णे । शुभ्रे । त्रि० त
द्वर्णविशिष्टे ।, शोचयति । कर्म
ण्ये इतिनिपातनात्कुत्वेऋज्रस्वच
रन्प्रत्ययश्च ॥ शोचतीतिशुक्र ' ।
शुचशोके । पूर्ववत् । शोचत्यने
नवा ॥ विरहिणः शोचन्त्यस्मिन्
० शुक्रोज्येष्ठमास ॥

शुक्रकर ' । पुं० मज्जनि ॥ त्रि० वी
र्यकारके ॥

शुक्रच्छदम् । न० सुपतुलस्यां ॥

शुक्रभुक०ग० । पुं० मयूरे ।

शुक्रभू । स्त्री० मज्जनि । त्रि० वीर्यो
त्पन्ने ॥

शुक्रल । त्रि० बहुवीर्यवति ॥ वीर्य
दे ।।

शुक्रला । स्त्री० उच्चटायाम् ॥

शुक्रवार । पुं० भृगुवारे । शुक्रग्रह
भोग्यदिने ॥

शुक्रशिष्य । पुं० दितिसुते । असुरे ॥
शुक्रस्यशिष्य ॥

शुक्राङ्ग ' । पुं० मयूरे ।

शुक्रास्य । पुं० नष्टभृगौ । अन्यथा
वादिनिषेधेयथाजग्द्राजमार्तण्डे
। याबाजिबाह्न्नतक्षेत्रप्रासाद
चूडाकरणवृत्तैषौ ॥ नष्टेभृगौनो
मन्दिरेन्द्रादौदेवप्रतिष्ठामपिकर्णवे

धमिति ।

शुक्रियम । न० शुक्रेवने० हविषि
॥ शुक्रोदेवताऽस्य । शुक्राद्घन् ॥

शुक्ल । पुं० विष्कम्भादियोगान्तर्ग
तयोगविशेषे ॥ वर्णविशेषे । तत्
पर्यायायथा । शुक्लशुभ्रशुचिश्वेत
विशदश्येतपाण्डुराः । अवदात
सितौगौरोवलक्षोधवलोऽर्जुनइति
॥ वत्सरविशेषे ॥ तत्फलंयथा
। रोगाबहुविधाश्चैवमनुष्याबाजिकु
ञ्जराः । सर्वएवप्रणश्यन्तिशुक्लेव
र्षेवरानने ।। इति ॥ शुक्लैरण्डे ॥
शुक्लरक्षे । न० रजते । रूप्य ॥
नवनीते ॥ नेत्ररोगविशेषे ॥ यथा
। सुश्वेतंमृदुशुक्लाख्यंशुक्लंतदृष्टेते
चिरात् ॥ चिकित्साचयथाभुक्ता
पाचितस्यसुष्ठाचसुशीर्यदिदृश्यते
चचिरेणवलहारितिमिराण्यपि
हति ॥ स्नानंकृष्णतिलैर्वापिचत्व,
ध्यमनिलापहम् । अ.मलै स्तत
त स्नानं परं दृष्टिबलावहम् ॥ शु
ण्ठीनिम्बदलैः पिण्डो सुखोष्णा
स्वल्पसैन्धवाः । धार्यानेत्रेऽनिलघ्नो
घ्नशोथकण्डुव्यथाहरो ॥ त्रिफला
पिण्डकानेत्रेवातपित्तकफापहेति
॥ शुभकर्मणि ॥ देवयानमार्गे ॥
त्रि० शुभ्रवर्णयुक्ते ।। शुक्लोगुणोऽस्या
ऽस्ति० अस्मिन्वा । मतुप् । गुण
वचनेभ्योमतुपोलुगिष्टइतिलुक् ।।

विद्यायाम्। शुभ्रवर्णायाम्॥ टाप्॥

शुक्लाङ्गी। स्त्री० शेफालिकायाम्॥

शुक्लापाङ्ग। पु० मयूरे। त्रि० शुक्लवर्णनेत्रान्ते॥

शुक्लार्क। पु० सितपर्णासे। वर्वराप्रभेदे॥

शुक्लार्म्म। न० चक्षूरोगविशेषे॥ शुक्ले तत्र दृग्शुक्लार्म्मशुक्लतहर्त्तेति चिरात्॥

शुक्लिमा। पु० शुक्लत्वे॥

शुक्लोपल। पु० श्वेतपाषाणे॥

शुक्लोपला। स्त्री० शर्करायाम्॥

शुचि। पु० वायौ॥ तेजसि। चित्रे॥ शुच्यति। शुषशोषणे॥ शुचि कुचिशुचिभ्य किस॥

शुङ्ग:। पु० न० वटे। आम्रातके॥ पर्क्याम्। अङ्कुरे। आर्य्ये॥

शुङ्गा। स्त्री० अश्वत्थे॥ नवपल्लवकोश्याम्॥

शुङ्गाकर्म्म। न० पुंसवनसंस्कारविशेषे॥

शुङ्गी। पुं० अश्वत्थ॥ वटद्रुमे॥

शुच्। स्त्री० शोके॥ शोचनम्। शुचशोके। सम्पदादित्वात्क्विप्॥ वयप्राप्तेस्त्वौ पितरितनयेवाशुद्धिवा। शुचासन्तप्यन्ते भ्रमसुदरतोऽडजडधिय.। असारेसंसारेविरसपरिपाकेतुविदुषांवियोगोवैराग्यदृढ



यतिवितन्वन्शमसुखम्॥

शुचा। स्त्री० शोके॥

शुचि। पु० ग्रीष्मे॥ अग्नौ॥ सौराग्नौ॥ यथा। पावक पवमानश्च शुचिरग्निश्चतेत्रय। निर्मथ्य पवमान: स्याद्वैद्युत पावक स्मृत.॥ यश्चासौतपतेसूर्य. शुचिरग्निस्त्वसौस्मृत। तेषान्तुसन्तताअन्येचत्वारिंशच्चपञ्च च॥ पावक पवमानश्चशुचिस्तेषांपिताचय:। एतेषांवैरामपञ्चाशद्वक्रय परिकीर्त्तिता.॥ कू० कौर्म्मे १२ अध्याय॥ चित्रकी॥ शृङ्गाररसे॥ उत्तमयुवप्रकृतिकत्वेन० जुगुप्सारहितत्वात्० शुचि शृङ्गाररस॥ आषाढेमासि॥ शुचिपवित्र करोति० शुचयति। तत्करोतीतिण्यन्तात्अच्॥ यद्वा। शोचति। अन्तभावितण्यर्थात्शुचेरिगुपधात्किदितीन्॥ शोचतिविरहिणोऽस्मिन्निति वा। शोचत्यनेनवा॥ विदुषि॥ शोचतिजनङ्क्लिश्यमानम्॥ उपदाशुक्लसन्धि। ज्येष्ठमासि॥ स्त्री० कश्यपपत्न्यास्ताम्राया सुतायाम्॥ त्रि० धवले॥ शुद्धे॥ यथा। आसनशयनयानंजयापत्यंकमण्डलुम्। आत्मन. शुचिरेतानिपरेषामशुचीनितु॥ स्वभावत. सत्कारतश्चशुद्धे॥ बाह्याभ्यन्तरशौचसम्पन्ने॥ वी

सिद्धापिगृह्यतेद्रुपलादिक । त्रि
ह्रसाया पलचैकसर्वेषापिण्डिका
भवेत् ॥ हन्त्यशीतिमातरोगानच
त्वारिंशञ्चपित्तजान् । विशतिश्ले
ष्मसम्भूतानष्टौचापिज्वरोद्भवान् ॥
दृष्टमूत्रभवानरोगानन्यानपिनि
वारयेत् । मशौषधप्रसादेनपरम
सुन्दरीभवेत् । कृतिपाकावली ॥

शुण्ठाम् । ) न॰
शुण्ठाक । ) पु॰ शुण्ठाम् ॥

शुण्ड । पु॰ मदनिर्भरे ॥

शुण्डक । पु॰ मण्डपारके ॥ युद्ध
वेषो ॥

शुण्डरोह । पु॰ भल्लवे ॥

शुण्डा । स्त्री॰ मद्यपानालये ॥ ज
लहस्तिन्याम् ॥ वेश्यायाम् ॥ ह
स्तिहस्ते ॥ सुरायाम् । नलिन्या
म् ॥ शुन्यके । शुनगतौ । अम
न्ताश्च ॥

शुण्डापानम् । न॰ मदस्थाने ॥

शुण्डार । पु॰ शौण्डिके । स्वल्प
शुण्डायाम् ॥ कृष्णशुण्डा । कु
टीशमीशुण्डाभ्योर ।

शुण्डाल । पु॰ हस्तिनि ॥

शुण्डी । पु॰ शौण्डिके ॥

शुण्डमषिका । )
शुण्डिमूषी । ) स्त्री॰ छुच्छुन्द

र्याम ॥ द्व॰ रा॰ नि॰ वट॰ ॥

शुण्डौ । स्त्री॰ हस्तिशुण्डाग्रके ॥

शुतुद्रि । स्त्री॰ शतद्रुसरिति ॥ शु
पूजितततुदति । तुद॰ । इगुपधा
त्किदितौन् । बाहुलकाद्वुक ॥

शुदि । अ॰ शुक्लपक्षे ॥

शुद्धम् । न॰ मरिचे [illegible] ॥

शुद्ध । त्रि॰ पूते । पवित्रे ।
अशुद्धिरहिते । निर्मले । नि
र्लेपे ॥ निर्दोषे ॥ शुक्ले ॥ रा
गान्तरामिश्रितरागे ॥ प्रसन्ने ।
नित्यनिरस्तसमस्तदोषपरसंश्लिष्टे
॥ शुद्ध्यतिशुद्ध्यतेऽनेनवा । शु
धशौचे । क्त । प्रशस्ताशुद्धिर
स्यवा । अर्शआद्यच ॥ अहरहित
भवने ॥ रागाद्यशुद्धिरहितेपर
मात्मनि ॥

शुद्धचैतन्यम् । न॰ सर्वधर्मातीते ॥

शुद्धकर्ण । पु॰ शुक्लकर्णे ।
[illegible] ॥

शुद्धदत् । त्रि॰ शुक्लदन्तयुक्ते । शु
द्धदन्त । शुद्धादन्तायस्यस ॥
षयान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति
पक्षे दन्तस्यदत्रादेश ॥

शुद्धमति । स्त्री॰ पवित्रमतौ । सु
मतौ त्रि॰ सुमतिविशिष्टे ॥ प
वित्रबुद्धियुक्ते ॥ शुद्धाचासौमतिश्च
॥ शुद्धामतिर्यस्यस । पु॰ च
तुर्विंशतिभूतार्हदन्तर्गतजिनविशे
षे ॥

शुद्धमांसम । न॰ मासव्यञ्जन

विशेषः । सुधवास० इ० भा० ॥ यथा । पाकपात्रे घृतं दद्यात् तैलं वा तदभावतः । तत्र हिङ्गु हरिद्रां च भर्जयेत् तदनन्तरम् ॥ छागादेरस्थिरहितं मांसं तत्खण्डितं भृशम् । धौतं निर्गालितं तस्मिन् घृते तद्भर्जयेत्ततः ॥ सिद्धयोग्यजलं दत्त्वा लवणं चापि तत्र च । सिद्धे जीरकमरिच्यादिवेसवारं परिक्षिपेत् ॥ द्रव्याण्येवं वेसवारस्य नागरं जीरकं निशा [illegible] लवङ्गानि मरिचानि समासतः ॥ अनेन विधिना सिद्धं शुद्धमांसमिति स्मृतम् । शुद्धमांसं परं हृद्यं बल्यं रुच्यं च बृंहणम् । त्रिदोषशमनं श्रेष्ठं दीपनं धातुवर्द्धनम् ॥ इति भावप्रकाशः ॥

शुद्धवती । स्त्री० वरुणस्य पुर्य्याम् ॥ यथा । शुद्धवत्यस्य नाथस्य स्फटिकोपलनिर्म्मिता । पाण्डुराभोपमैर्याति शोभिता भाति धामभिरिति मृगेन्द्रसंहिता ॥

शुद्धवल्लिका । स्त्री० गुडूच्याम् ॥

शुद्धसत्त्वम् । न० रजस्तमोभ्यामस्पृष्टं त्रिगुणायां मायायां प्रसूतं० विमलसत्त्वगुणं ॥ त्रि० शुद्धान्तःकरणं ॥ शुद्धः रागादिकषायरहितः सत्त्वमन्तःकरणं यस्य ।

शुद्धान्तः । पु० भूभुजामागारे । अन्तःपुरे अवरोधने ॥ अमा भूद्वहकक्षान्तरे । राजधानीस्थानविशेषे वासगृहाख्ये० इति स्वामी ॥ राजयोषिति ॥ शुद्धोऽन्तोऽस्य । रक्षका शुद्धान्तसमीपेऽस्य वा ॥ अमरमाला ॥

शुद्धान्तपालकः । पु० अन्तःपुररक्षके । गृहदौवारिके । कञ्चुकिनि । राजविहिण्डके ॥ तत्पर्य्यायो यथा । शुद्धकुलीनसूक्तपिशुनताम्र च मुनि । उग्रामन्तःपुराध्यक्षो विनीतस्तथोच्यते ॥ इ० मत्स्यपु० ॥

शुद्धान्ता । स्त्री० राजयोषिति ॥

शुद्धापह्नुतिः । स्त्री० अलङ्कारविशेषः ॥ यथा ॥ शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः । नायं सुधांशुः किन्तर्हि व्योमगङ्गासरोरुहम् । इति ॥

शुद्धिः । स्त्री० । मार्जनायाम् ॥ दोषनिरासे । वैदिककर्मार्हत्वप्रयोजकसंस्कारविशेषे ॥ कलिकल्मषदीनानां द्विजादीनां सुरेश्वरि । मेध्यामेध्यविचाराणां न शुद्धिः श्रौतकर्मणा ॥ न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत् । विनाह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ॥ दुर्गायाम् ॥

यथा । स्मरणाच्छिन्नमाह्यपि धीध्य तीसक्विपातकात् । तेनशुद्धिं समाख्याता देवीरुद्रतनौ स्थितेति । शुधि स्त्रियाक्तिन । देवतायैसुराप्रदाने दूव्यान्तरसञ्ज्ञायाम ॥ यथा । मास मीनद्वमुद्रापफ नमूलानियानिच । सुधादानेदेवतायैस ञ्ज्ञाशुद्धिरी रिते ति ॥

शुद्धिलाभ । पु॰ प्रायश्चित्ते ॥

शुद्धोदन । पु॰ नृपविशेषे । शुद्धो दनोऽ । शक्यन्द्वादि ॥ शुद्धो दनोयस्यो भुङ्क्ते व्यायवच्छ्युद्धमोदन म् ॥

शुद्धोदनसुत । पु॰ शाक्यमुनौ ॥

शुन । पु॰ वायौ । कुक्कुरे ॥ य थाह्वाचस्पति : । कुक्कुरस्तुशु नि श्वान कपिलीमण्डल शु नद्ध ति ॥

शुन शेप । ) पु॰
शुन शेफ । ) न॰ मुनिविशेषे । अट

चीकमुनिपुत्र । आजीगर्त्त ॥

शुनक । पु॰ कुक्कुरे । शुनति । शुनगतौ । क्वुन्शिल्पिसञ्ज्ञयोरपू र्वस्यापि ॥

शुनकचञ्चुका । स्त्री॰ क्षुद्रचञ्चुक्षुपे ॥

शुनकचिल्ली । स्त्री॰ शाकविशेषे । श्वा नचिल्लिकायां ॥

शुनाशीर . । पुं॰ इन्द्रे ॥ शुनोवायु शीर सुव . तावस्य ।

अयंचायच् । अन्येषामपीतिदी र्घ ॥ शुनाशीरोपिताबव्य सु नासीरोपिदन्त्यक । तालव्यापि द्दन्त्यमध्य शुनासीरमहश्यते । इतिभरत ।

शुनासीर । पु॰ इन्द्रे । पुरुहूते । पुरन्दरे । शुइत्यव्ययस्य पूजार्थक त्वात् । शोभननासीरसेनाविशेषो यस्यस ॥ यद्वा । शुनोवायु सी रश्चादित्य । शुनश्चसीरश्च ति । देवताद्वन्द्वेचेत्यानङ् इतिवर्त्तिका र । दन्त्यतालीयपाठोवहुसम्मत ॥

शुनासीरीयन । न॰ शुनासीर्य्यं ॥ शुनासीरोदेवताऽस्येत्यर्थे॰ द्यावा पृथिवीत्यादिनाछ ॥

शुनासीर्य्यम् । न॰ शुनासीरीये॰ ह विरादौ । शुनासीरोदेवताऽस्येत्य र्थे॰ द्यावापृथिवीशुनासीरमरुत्व दग्नीषोमवास्तोष्पतिगृहमेधाच्छचे ति॰ चायत् ॥

शुनि । पु॰ कुक्कुरे । सारमेये ॥

शुनी । स्त्री॰ कुक्कुर्याम् । अश्वाश्वश्च शुनीलिख्यमन । कुष्माण्डाम् । गौरादित्वान ङीष् ।

शुनीर । पु॰ कुक्कुरीसमूहे । इति॰ चि॰ टिप ॥

शुन्ध्यु । पुं॰ अग्नौ । शुन्धति । शु न्धशुद्धौ । यजिमनिशुन्धिदसिज निभ्योयुच् ॥

शुन्यम् । न॰ शून्ये ॥ शुनेरितम् । गवादिषु शुन सम्प्रसारणं वा च दीर्घत्वमिति यत् ॥ शुनीमासमूहे ॥

शुभ । पु॰ विष्कम्भादिषु त्रयोविंशे योगे ॥ तत्रोत्पन्नस्य फलं यथा । शुभप्रसूतः शुभकृन्नराणां शुभोदयो विद्रुधाममार्जी । कान्तिर्नित्यं शुभकर्मधीमान् शोभाभिरक्तः शोभनवेशधारीति ॥ क्लीबे ॥ शुभ[illegible]सायाम् इगुपधेति कः ॥ न॰ कल्याणे । क्षेमे । भद्रे । मङ्गले । मौक्तिके ॥ पद्मकाष्ठे ॥ वृष्टफले ॥ परमानन्दरूपत्वेन मङ्गलानां मङ्गले मोक्षसुखे ॥ वि॰ सुखरूपे ॥ क्षेमशालिनि ॥ सुखस्वादिपुरे ॥ प्रशस्ते ॥ शोभने । शुभशोभायाम् । इगुपधज्ञाप्रीकिरः कः ॥

शुभयुः । वि॰ शुभान्विते । शुभमस्यास्ति । शुभमितिमान्तमव्ययम् । अहंशुभमोर्युस् ॥

शुभकृत् । पु॰ प्रभवादिवत्सरान्तर्गतवत्सरविशेषे । यथा । सुवर्णरूप्यधान्यानि जगत्सर्वं सुशोभनम् । ब्राह्मणा वणिजस्तुष्टाः शुभकृच्छुभकृत्प्रिये ॥ ३६ ॥ वि॰ शुभकारके ॥

शुभगन्धकम् । न॰ बोले । वि॰ मङ्गलगन्धयुक्ते ॥

शुभग्रहः । पुं॰ सौम्यग्रहे ॥ चन्द्राधि पा॰णौ धैवगुरु शुक्रस्तथैव च । पापाऽयुतो बुधश्चैव प्रोक्ताः शेषाः शुभग्रहाः ॥

शुभङ्करः । त्रि॰ क्षेमङ्करे । क्षेमकारे ॥

शुभङ्करी । स्त्री॰ पार्वत्याम् ।

शुभदः । पु॰ अश्वत्थवृक्षे । त्रि॰ शुभदातरि ॥

शुभदन्ती । स्त्री॰ सुदत्याम् । सुदन्त्स्त्रियाम् । पुष्पदन्तभार्यायां च । शोभनो दन्तो यस्याः । नासिकोदरौष्ठेति ङीष् ॥

शुभपत्रिका । स्त्री॰ शालपर्ण्याम् ॥ मङ्गलपत्रिकायाम् ॥

शुभम् । अ॰ क्षेमे । भद्रे ॥

शुभवासन । पु॰ सुखवासकारगन्धे । सुखवासने ॥

शुभस्थली । स्त्री॰ यज्ञभूमौ भद्रभूमौ ॥

शुभा । स्त्री॰ वंशरोचनायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गौ ॥ शम्याम् ॥ श्वेतदूर्वायाम् ॥ देवसभायाम् ॥ उमासखीविशेषे ॥ मङ्गलवनिकायाम् ॥ छाग्याम् ॥ टाप् ॥

शुभाङ्गः । त्रि॰ मङ्गलावयवयुक्ते । सुन्दरावयविनि । शुभानि लक्षणलक्षितान्यङ्गान्यस्य ॥

शुभाङ्गी । स्त्री॰ कुबेरपत्न्याम् । कामदेवपत्न्याम् । मङ्गलावयवयुक्ता

समंवमस्तथापर । एतैशुषिरभे दास्तुकथिता पूर्वसूरिभिरिति ॥ विवरे ॥ त्रि॰ सरन्ध्रे । रन्ध्रान्विते शुषिश्छिद्रमस्यास्मिनवाऽस्ति । अथशुषौतिर ॥ यद्वा । शुष्यति । शुष शुषिमदिसुदौतिकिरच ॥ शुष्कैधौत्यन्य ॥

शुषिरा । स्त्री॰ नलीनामगन्धद्रव्ये॥ शुषिराविद्रुमलतावमिर्तोर्भिर्नटौनलीत्यमर ॥ शुषिरमस्त्यस्य अर्शआदित्वादच् ॥

शुषिल । पु॰ समीरणे । वायौ ।

शुष्क । त्रि॰ नीरसे ॥ शुषिते । शुष क्तः इति॰ निष्ठातकारस्य ककार ॥ यद्वा । शुष्यति । शुष॰ । स्त्रवभूशुषमुषिभ्यः कक ॥

शुष्कतर्क । पु॰ दुस्तर्के । अनुयाष्कमानहीनतया॰ निरालम्बमे॰ ऽहंवैनाशिकादिकल्पितेऽनुमाने ॥

शुष्कपत्रम् । न॰ नीरसदले ॥ आतपादिशोषितपट्टशाके । मालिता॰ शुक्ला॰ द्रु॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यगुणायथा । शुष्कपत्रपयैौमिश्र पित्तश्लेष्मज्वरापहम् । तच्छुष्कपत्र जलदोषनाशनं विशेषत पित्तकफज्वरापहम् । जलस्तस्यापिचपित्तहारकसुरोचनव्यञ्जनयोगकारकमितिराजवल्लभ ॥

शुष्कमत्स्य । पु॰ आतपादिनानीरसीभूते ॥ शुष्कमत्स्यानवल्लुराः स्युर्दुर्जराविड्विबन्धना ॥

शुष्कमांसम् । न॰ आतपादिना॰ अनाद्रेपिशिते । उत्तप्ते । वल्लूरे ॥ यथा । सद्यानादोषलमांस॰ बलावतनलघु । विदोषकृद्दयालघुष्ट शुष्कं शूलकारगुरु ॥

शुष्करेवती । स्त्री॰ मातृकाविशेषे ॥

शुष्काल । त्रि॰ आमिषे ॥ शुष्कमांसस्यापणिके । पिशितापिनि ॥ शुष्कालीमर्त्त । शेषवृत्यण् । सञ्जापूर्वकत्वाद्वृद्ध्यभाव ॥

शुष्कली । स्त्री॰ शुष्कमांसे ॥ मांसमात्रे ॥

शुष्कवृक्ष । पु पाण्डुतरौ । धवे ॥

शुष्कव्रण । पु॰ किणे ॥

शुष्काङ्ग । पु॰ धवद्रुमे ॥ त्रि॰ निर्जीवावयवे ॥

शुष्काङ्गी । स्त्री॰ गोधायाम् ॥

शुष्कार्द्रम न॰ शुण्ठ्याम् ॥

शुष्म । पु॰ सूर्ये ॥ वह्नौ ॥ शुष्यत्यनेन । शुष॰ । हषिशुषिरसिभ्य कित्तिन ॥

शुष्म । पु॰ सूर्ये ॥ अग्नौ ॥ अर्चिषि ॥ न॰ तेजसि ॥ ओजसि । बले ॥ शुष्यतिजलम्॰ शुषिरस्त्यभाविसत्यर्थात्॰ अविसर्जि

। कौमुदी० भा० ॥ शूकयुक्ताशिम्बा ० शिम्बि शिम्बिका० शिम्बीवा ॥

शूकशिम्बा । } स्त्री०
शूकशिम्बि } पु० कपिकच्छाम् ।
शूकशिम्बी । } स्त्री०

मर्कट्याम् । कौमु० भा० प्र० ॥

शूका । स्त्री० शूकशिम्बायाम् ॥

शूकाढ्यम् । न० शूकतृणे ॥

शूकापुट्ट । पु० तृणधान्यविशेषे । तृ णमणौ । कपूरकु० भा० प्र० ॥ कु ० हा० स्त्री ॥

शूतिपर्णं । पु० आरग्वधे ॥

शूद्र । पु० अवरवर्णे । वृषले । जघन्यजे ॥ अध्यात्माद्यग्रहणे वैदिके ब्राह्मणेन कर्त्तव्यमित्याह नारायण । शूद्रान्न शूद्रसम्पर्कं शूद्रेण च सहासनम् । तेषामतिनरकं घोरं यावच्चन्द्रदिवाकराविति ॥ अस्योत्पत्तिरग्निपुराणे जातिमालायामुक्ता । तथाहि । आदौ प्रजापतेर्जातामुखाद्विप्रा सदारका । बाहोश्च विशाजातावरौ वैश्याविजज्ञिरे ॥ पादाच्छूद्रस्समभूतस्त्रिवर्णस्य वसेवक ' भीमनामा सुतस्तस्य प्रदीपस्तस्य पुत्रक ॥ कायस्थस्तस्य पुत्रोऽभूद्भूपलिपिकारक । कायस्थस्य च पुत्रास्त्रियस्तानगतीतये ॥ चित्रगुप्तश्चित्रसेनो विचित्रस्तथैव च । चित्रगुप्तोगत : स्वर्गे विचित्रो नागसन्निधौ ॥ चित्रसेन पृथिव्यां वै इति शूद्र प्रपञ्चत इति ॥ शोचति । शुचशोके । शुचेर्द्रश्चेति रक् ० दीर्घश्च ॥ अपशूद्राधिकारेत्वा शूद्रेतिश्रुतौ तु० रूढेरभावात्० योगएवपुरस्कृत तथाचोत्तरतन्त्रे भगवान्व्यास । शुगस्यतदनादरश्रवणात् ० तदाद्रवणात्सूच्यतेहि ॥ १ । ३ । ३४ । अस्यार्थ । छान्दोग्ये चतुर्थप्रपाठके० शिष्यम्प्रतिशूद्रेतिसम्बोधनाच्छूद्रे धिकारइतिचेन्न । शुगस्येति । अहंगहंस इत्युक्त्यनादरेणानश्रुत ० तदनादरश्रवणाद्याशु क् ० तया० चाभीप्र० रैक्वगुरुं प्रद्रवणात्सशूद्र । एतच्चिद्र० शूद्रेतिसम्बोध्य० सर्वज्ञत्वख्यापनाय रैक्वेणसूच्यते ॥

शूद्रक । पु० अतिकुत्सितशूद्रे ॥ कुत्सायांकन् ॥

शूद्रकर्म । न० द्विजपरिचर्यायाम् ॥ यथाहभगवान् । परिचर्यात्मक कर्म शूद्रस्यापिस्वभावजम् इति । स्वभावज रजउपसर्जनतमोगुणस्वभावाज्जातम् आह्निकेऽपि । द्विजातिसेवाऽर्चनदेवताच्चयाधर्मी विधि शूद्रनिसर्गकर्म च । स्वभावकर्मप्रविहायये ऽन्यथाश्रयन्ते तेऽन्यजन्मकर्मभागिति ॥ शूद्रस्यकर्म ॥ अयनिषिद्धानिकर्मा

विषया । शूद्रावाप्समचारावहस्थै
ब्धनसञ्चय । शुश्रूषा कृतवा
र्यस्य कृतसन्तानकर्मणः ॥ अभ्य
नुज्ञातराजस्य शूद्रस्य जगतीपते ।
अल्पान्तरगतस्यापि दशधर्मगतस्य
च । आश्रमा विहिता सर्वे वर्ज
यित्वा निराशिषमिति पाद्मे स्वर्गख
ण्ड ॥

शूद्रकृत्यम् । न॰ शूद्रकर्त्तव्यकर्म्म
णि ॥

शूद्रधर्म्मः । पु॰ शूद्रस्याचरणीये वि
हिताचारे ॥ सच्छ्रवणाश्रमशब्दे द्र
ष्टव्यः ॥

शूद्रप्रिय । पु॰ पलाण्डौ ॥ त्रि॰
तदिष्टद्रव्ये ॥

शूद्रप्रेष्य । पु॰ शूद्रस्य परिचारके
ब्राह्मणादौ ।

शूद्रयाजक । पुं॰ शूद्रसम्बन्धियज्ञा
दौ ऋत्विजि ॥ शूद्रस्य याजकः ॥

शूद्रासनम् । न॰ पट्टे । मञ्जरी ।
शूद्रस्याधिकारे ॥ कृत॰ त्रि॰
क्षिप ॥

शूद्राध्य । त्रि॰ शूद्राद्याकरणा
द्यध्ययनकारिणि ।

शूद्रा । स्त्री॰ शूद्रजातौ । अन्यभार्या
यामपि शूद्रजातीयायाम् ॥ शूद्रीशू
द्रस्य भार्य्या स्यात् शूद्रा तज्जातिरे
व चेत्यमरः ॥ शूद्राणामजत्पूर्वा
जातिरितिटाप् ॥

शूद्रान्नम् । न॰ शूद्रस्याभिधान्ने ॥
यथा । शूद्रान्नेनतु भुञ्जीत मउद्धारये
नधीमता । सर्वस्वरत्वमुद्धृत्य शूद्
रत्वञ्चाधिगच्छति ॥

शूद्राभार्य्य । पुं॰ शूद्रस्वामिनि ।
शूद्राभार्य्यायस्य ॥

शूद्राणी । स्त्री॰ प्रियङ्गुवृक्षे ॥

शूद्रावेदी पु॰ सवर्णापरणीयकृत
शूद्राविवाहे ॥ शूद्रावेदी पत॰ प
रित्यक्तो भवेदिति ॥ शू
द्रावेदी पतत्यत्रे रुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृ
गोः ॥ अपिच ॥ शूद्रागमनमारो
प्यब्राह्मणो यात्यधोगतिम् । जनयि
त्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

शूद्री । स्त्री॰ शूद्रस्य भार्य्यायाम् ।
भिन्नजातीयायाम् शूद्रभार्य्यायाम्
। शूद्रस्त्री । पु॰ योगादाख्या
यामिति ङीष् ॥

शून । ) शूनवान् । ) त्रि॰ श्वयिनि, स्फीते ।
वर्द्धिते । उत्श्वीयतेस्म । क्तमेव
श्वयति॰ क्तवतु । यजादित्वा
त्सम्प्रसारणे॰ पूर्वरूपे ओदितश्चे
ति नत्वे हलः इति दीर्घः ॥

शूनाच । त्रि॰ । उच्छूनताचे ॥

शून्यम् । न॰ आकाशे ॥ बिन्दौ ॥
त्रि॰ निर्जनदेशादौ । तुच्छे । रि
क्ते । सु॰ मा॰ रोता॰ नू॰ भा॰ ॥

अविद्याजीवनशून्य दिकशून्याचेद्वान्यथा । पुत्रहीनगृहशून्यसर्वशून्याद्दरिद्रता ॥ खपुष्पादिवदत्यन्ताभावरूपे ॥ यथा । मृगतृष्णाम्भसिस्नात खपुष्पकृतशेखर । एषवन्ध्यासुतोयातिशशशृङ्गधनुर्द्धर ॥ शुनेच्छितम् । शुन सम्प्रसारणावादीर्घत्वमितियत् ॥

शून्यकम् । न० शून्यार्थे । त्रि० तुच्छे ॥ शून्यरिक्तइतियावादिषुपाठात्कन् । स्वार्थेकोवा ॥

शून्यता । स्त्री० चित्तस्यदोषे । रागद्वेषादितीव्रवासनयाचित्तस्यस्वभाविकधर्मे । शून्यतायाम् ॥ ध्यानचिन्ताचिन्तानाशे शून्यताख्यासतापकृत् ॥ शून्यस्यभाव . तल् ॥

शून्यतिथि । स्त्री० तिथिविशेषे ॥ यथा । अष्टमीनवमीचैवपक्षयोरुभयोरपि । माधवेद्वादशीख्याप्यापक्षयोरुभयोस्तथा । ज्येष्ठेचयोदशीनिन्द्यासिते० कृष्णेचतुर्दशी । आषाढेकृष्णपक्षषष्ठी० शुक्लेचसप्तमी । द्वितीयाचतृतीयाचश्रावणेसितकृष्णयो । प्रथमाचद्वितीयाचनभस्येमासिनिन्दिता ॥ इषस्येकादशीनिन्द्या० मासीशुक्लकृष्णयो । ऊर्जे चतुर्दशीशुक्लाकृष्णपक्षेतुपञ्चमी ॥ सप्तमीचाष्टमीसौम्येपक्षयोरुभयोरपि । पौषेपक्षद्वयेचचतुर्थीपञ्चमीतथा ॥ माघेतुपञ्चमीषष्ठीकृष्णे शुक्लेयथाक्रमम् । तृतीयाचचतुर्थीचफाल्गुनेसितकृष्णयो ॥ तिथयोमासशून्याख्याविश्वनाशिका । आसुश्राद्धप्रकुर्वीतनैवमङ्गलमाचरेदितिवशिष्ठ ॥

शून्यनक्षत्रम् । न० शून्यभे ॥ यथा । अश्विनीरोहिणीचैवशून्यभेपरिकीर्त्तिते । चित्रास्वातीचमैत्रेशाखे० ज्येष्ठे विवर्ज्यतारके ॥ भगवासवमाषाढे० श्रावणेहरिविश्वभे । नभस्येवारुणाख्यंमजपादश्वयुज्यपि ॥ कार्त्तिकेपित्र्यहन्त्यौसौम्येचित्राहिदैवते । पौषेद्रासकराद्री सार्पीचेमूलविष्णुभम् ॥ तपस्येशक्रभरणीशून्यभान्याकुरयजा . । एषुयस्तु कृतकर्म धनं सद्वविनश्यति ॥

शून्यभम् । न० शून्यनक्षत्रे ॥

शून्यमध्य । पु० नले । पोटगले ॥

शून्यराशि । पु० मासविशेषगतराशिविशेषे ॥ यथा । घटमत्स्यवृषायुग्मं मेष कन्या सवृश्चिका . । तुलाचापकुलीराख्याःमृगसंज्ञाश्च राशय ॥ चैत्रादौराशिशून्याख्याविश्वनाशिनाशदा . ॥

शूर्प । पु॰ द्रोणद्वयात्मकपरिमाणे ॥ पुं॰ न॰ प्रस्फोटने । सूप॰ इ॰ भा॰ । शूर्पयति । शूर्प्यतेऽनेनवा । शूर्पमाने । पचाद्यच् । पुसीति चोवा ॥ यद्वा । शृणाति । शृ॰ । सुशृभ्यांनिच्चेतिप । बाहुलकादु त्वम्॰ रपरत्वम्॰ हलिचेतिदीर्घ ॥ न॰ शोणितभाजने ॥

शूर्पक । पु॰ कामदेवारातावसुर विशेषे ॥

शूर्पकर्ण । पु॰ गजे । नागे । ग णेशे । विघ्नराजे ॥ शूर्पाविवकर्णौ यस्य ।

शूर्पकाराति । ) पुं॰ कामदेवे ।
शूर्पकारि । )

शूर्पणखा । स्त्री॰ रावणभगिन्याम् ॥ शूर्पवन्नखानियस्या । पूर्वपदा त्संज्ञायामगः इतिणत्वम् । नखमुखात्संज्ञाया मितिनङीष । केवलयौगिकत्वे तु ङीष् ॥

शूर्पणखी । स्त्री॰ रावणस्वसरि ॥ शूर्प शोणितभाजनम्॰ नखविदूष णाद्वितिधातुः । शूर्प॰ शोणित भाजनेनयस्मात्क्रियानखयतिदूष यतीतिशूर्पणखी ॥ यद्वा । शूर्पा कारणिनखानियस्या । साङीष् ।

शूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥

शूर्पवात । पं॰ सूर्पवायौ । कुञ्ज फाले ॥

शूर्पश्रुति । पु॰ हस्तिनि ॥ द्व॰ हा॰ ली ॥

शूर्पी । स्त्री॰ शूर्पणखायाम् ॥ गौरा दित्वान ङीष् ॥ क्षुद्रसूर्पे ॥

शूर्म । पु॰ ]
शूर्मि । स्त्री॰ ]
शूर्मिका । स्त्री॰ ] शूर्मिकायाम्
शूर्मी । ]

। लौहप्रतिमायाम् ॥

शूल । पुं॰ न॰ आयुधविशेषे व र्छा॰ भाला॰ इ॰ भा॰ प्र॰ । मृ त्यौ ॥ केतने ॥ विष्कम्भादिषुन वमयोगे॰ तत्रजातश्चफलं यथा । भीतोदरिद्रोदयिताप्रियश्चशूलीहृद्य शूलकृत्सवन्यौ । विद्यामयाभ्या रहितोथशूलोकरोतिलो कोनहित काटाचित् ॥ मुलोक्ता ॥ वधहे तावग्र कीलके ॥ व्यथायाम् ॥ विक्रेतव्ये ॥ यथा । अट्टशूलाज नपदा शिवशूलाश्चतुष्पथा । प्रमदा. केशशूलिन्योभविष्य न्तिकलौयुगे ॥ इतिमहाभारते आदिपर्व ॥ रोगविशेषे ॥ अस्यदानादिक्र भावप्रकाशे॰ शूलाधिकारेद्रष्टव्य म् ॥ राचाक्षोरादिमध्यान्ते पुन श्चान्यादिमध्यत । मध्ये चान्ते तथा दोषदोषै नोल्पातिशूलरुक् ॥ भुक्ते जीर्यतिजीर्णेऽन्ने जीर्णे भुक्ते चजीय॰ ति । जीर्णे जीर्यति भुक्ते चदोषै नोल्प॰

। शूल शूलीचक्रमादाय क्लीप.श पाणीवज्रमादाय यज्ञोधादन्ययं पृष्ठत पार्श्वतोवादुर्गादुर्गाशादिनो रक्षणाय ॥ त्रि॰ शूलरोगयुक्ते ॥ यथा । वर्जयेद्विदलं शूली कुष्ठीमांस ज्वरोस्त्रियमिति ॥ शूलमस्यास्ति । इति ॥

शूलिक । पु॰ भाण्डीरवृक्षे ॥

शूलिनी । स्त्री॰ दुर्गायाम् ॥

शूली । स्त्री॰ तृणप्रभेदे । शूलपण्याम् । धूम्रमूलिकायाम्

शूलोत्खा । स्त्री॰ सोमराज्याम् ॥

शूल्यम् । त्रि॰ शूलके । लोहशलाकायापक्वमांसि । शूलाकृते ॥ शूलेसंस्कृतमासम् । तत्रसंस्कृतमित्यर्थे॰ शूलोखाद्यत ॥ तत्पाकप्रकारोयथा । कोलखण्डानिमांसानिग्रथितानिशलाकया । घृत. सलवण दत्त्वा निर्धूमेदहनेपचेत् ॥ तत्तु शूल्यमितिप्रोक्तं पाककर्मविचक्षणैः । शूल्यमत्यसुधातुल्यं रुच्यं वह्निकरंलघु । कफवातहरंबल्यं किञ्चित्पित्तकरंहितम् ॥ अन्योपि । अङ्गारकर्परेभ्यांस्वस्थूलयन्त्रपुटैस्था । भर्जनविविधं प्रोक्तं सूपकारविशारदैः ॥ जलेनस्वदयेत्पूर्वं प्रोक्तं शूलेन्तरान्तरम् । दद्यादार्द्रकलवणैर्लिप्तं खङ्गारपाचितम् ॥ तच्छूल्यन्तु सुधातुल्यं रुच्यं वह्निप्रदंलघु । तदेवाङ्गारतप्तन्तुमपक्वं वातशातनम् ॥

शूल्यकम् । त्रि॰ शूलविद्धपक्वमांसे । भटित्रे शूल्यमेव । कन् ॥

शृगाल । पु॰ शिवायाम् । भूरिमाये । गोमायौ । मृगधूर्तके ॥ सियाल॰ इ॰ भा॰ ॥ सृजतिमायाम् । सृज॰ आहुलकात्कालन् । न्यङ्क्वादि । पृषोदरादि ॥ असृग्गालोऽस्य । पृषोदरादि ॥ सृगं भिन्दिपालम् गलतिवा । पूर्ववत् ॥ तालव्यादि । तालव्यापिदन्त्या स्यमस्वमस्वलशूकरा । रमनापिचजिह्वायांशृगाल कलशोपिचेतिश ब्दभेदात् ॥ दैत्यभेदे ॥ वासुदेवे ॥ खले ॥ निष्ठुरे ॥ भीरौ ॥

शृगालकण्टक । पु॰ सियालकांटा इ॰ भा॰ प्र॰ क्षुपे ॥

शृगालकोलि । पु॰ क्षुद्रबदर्याम् । लोधघण्टायाम् । झडबेरी॰ इ॰ भा॰ ॥

शृगालघण्टी । स्त्री॰ कोकिलाक्षे ॥

शृगालजम्बू । स्त्री॰ गोडुम्बे ॥ घोंटाफले ॥

शृगालविन्ना । स्त्री॰ पृश्निपर्ण्याम् ॥

शृगालिका स्त्री॰ शृगालयोषिति । शिवायाम् ॥ लोमालिकायाम् । दीर्घजिह्वायाम् । लोमडी॰ इ॰ भा॰ प्र॰ ॥ त्रासात्पलायने । विद्रुतौ । भाजड॰ इ॰ भा॰ प्र॰ ॥

शृङ्गवेरकम् । न० चार्द्रके ॥

शृङ्गवेरपुरम । न० तीर्थविशेषे । चरामोगङ्गामुत्तीर्य ॥

शृङ्गवेराभमूलक । पु० गुन्द्रायाम् । गोंदपटेरा० हू० भा० प्र० ॥

शृङ्गाट । पु० चम्बुकण्टके स्वादुकण्टके ॥ कामाख्यादेशस्थे पर्वतविशेषे । दीपवत्या पूर्वतस्तुशृङ्गाटोनामपर्वत ॥ न० चतुष्पथे ॥

शृङ्गाटक । पु० वारिकण्टके ॥

शृङ्गाटकम् । न० चतुष्पथे । वारिकण्टके । सिँघाड़ा० हू० प्र० जलजलताफले । गुणायथा । शृङ्गाटक हिमस्वादुगुरुवृष्य कषायकम् । ग्राहिशुक्रानिलश्लेष्मप्रदंपित्तास्रदाहनुत् । मासशृङ्गाटके ॥ शृङ्गप्राधान्यमटति । चट० । कर्मण्यण् । सञ्ज्ञायाकन ॥

शृङ्गाटी । स्त्री० जीवन्त्याम ॥

शृङ्गार । पु० सुरते । गजभूषणे । राजमण्डने । मण्डने । नाट्यरसे ॥ तल्लक्षण यथा । पुस स्त्रियां स्त्रिया पुसिसंयोग प्रतिस्पृहास । शृङ्गारइतिख्यातोरतिक्रीडादिकारणम् । चपिच । शृङ्गहिमन्मथोद्भेदस्तदागमनहेतुक । उत्तमप्रकृतिप्रायोरस शृङ्गारइष्यते० इति । शृङ्गमप्राधान्यमियर्ति । ऋट० । कर्मण्यण । यद्वा । शृङ्गाराच्छृङ्गाराभिनि० शृ गारि रन्० लुन्० गुरू० इगुप । न० लवङ्गे ॥ नागसम्भवे । चूर्णे ॥ कालागुरुणि ॥

शृङ्गारक । पु० शृङ्गारे ॥ स्वार्थेक । न० सिन्दूरे । त्रि० शृङ्गवति ॥ शृङ्गमस्त्यस्य । शृङ्गवृन्दाभ्यामारकन् ॥

शृङ्गारभूषणम् । न० सिन्दूरे ॥

शृङ्गारयोनि । पु० कामदेवे ॥

शृङ्गारित । त्रि० मण्डिते । चलङ्कृते । सिगारा० हू० भा० । शृङ्गारोमण्डन सञ्जातमस्य । तारकादित्वादितच ॥

शृङ्गारी । पु० गजे । द्विपे । पूगे । क्रमुके । पद्मरागे । माणिक्ये ॥ त्रि० सशृङ्गारे ॥ सुवेषे ॥ शृङ्गारोस्त्यस्मिन्नुपा । चतद्रूनिठनाविनि ॥

शृङ्गि । स्त्री० मत्स्यविशेषे । शृङ्ग्याम् ॥

शृङ्गिक । पु० न० विषप्रभेदे ॥

शृङ्गिका । स्त्री० प्रतिविषायाम् ॥

शृङ्गिण । पु० मेषे ॥ शृङ्गमस्त्यस्य । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नित्यादिनाशृङ्गादिनच् निपात्यते ॥

शृङ्गिणी । स्त्री० माहेय्याम् । सौरभेय्याम् । गवि ॥ शृङ्गमस्त्यस्या । चतद्रूनि : ॥

वृङ्शीङ्भ्यांरूपस्वांगयो पुट चेत्यसुन् ॥

शेपाल । पुं॰ न॰ शैवाले ॥ इ॰ श॰ र॰ ली ॥

शेफ । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेत पातानन्तरम् । बाहुलकात् फप्रत्यय ॥

शेप । पुं॰ मेढ्रे । शिश्ने ॥ शेतेरेत : पाते । शीङ्॰ । वृङ्शीङ्भ्यांरूपस्वांगयो पुट्चेत्यसुन् । अत्रपक्षेद्वितीयाप्यागमे ॥

शेफसी । स्त्री॰ शिश्ने ॥

शेफालि । स्त्री॰ शेफालिकायाम् ॥

शेफालिका । स्त्री॰ सुवहायाम् । निर्गुण्ड्याम् ॥ नीलिकायाम् । हारशृङ्गार॰ पारिजात॰ इ॰ भा॰ प्र॰ पुष्पवर्गे । शिउली॰ गौ॰ दे॰ भा॰ प्र॰ ॥ चत्वारि शेफालिकामात्रे । शियलीतिख्यातनीलपुष्पायांशेफालिकायामिति केचित् । शेफालिकाद्वयशेफालिकामात्रे॰ निर्गुण्ड्यादिद्वय नीलपुष्पशेफालिकायामितिकेचित् । न्यवारीतिख्यातपुष्पविशेषे॰ इतिचान्ये ॥ शब्दरत्नावल्युक्ता॰ पर्यायास्तु । शेफाली॰ मल्लिका॰ रजनीहासा॰ निशिपुष्पिका॰ सा शुक्लाचेत्॰ श्वेतसुरसा॰ भूतवेशीति ॥ राजनिघण्टोक्तास्तु । शुक्लाङ्गीशीतमञ्जरी॰ विजया॰ वातारि॰ भूतकेशीति ॥ शेतेवृतिशे॰ शीङोविच् । शयफालयति । ञिफलाविशरणे । अच् । स्वार्थेकन्त्युन्वा ॥ शेफालिकाया पुष्पम् । शेफालिका । पुष्पमूलेषुबहुलमिति॰ अनुदात्तादेरञोऽचस्त्यलुप् । लुपियुक्तवत् ॥ शेरतेशेफाअलयोऽस्याम् । वा । ङीष् । स्वार्थेकन् ॥

शेफाली । स्त्री॰ निर्गुण्ड्याम् । शेफालिकायाम् । न्यवारीतिख्यातपुष्पवर्गे । हारशृङ्गार॰ इ॰ च॰ भा॰ प्र॰ ॥ शेरतेशेफाअलयोऽस्याम् । वाङीष ॥ नीलसिन्दुवारे । सभालू॰ इ॰ भा॰ ॥

शेमुषी । स्त्री॰ बुद्धौ । प्रज्ञायाम् । मतौ ॥ शेतेवृतिशे॰ शीङोविच । शे॰ मोह॰ तम्मुष्णातीति॰ शेमुषी । मुषस्तेये । मूलविभुजादित्वात्क । गौरादित्वात्ङीष ॥

शेयाल । पु॰ जलनील्याम् । शेवले । जलेशेते॰ तिष्ठति । शीङोवालन् ॥ बाहुलकाद्गुणय ॥

शेलु । पुं॰ श्लेष्मातके । बहुवारके । लसोडा इ॰ भा॰ प्र॰ ॥ शिलति । शिल॰ । बाहुलकादु ।

शेव : । पुं॰ पक्षी ॥ शिश्ने ॥ लि॰ उन्नते ॥ शेते । इण्शीभ्यां

शैषावस्था । स्त्री॰ वर्द्धक्यें ॥

शैषित । त्रि॰ उर्व्वरिते ॥

शैक्ष । पु॰ प्रथमारब्धवेदे । प्राथम कल्पिके ॥ शिक्षामधीते । तदधी तद्वत्यण ॥ शिक्षायाश्चयम्॰ तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैषद्वत्यण् ॥ यद्वा । शिक्षाशील मस्य । छत्रादिभ्योण् ॥

शैख । पु॰ सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥

शैखरिक । पु॰ अपामार्गे ॥ शिख रेप्रायेणभवति । अध्यात्मादित्वाट्ठ ञ् ॥

शैखरेय । पुं॰ अपामार्गे ॥

शैत्यम् । न॰ शीतत्वे ॥ भावेष्यञ् ॥ शैत्य हियत्स प्रकृतिर्जलस्य ॥

शैथिल्यम् । न॰ शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय । पु॰ शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्य म् । इतश्चानिञ इतिढक् ॥

शैर्षच्छेदिक । त्रि॰ शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदा द्यच्चेतिठञ्॰ प्रत्यययोगेनशिरस शीर्षभावश्च ॥

शैल । पुं॰ महीध्रे । अचले । शि लोच्चये ॥ प्रचुरा शिला संत्यत्र । ज्योत्स्नादित्वादण् ॥ न॰ शैलेये ॥ तार्क्ष्यशैले । रसाञ्जने ॥ शिला जतुनि ॥

शैलकम् । न॰ शैलजे ॥

शैलगन्धम् । न॰ शावरचन्दने ।

शैलगर्भा । स्त्री॰ शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री॰ शिलावल्कायाम् ॥ इ॰ रा॰ नि॰ ट ॥

शैलजम् । न॰ शैलेये । सुगन्धिद्रव्य विशेषे । शैलेजातम् । जनौ॰ । सप्तम्याञ्जनेर्ड॰ ॥ त्रि॰ पर्वतोत्प न्नेवस्तुनि ॥

शैलजा । स्त्री॰ गिरिजायाम् । पार्व त्याम ॥ शैलाज्जाता । जनौ॰ । पञ्चम्यामितिड ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पु॰ शम्भौ । शिवे ॥ इ॰ त्रि॰ शेष ॥

शैलधर । पु॰ गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जय ॥

शैलधातुजम् । न॰ शिलाजतुनि ॥

शैलनिर्यास । पु॰ अश्मजे । शिला जतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र । पु॰ बिल्ववृक्षे ॥

शैलपीलु । पु॰ अक्षोटे ॥

शैलभित्ति । स्त्री॰ टङ्के ॥

शैलराज । पु॰ मेरुपर्वते ॥ हि मालये ॥ शैलानाराजा । टच् ॥

शैलराजतनया । स्त्री॰ पार्वत्या म् ॥

शैलराजसुता । स्त्री॰ पार्वत्याम् ।

शैलोदा । स्त्री० नदीविशेषे ॥ (नियमगाम्वरे)
शैलाख्या । स्त्री० क्षुद्रपाषाणभेदा
म् ॥ अम्बिकायाम् ॥
शैव । त्रि० शिवोपासके । शैवे
त्रोतसि ॥ न० शिवप्रोक्तमा
र्गे ॥ यथा । नपाडुवापरोमन्त्रो
न्देव ' शैवरो . पर । नहिशै
वात्परोमार्गोनपुण्य कुलपूजना
त् ॥ आचारविशेषे ॥ यथा ।
अष्टाङ्गयोगसंयुक्तोयत्रेह शैवविधान
त यावज्ज्ञानसमाधिस्तावच्छै
व ' प्रवक्ष्यते ॥ विवाहविशेषे ॥
यथा । शैवोविवाहोद्विविध कु
लचक्रे विधीयते । चक्रस्य नियमे
नैकोद्वितीयोजीवनावधि . ॥ अ
पिच । परिणीतानरमिताकन्य
काविधवाभवेत् ॥ साप्युद्वाह्यापु
न विधार्थैवधर्मोऽव्यय विधि ॥
शिवस्यायम् । तस्येदमित्यण् ॥
शिवे । स्वार्थेऽण् ॥ वसुके । बक
पुष्पे ॥ धत्तूरे ॥ देशविशेषे ॥
शिवोनांविषयोदेश । विषयोदे
शइत्यण् । न० शिवपुराणे ॥
शैवालि ॥ त्रि० शिवसम्बन्धि
नि ॥
शैवल ' पु० शैवालि ॥ न० पद्म
काष्ठे ॥ शेवेशेतेतिष्ठति । शीङो
वृद्धश्चुक्वलञ्जवालनइतिवलच् ॥
शैवावधूत : । पुं० अवधूतविशेषे
॥ सचैतत् शैवमहानिर्वाणेसदा
शिवेन । पूर्णाभिषेकविधिनासं
स्कृतोयेऽमानवा । शैवावधूता
स्तेज्ञेया पूजनीया कुलार्चि
तैरिति ॥
शैवलिनी । स्त्री० तरङ्गिण्याम् ॥
तटिन्याम् । नद्याम् ॥ शैवलम-
स्त्यस्याम् । अतइनिठनावितीनि
। स्त्रियाङीप् ॥
शैवालम् । न० जलनील्याम् ।
शेवाले । शैवालतुवरतिक्तमधु
रशीतललघु । स्निग्ध दाहतृषा
पित्तरक्तज्वरहरपरम् ॥
शैवालिनी । स्त्री० नद्याम ॥
शैवी । स्त्री० शैवविवाहेनोढाहि
तायाम ॥
शैब्य । पुं० श्रीकृष्णरथस्याश्ववि
शेषे ॥ यथा । तुरगा : शैब्यसु
ग्रीवमेघपुष्पबलाहका ॥ पाण्ड
वानांसेनापतिविशेषे ॥
शैशवम् । न० शिशुत्वे । बाल्ये
॥ शिशोर्भाव कर्म वा । हायना
न्तयुवादिभ्यण् ॥
शैशिर । पुं० श्यामचटके ॥ दन्त
रोगविशेषे ॥ त्रि० शिशिरसम्ब
न्धिनि ॥
शैशुमारम । न० शिशुमाराकारे
ज्योतिश्चक्रे ॥
शाक : । पुं० मन्यौ । शुचि । व्या

अनुकम्प्ये

शोच्यक । वि० क्षुद्रे ॥

शोठ । वि० मूर्खे ॥ अलसे धूर्ते । नीचे ॥ पापरते ॥

शोण । पु० कृशानौ । अग्नौ ॥ श्योनाके ॥ लोहिताश्वे ॥ नदविशेषे । हिरण्यवाहौ ॥ योयममरकण्टकदेशात्पाटलिपुर्त्रं गङ्गायामिलित. ॥ समुद्रविशेषे ॥ रक्तवर्णे ॥ लवणाम्बुधे पारस्थे रक्तजलेऽगाधेशोणगासिन्निसरन्निपार्श्वे स्थितनदविशेषे ॥ अनुल्लटरक्ते । कोकनदवर्णे ॥ श्योनाकप्रभेदे ॥ न० सिन्दूरे ॥ रुधिरे ॥ वि० कोकनदच्छाये । कोकनदवर्णवति ॥ श्रे णति । शोणु वर्णगत्यो । पचाद्यच ॥ रक्तवर्णे ॥

शोणक । पु० श्योनाकतरौ । सोनापाठा॰ इ० भा० प्र० ॥ स्वार्थे क ॥

शोणज्योतीरथीसङ्गम । पुं० तीर्थविशेषे ॥

शोणभद्रिका । स्त्री० रक्तसैरेये ॥

शोणभिरण्टी । स्त्री० कुरवके ॥ काटकिन्याम् ॥

शोणपद्म । पु० रक्तपुनर्नवायाम् ॥

शोणपद्मम् । } न० } रक्तपद्मे ॥
शोणपद्मकम् ।

शोणपुष्प । } पु० } कुद्दाले ॥
शोणपुष्पक ।

कोविदारे ॥ शोणानि० तद्वर्णानि पुष्पाण्यस्य ॥

शोणपुष्पी । स्त्री० सिन्दूरपुष्पयाम् ॥

शोणप्रभव । पु० तीर्थविशेषे ॥

शोणरत्नम् । न० पद्मरागमणौ ॥ माणिक्ये ॥ शोणञ्च तद्रत्नञ्च ।

शोणा । स्त्री० शोणवर्णयुक्तायाम् । श्यामायाम् ॥ शोणात्प्राचामित्यन्येषामतेटाप् ॥

शोणाक । पु० श्योनाकवृक्षे । शुकनासे ॥

शोणितम् । न० रुधिरे । रक्ते ॥ कुङ्कुमे ॥ शोणितिस्म । शोणु० । गत्यर्थेति क्त ॥

शोणितचन्दनम् । न० रक्तचन्दने ॥

शोणितपुरम् । न० बाणासुरपुरे सराहण० इ० भा० प्र० । शोणितसंज्ञकपुरम् ॥

शोणितकुम् । न० कुङ्कुमे ॥

शोणितोत्पलम् । न० रक्तोत्पले ॥

शोणी । स्त्री० रक्तायाम् । रक्तोत्पलवर्णायामस्त्रियाम् । शोणात्प्राचामितिवाङीप् ॥

शोणोपल । पु० माणिक्ये ॥

शोथ । पु० शोफे । श्वयथौ । त्वग्विवर्द्धने ॥ श्वयति । श्वगतौ । बाहुलकात्० थ । ऋङ्करिस्यठ् ।

सदुत्तरखाख्यपु सुधीरम सम्मा नयुक्तामनुज . प्रबोध . ॥ शोभ नकृतिवत्सरे ॥ तत्फलयथा । सुभिक्ष र्धमसारोग्य ह्रष्टागोब्र.ह्मणा प्रिये । सुस्थिता. शोभनेवर्षेप्रजा सर्वा . सुशोभने ॥ १७ ॥ न० वारिजे । पद्मे ॥ त्रि० सुन्दरे । सुषमे । मनोज्ञे ॥ शोभते । शुभदीप्तौ । अनुदात्ततस्तात्युच् ॥ शोभयति । नन्द्यादित्वा वर्ा ॥

शोभनक । पु० शिग्रौ ॥

शोभकृत् । पु० शोभनेवर्षे ॥ त्रि० शोभनकारके ॥

शोभना । स्त्री० गोरोचनायाम् ॥ हरिद्रायाम् ॥ इ० रा० स्ट ॥

शोभनीय । त्रि० शोभितव्ये ॥

शोभमान । त्रि० विराजमाने ॥ यथा । मयि . शाखोद्ध्द० समरविजयोद्वेलितदुर्लिते० मदो वोनाग मरदितरित . श्यामपुलिना . । कलामेवचम्द्र सुरत मर्दिताबालवनितातनिम्ना।शोभन्ते गलितविभवाश्चार्थिषु नृपाकृति ॥

शोभा । स्त्री० कान्तौ । द्युतौ ॥ यस्यालक्षणयथा । सा।शोभारूप भोगाद्यैर्यत्स्यादङ्गविभूषणम् । शोभैवकान्तिराख्याता मन्मथाप्या यनोज्ज्वलेति । इच्छायाम् ॥

गो।पोविग्रेषे ॥ गोरोचनायाम ॥ हरिद्रायाम् ॥ कृतिच्छन्द २० प्रभेदे ॥ यथा । रसाश्वाश्चे शोभानयुगलजठरामेवविस्फूर्जिता चेत् ॥ यथा । सपोयूशेमीन तूसरसिजयुगलामध्यनम्रा।फलाभ्या कृतयोकूर्दराजतूलरलकिसलयास्मिष्टसुस्निग्धशाखा । लसम्भुक्कारलोत्पलकुवलयवन्द्रविम्बाञ्चिता यामद्य।शोभामीलौमिलदलिपटले कृष्णसाक्षापिवल्ली ॥ शोभय ति । शुभसुत्वशोभायाम् । पचाद्यच् ॥

शोभाञ्जन । पु० शिग्रौ । तीक्ष्णगन्धके । अक्षीवे । मोचके । सहेजना० सूंजना० इ० भा० प्र० ॥ शोभाञ्जन . कटूस्तिक्त शोथविद्रधिगुल्मनुत् ॥ शोभामनक्ति । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । कर्त्तरिल्युट् । बहुलमन्यत्रापीतियुक्त्वा ॥

शोभित । त्रि० शोभायुक्ते ॥

शोभनी । स्त्री० शोभनीयायाम् ॥

शोली । स्त्री० वनहरिद्रायाम् ॥

शोष । पु० शोषणे ॥ यक्ष्मणि ॥ सयोअथाद्रसादीनांशोषकृत्तभिधीयते । अथोमथयथा । वचा निकाटूकसद्वेवकारसुदेवदारुच । अक्षिशाविफलाझेताश्विरीशिरल-

शौण्डिक । पु० जातिविशेषे । श्रा सुतोवले । मण्डहारके । शूँडी० क लवार० इ० भा० प्र० ॥ अस्योत्प त्तिर्यथा । तसीगाम्बिककन्यायां के वर्त्तादेव शौण्डिक । कैवर्त्तस्य च कन्यायां शौण्डिकादेव सौण्डिक ॥ ब्र० प० पु० ॥ शुण्डा सुरा० पण्य मस्य । तदस्य पण्यमिति ठक् । शु ण्डिकादागतो वा । शुण्डिकादिभ्यो ण् ।

शौण्डी । पुं० शौण्डिके ॥

शौण्डी । स्त्री० पिप्पल्याम् ॥ चव्ये ॥ कटभ्याम् । मधुरेणौ ॥ शुण्डा यामद्यपानगृहे भवा । तत्र भवइत्य ण् । ङीप् ॥

शौण्डीर: । त्रि० शूरे । अहङ्कारिणि ॥ शौटति । शौट्ट० । औणादिक ईरन् । पृषोदरादित्वान् म० टस्य डश्च ॥

शौण्डीर्य्यम् । न० पौरुषे ॥ शौर्ये ॥ भावे० ष्यञ् ॥

शौद्र । पु० द्वादशविधपुत्रान्तर्गतपु त्रविशेषे । पारशवे । त्रि० शूद्रस म्बन्धिनि ॥

शौद्धोदनि: । पुं० शाक्यवंशीयमुनि विशेषे । सर्वार्थसिद्धे । गौतमे । मायादेवीसुते । शुद्धोदनस्य नृपति विशेषस्यापत्यम् । अतइञ् ।

शौधिका । स्त्री० रक्तशीधु० है० चन्द्र ॥

शौन: । त्रि० पशुघातिनि ॥

शौनक । पु० ऋषिविशेषे । अतिध न्वनि ॥ शुनकस्यापत्यम् । बिदा द्यञ् । कापेयमुनिविशेषे ॥

शौभ । पु० निलिम्पे । देवे । सुरे ॥ गुवाके । न० व्योमपुरे । हरिश्च न्द्रपुरे । हरचंदाबली० इ० भा० प्र० ॥ त्रि० शुभान्विते ॥

शौभाञ्जन । पु० शिग्रौ ॥ शोभाञ्ज नवृक्ष । प्रज्ञाद्यण् ॥ अस्य गुणप्र कारस्तु । शिग्रुमूलफलपुष्पकटूत्त तैलपत्रमुदकेष्वाधिकृतम् । शिग्रु सैन्धवरसोयुतचिक्कणोवर्तसपदिदी पनमन्नं ॥ शिग्रुक कटुतीक्ष्णो ष्ण: वायुशोथसमीरजित् । कृमि हृत्कासदोषवसयातिशोषशुक्रकः ।

शौभाञ्जनफलम् । न० शिग्रुफले ॥ शौभाञ्जनफलस्य गुणा यथा कफपित्त नुत् । शूलकुष्ठक्षयश्वासगुल्महृद्दी पन परम् ॥

शौभिक । त्रि० इन्द्रजालिके । कुह कजीविनि ॥ इ० हाराबली ॥

शौरि । पुं० वसुदेवे । वासुदेवे ॥ श्री कृष्णे ॥ शूरस्यापत्यम् ० वंशत्वात् । श्वित्वेऽनन्यवत्स्यापत्यादभा वम् । तथापि बाह्वादित्वादिञ् । शनैश्चरे ॥

शौर्य्यम् । न० आरभट्याम् ॥ बले ।

शशी ॥ शूरस्यकर्म भावोवा । ष्य ञ् ॥ उत्साहे ॥

शौल्क । पु॰ शुल्कसम्बन्धिनि ॥

शौल्कशालिक । पु॰ शुल्कशालाया मवक्राये ॥ भवक्रयद्वृशिठक् ॥

शौल्किक । त्रि॰ शुल्काध्यक्षे ॥

शौल्किकेय । पु॰ विषप्रभेदे ॥ शु ल्किकदेशेभव । इतिकुक्षोतियो गविभागाट्ठञ् ॥

शौल्विक । पु॰ कंसकारे । ताम्रकु ट्टके । कसेरः॰ कू॰ भा॰ प्र॰ ॥ शु ल्वाघट्टन शिल्पमस्य । शिल्पमिति ठक् ॥

शौव पु॰ श्वभिर्दृष्टे सामविशेषे ॥ दृष्ट सामेत्यण ॥ न॰ शुनासमूहे । खण्डिकादित्वोदञ् ॥

शौवस्तिकम् । त्रि॰ आश्विदिनस्थायि नि द्रव्ये । श्वस्तने ॥ श्वोभवम् । श्वसस्तुट्चेति॰ ठक । ऐजागम ॥

शौवापदम् । त्रि॰ श्वापदे । श्वापद सम्बन्धिनि ॥ श्वापदस्येदम् । अण् । पदान्तस्यान्यतरस्यामितिपक्षे॰ ऐच् ॥

शौषिर । पु॰ दन्तरोगविशेषे ॥ य था । श्वयथुर्दन्तमूलेषुरुजावान् कफरक्तज । लालास्रावीसविज्ञे य. शौषिरोमामनामत ॥ ४ ॥

शौष्कल : । पु॰ शुष्कमांसस्यापणिके कि॰ पिशिताशिनि ॥ शुष्कलोंशु ष्कमांस॰ मांसमात्र वाऽस्ति । शे षद्रूत्यण ॥

श्च्योत । पु॰ प्राघारे । क्षरणे ॥ शच्योतनम् । श्च्युतिर्क्षरणे । घञ् ॥

शच्योतन् । त्रि॰ क्षरति ॥

श्म ॥ न॰ नाम्त ॰ मुखे ॥

श्मशानम् । न॰ प्रेतदाहभूमौ । श वस्थाने । पितृवने ॥ शवा शेरते ऽत्र॰ शवानाशयन वा । पृषोदरा दित्वात्साधु ॥ श्मशब्देनशव प्रो क्त शानशयनमुच्यते । निर्वचन्ति श्मशानार्थं मुनेशब्दार्थकोविदा ॥

श्मशानकाली । स्त्री॰ कालीविशेषे ॥

श्मशानवासी । पु॰ शिवे ॥ त्रि॰ श्म शानवासकर्त्तरि । श्मशानेवस्तु शी लयस्य । वस॰ । सुप्यजातौणिनि ॥

श्मशानवासिनी । स्त्री॰ कालिकाया म् ॥

श्मशानवेश्मा । पु॰ गिरिशे । शम्भौ ।

श्मशानालयवासिनी । स्त्री॰ कालि कायाम् ॥ श्मशानालयेवस्तु शील मस्या । णिनि । ङीप् ॥

श्मश्रु । न॰ पुमुखेलोमन्द्रढोड्ढौ ॥ ॰ भा॰ कोशश्मश्रुधारयतामघ्याभ वतिसन्ततिरितिदानधर्मे भारतम् ॥ श्म॰ मुखमश्नुते । अश॰ । श्म निश्रयतेडुन् ॥ यद्वा । श्मनिमुखे श्रूयते॰ उपलभ्यते । श्रु॰ । मिते

द्वादित्वात् ङ् । क्लिब् वा । आग मशास्त्रस्यानित्यत्वान्नतुक् ॥

श्मश्रुमुखी । स्त्री॰ श्मश्रुयोषिति । पो टायाम ॥

श्मश्रुल । त्रि॰ प्रवृद्धश्मश्रुयुक्ते । सचति । सिध्मादित्वात् लच् ।

श्माशानिक । पु॰ पिशाचनेपाठादि कर्त्तरि । नसापिप्ला॰ कृ॰ भा॰ प्र॰ । श्मशानेऽधीते । अध्यायिन्य देशकालादितिठक् ।

श्यान । त्रि॰ शीतात् सङ्कुचिते । स ङ्कुचितमात्रे ॥ श्यायतेस्म । श्यै ङ् गतौ । क्त । संयोगादेरातोधा तोर्यण्वतइतिनिष्ठानत्वम ॥

श्याम । पुं॰ प्रयागस्थवटे । वारिदे । वृद्धदारके । पिके । कोकिले ॥ कृष्णवर्णे ॥ हरिद्वर्णे ॥ श्यामाके ॥ नीलवर्णे ॥ धत्तूरे ॥ दमनकवृ क्षे ॥ गन्धतृणे ॥ न॰ मरिचे ॥ सिन्धुलवणे ॥ त्रि॰ कृष्णवर्णवि शिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेस गोयस्मात् । श्यै ङ्॰ । इषियुधीधि दसिश्याधूसूभ्योमगितिमक् ॥ पु॰ ऋषभादिकाते॰ तमालदलनि भे॰ चन्दनविशेषे ॥ श्रीकृष्णे ॥

श्यामक । पुं॰ श्यामाके । सांवक इतिभाषाप्रसिद्धे । न॰ रोहिष तृणे ॥ श्यामवर्णं मनुकरोति । च क्र॰ । कर्मण्यण् । श्यामकृद्भिः ॥

श्यामकण्ठ । पुं॰ मयूरे ॥ शिवे ॥ पक्षिविशेषे ॥

श्यामकन्दा । स्त्री॰ अतिविषायाम् ॥

श्यामकाण्डा । )
श्यामग्रन्थि । ) स्त्री॰ गण्डदूर्वाया म् ॥ गण्डाख्याम् । नीलनेत्राया म् ॥

श्यामपत्र । )
श्यामपत्रक । ) पु॰ तमालपादपे ॥

श्यामल । पु॰ पिप्पले । कृष्णे । श्यामे ॥ नीलमार्के । त्रि॰ कृष्ण वर्णविशिष्टे । सिध्मादित्वात् लच् ॥

श्यामलचूडा । स्त्री॰ गुञ्जायाम् ॥

श्यामलता । स्त्री॰ शारिवायामोषधौ ॥ श्यामलिनि ॥

श्यामला । स्त्री॰ पार्वत्याम् । कस्तू र्याम् ॥ पक्षगन्धायाम ॥ जम्बा म् ॥ कटभ्याम् ॥

श्यामलिका । स्त्री॰ नील्याम् ॥

श्यामलिङ्ग । पु॰ कृष्णे ॥

श्यामवल्क । पु॰ शिरीषे ॥

श्यामसुन्दर । पु॰ श्रीकृष्णे ॥

श्यामशालि । पु॰ कृष्णशालौ ॥

श्यामा । स्त्री॰ कालिकायाम् । दुर्गा याम । पार्वत्याम् ॥ श्यामायाउ त्पत्तिर्यथा । ततः सा कालिकादे वीयोगनिद्राजगन्मयी । पूर्वस्व त्सतीरूपाजन्मार्थमेनकायशो ॥ समयक्रानुरूपेणमेनकाजठरेशिवा

। सम्भूयचसमुत्पन्नासालक्ष्मीरिव
सागरात् ॥ वसन्तसमयेदेवीनवम्यां
मृगयोगत ।अर्द्धरात्रौसमुत्पन्नाग
र्भ्य्यश्चिमण्डलात् ॥ ततस्तस्यान्तु
जातायाप्रसन्नाश्चाभवन्दिश ।सा
नुकूलोववौवायुर्गन्धीरोगन्धिल
शुभ ॥ बभूवपुष्पवृष्टिश्चतोयवृष्टि
परातथा ।जज्वलुश्चाग्नय श्या
न्ताजगर्ज्जुश्चघनाघनम् ॥ तस्यान्तु
जायमानायासर्व्वस्याश्रमपद्यत ।
तान्तुदृष्ट्वायथाजातांनीलोत्पलदला
नुगाम ॥ श्यामांसामेनकादेवीमु
दमायातिहर्षिता । देवाश्चहर्षम
तुल प्रापुस्तत्रमुहुर्मुहु ॥ तुष्टुवु
स्तामन्तरीक्षे गन्धर्व्वाश्चाप्सरोगणा .
। तान्तुनीलोत्पलदलश्यामांहिमव
त सुताम् ॥ कालीतिनाम्नाहिमवा
नाजुहावकृतेदिने । बान्धवास्तुस
स्तानांनामतांपार्व्वतीतिच॥ का
लीतिचतथानाम्नाकीर्त्तितागिरिन
न्दिनीतिकालिकापुराणे ४० अ
ध्याय ॥ शारिवौषधौ ॥ कृष्णवृन्ते
ताशारिवायासाश्यामेतिनिगद्यते
॥ अप्रसूताङ्गनायाम् ॥ नारीविशे
षे । यौवनमध्यस्थायाम् । तस्याल
क्षण यथा ।स्निग्धनखनयनदशना
निरनुशयामानिनोस्थिरस्नेहा । सु
स्पर्शशिशिरमांसलवराङ्गनासाम
ताश्यामेति ॥ छायायाम् । भावा

नुरूपायाम् ॥ प्रियङ्गौ ॥ वागुजी
। सोमलतायाम् ॥ यमुनायाम् ॥
त्रियामायाम् ॥ कृष्णत्रिवृत्तिकौष
धौ । यथा । श्यामात्रिवृत्ततोहो
नगुणातीव्रविरेचिका । मूर्च्छादा
हमदभ्रान्तिकण्ठोत्कर्षणकारिणी
॥ नीलिकायाम् ॥ गुग्गुलौ ॥ गु
न्द्रायाम् । गुडूच्याम् ॥ कस्तूर्या
म् ॥ वटपत्र्याम् ॥ वन्ध्यायाम् ।
रिचनायाम ॥ नीलपुनर्नवायाम्
॥ पिप्पल्याम् । कृष्णायाम् ॥ ह
रिद्रायाम् ॥ नीलगव्याम ॥ नील
दूर्वायाम् ॥ स्त्रियाम ॥ पद्मवीजे ॥
शिंशपायाम् ॥ पक्षिविशेषे । वा
राह्याम् । पाण्डविकायाम् । श
कुन्याम । पीतक्याम । कालिका
याम । शितिसिम्बिन्याम् ॥ श्या
मोवर्णोऽस्त्यस्या । अर्श आद्यच्
॥ मगन्ताद्वाटाप् ।

श्यामाक । पु॰ तृणधान्यभेदे । श्या
मके । श्यामेचिवीजे । ऋषिप्रिये
। राजधान्ये । सावां॰ सांवक॰
इ॰ भा॰ प्र॰ ॥ श्यामाक . शोष
णोरूक्षोवातल ' कफपित्तहृत् ॥
श्यायति । श्यैङ्॰ । पिनाकादय
श्चेतिसाधु ॥ यद्वा । श्याम वर्ण्ण
म्॰ अकति । अक॰ । कर्मण्य
ण् ॥

श्यामाङ्गः । पुं॰ बुधग्रहे ॥ त्रि॰ श्या

श्येन । पु॰ पक्षिविशेषे । श्यायते । पक्षिणि । बाज॰ इ॰ प्र॰ ॥ महाकायेमन्दवेग श्येनद्भात व्याख्यातार ॥ श्यायते । श्यैङ॰ । बाहुल्यादिन्विभ्यश्चनच् । पाण्डुरे । शुक्ले ॥ त्रि॰ तद्वति ॥

श्येनघण्टा । स्त्री॰ दन्तीवृक्षे । एरण्डफलायाम् ॥

श्येनचित् । पु॰ चाहवनीयधारणार्थं॰ इष्टकाभिर्निर्मितेस्थलविशेषे ॥ श्येनइवचित । चिञ॰ । कर्मण्यग्न्याख्यायामिति क्विप ॥

श्येनजीवी । पु॰ क्रयविक्रयादिना श्येनैर्जीवति॰ तस्मिन् ॥

श्येनी । स्त्री॰ शुक्लवर्णायाम् । वर्णादनुदात्तात्तोपधात्तोनइति॰ ङीप्॰ तकारस्यनकारादेशश्च ॥ त्रिष्टुपछन्द ११ प्रभेदे ॥ यथा । श्येन्युदीरितारजौरलौगुरु ॥ यत्कीर्त्तिरिन्दुकुन्दचन्दनश्येनशोभिताऽपावनीसदा । ऽत्रवीच विश्ववन्द्यविभ्रमातभजामिभावगम्यमच्युतम् ॥ श्येनयोषिति ।

श्येनीपुत्र । पु॰ जटायुषि । सम्पातेरनुजे । दशरथराजसखे ॥

श्येनम्पाता । स्त्री॰ मृगयायाम् ॥ पतनम्पात । श्येनस्यपात । कर्तृषष्ठ्यासमास । श्येनपातोऽस्यांवर्त्तते । घञ साक्षात्क्रिये तिञ । श्येनतिलस्यपातेञ॰ इतिमुमागम ॥

श्योनाक । पु॰ श्योनाकद्रुमे । सोनागाछ इ॰ गौ॰ भा॰ प्र॰ ॥ अस्यपर्यायायथा । मण्डूकपर्णपत्रोर्णनटकट्वङ्गटुण्टुकाः । स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ॥ शोणकश्चारलाविति । सोनापाटा॰ इ॰ भा॰ प्र॰ ॥ अस्यगुणा यथा । श्योनाकोदीपन पाककटुकस्तुवरोहिम । ग्राहीतिक्तोऽनिलश्लेष्मपित्तकासामनाशन ॥ टुण्टुकस्यफलबालरूक्ष वातकफापहम् । हृद्यकषायमधुररोचनलघुदीपनम् । गुल्मार्शःकृमिहृत् प्रौढ गुरुवातप्रकोपणम् ॥ श्यायते । श्यैङ्गतौ । पिनाकादौ निपातित ॥

श्रत् । अ॰ श्रद्धायाम् ॥

श्रथनम् । न॰ वधे ॥ यत्ने ॥ पुनःप्रहर्षणे ॥ बन्धने ॥ मोक्षणे ॥ शिथिलीकरणे ॥

श्रद्धान । त्रि॰ श्रद्धायुक्ते । श्रद्धावति ॥ यथा । श्रद्धधान शुभाविद्यामाददीतावरादपि । अन्त्यादपिपरधर्म स्त्रीरत्नदुष्कुलादपीति ॥ श्रत्॰ श्रद्धाञधर्तोविभाषा ॥

श्रद्धा । स्त्री॰ सम्प्रत्यये । आदरे । आस्तिक्यबुद्धौ । शास्त्रार्थप्रत्यये ॥

मे । आयासे । व्यायामे ॥ तपसि ॥ खेदे । गमनादिप्रयुक्तखेदादौ । श्रम · खेदोऽध्वरथ्यादेरितिलक्षणम् ॥ आम्यत्यनेन । श्रमुतपसिखेदे । घञ् । नोदात्तोपदेशस्येतिवृद्ध्यभाव ॥

श्रमण · । पु॰ तपस्विनि । श्रमणा परिव्राडितिपूज्यपादा ॥ बुद्धभिक्षुके । निर्ग्रन्थे । यतौ । जति॰ · कू॰ भा॰ प्र॰ । न॰ श्रमे । त्रि॰ निन्द्यजीविनि ॥ तपस्विनि ॥ श्राम्यति । श्रमु॰ । ल्यु ॥

श्रमणा । स्त्री॰ सुदर्शनायाम । मांस्याम् । मुण्डीर्याम् । शबरीभेदे ॥

श्रमणी । स्त्री॰ चतुर्थाश्रमप्राप्तायाम् । तपस्विन्याम् ।

श्रमवारि । न॰ आयासेनखेदबिन्दौ ॥

श्रमी त्रि॰ श्रमयुक्ते ॥

श्रय . । पु॰ श्रयणे । आश्रये । श्रयणम् । श्रिञ् सेवायाम् । एरच् ॥

श्रयणम् । न॰ आश्रये । आश्रये ॥ श्रिञो ल्युट् ॥

श्रव · । पुं॰ कर्णे । श्रवणे । श्रूयतेऽनेनश्रवणं वा । श्रुश्रवणे । ऋदोरप् ॥

श्रवण . । पु॰ नक्षत्रविशेषे । श्रवणायाम् । न॰ श्रुतौ । श्रोत्रकर्मणि । श्रुतिस्मृतीतिहासपुराणेषुशब्दतात्पर्यावधारणे । तदर्थनिर्द्धारणात् कूलन्यायविचारे ॥ षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयेवस्तुनितात्पर्यावधारणे ॥ वेदान्तानामशेषाणामादिमध्यावसानतः । ब्रह्मात्मन्येव तात्पर्यमितिधी श्रवणं भवेदित्युक्तं ॥ आचार्यस्यमुखादेवश्रवणं सफलभवेत् ॥ कर्णेन्द्रियेणसगुणस्यनिर्गुणस्यवाशब्देनज्ञाने । सुनना॰ कू॰ भा॰ प्र॰ । पु॰ न॰ कर्णे । कान॰ कू॰ भा॰ प्र॰ ॥ कर्णे पुनपुंसकयो । श्रवणावनिलस्येति दर्शनात् । नस्त्रियाश्रवण कर्णकु तिहैमसाव्यभिधानाच्च ॥ श्रूयतेऽनेन । करणे ल्युट् ॥

श्रवणद्वादशी । स्त्री॰ श्रवणनक्षत्रयुक्ताया भाद्रशुक्लाद्वादश्याम् ॥

श्रवणशीर्षिका । स्त्री॰ श्रावणीवृक्षे । मुण्डीर्याम् ॥

श्रवणा । स्त्री॰ द्वाविंशतितमेनक्षत्रे ॥ तत्रजातस्यफलयथा । शास्त्रानुरक्तो बहुपुत्रमित्र सत्पुत्रभक्तिर्विजितारिवर्ग । चेज्जन्मकालेश्रवणा हियस्यप्रसोपुराणश्रवणप्रवीण ॥ श्रावणपूर्णिमायाम् । श्रावण्याम् ॥ श्रवणेनयुक्तापौर्णमासी । नक्षत्रेणेत्यण् । तस्य॰ लुबविशेषकृति लुप् । टाप् । मुण्डीरीवृक्षे ॥

श्रवणाह्वा । स्त्री॰ मुण्डीरिकायाम् ।

श्रव . । न॰ यशसि ॥ कर्णे ॥ श्रूयते

तम् । क्रियतेवापवर्गियत् तत् पार्वणमितिस्थितिः ॥ गोष्ठ्यांयत् क्रियतेश्राद्ध गोष्ठीश्राद्ध तदुच्यते । बहूनाविदुषांसम्यक् सुखार्थं पितृतृप्तये ॥ क्रियतेश्राद्धयेयत्तुब्राह्मणानान्तुभोजनम् श्रद्ध्यर्थमितितत्प्रोक्तं वैनतेयमनीषिभिः । निषेककालेसोमेचसीमन्तोन्नयनेतथा । ज्ञेयं पुंसवनेचैवश्राद्धकर्माङ्गमेवच ॥ देवानुद्दिश्ययच्छ्राद्धतद्दैविकमिहोच्यते । हविष्येणविशिष्टेनसप्तम्यादिषुयत्नतः ॥ गच्छन् देशान्तरयत्तु श्राद्धकुर्यात्तुसर्पिषा । यात्रार्थमितितत्प्रोक्तप्रवेशेचनसंशयः ॥ शरीरोपचयेश्राद्धमर्थोपचयएवच । पुष्ट्यर्थमेतद्विज्ञेयमौपचयिकमुच्यते • इति ॥ पञ्चविधमपिश्राद्धस्मृतिवचनात्तद्यथा । नित्यं नैमित्तककाम्यद्विश्राद्धंतथैवच । पार्वणञ्चेतिमनुनाश्राद्धपञ्चविधस्मृतमिति ॥ श्रद्धान्वितः । प्रज्ञाश्रद्धार्चिष्योयज्ञलिणः ॥ यद्वा । श्रद्धाप्रयोजनमस्य । चूडादिभ्यउपसङ्ख्यानमित्यण् ॥ कालावशानुष्ठानमागमोक्तविधिनैवकार्यम् । यथाहभगवान् सदाशिवः । आगमोक्तविधिंहित्वायः श्राद्धकुरुतेनरः । श्राद्धतज्ञफलंसोपि पितृभिर्नरकंव्रजेत् ॥ ततृतीयंशो

धितसमपिण्डोमलमयोभवेत् । तस्मान् मत्यं प्रयत्नेनश्राद्धरमतमाश्रयेत्द्वति ॥ वि॰ श्रद्धान्विते ॥

श्राद्धदेव । पु॰ यमके । धर्मराजे । यमे ॥ श्राद्धस्यदेवः • अग्रभावत्वात् • पितृपतित्व द्वा ॥

श्राद्धप्रदेश । पु॰ गयादितीर्थादिषु ॥

श्राद्धशाकम् । न॰ कालशाके ॥

श्राद्धिक । वि॰ श्राद्धिनि । अद्यतनएवश्राद्धान्नभोजिनि । श्राद्धशब्द कर्मनामधेयतस्माधर्मेद्रव्यो लाघवायावसते । श्राद्धभुक्तमनेन । श्राद्धमनेनभुक्तमितिठनाविति ठन् ॥ श्राद्धामव्विद्रव्ये ॥

श्राद्धी । स्त्र॰ श्राद्धिके ॥ श्राद्धमनेनभुक्तमितीनि • ॥

श्रान्त । पु॰ यतौ । शान्ते ॥ वि॰ क्लान्ते । श्रमयुक्ते ॥ श्राम्यति क्त ॥

श्रान्तक्लथ । वि॰ निवृत्तसन्तापे ॥

श्रान्तसंवाहनम् । न॰ श्रमान्वितस्यासनादिप्रदानद्वाराश्रमोपशमने ॥

श्राम । पु॰ मासे ॥ मण्डपे ॥ काले ॥

श्रामणेर । पु॰ जिनभिक्षौ शिष्ये । चेलुके । महामासके ॥

श्राय । पु॰ आश्रये । अयने ॥ श्रयणम् । श्रिञ् सेवायाम् । श्रिणीभुवोनुपसर्ग इतिघञ् ॥ वि॰ श्रीदेवताकेऽहिरादौ ॥ श्रीर्देवताऽस्य

ती ॥ बिल्वद्रुमे ॥ अङ्गुली ॥ अधिकारे ॥ प्रभायाम् ॥ कीर्त्तौ ॥ वृद्धौ ॥ सिद्धौ ॥ इत्यादि व्याप्तरि । ताराथाम् । बुद्धि देव्याम् ॥ श्रयतिहरिम् । श्रयन्ते तामितिवा । श्रिञ । क्विब्वचीति । क्विब्दीर्घौ । कर्त्तरि विहितस्यक्विप कर्मण्यप्यसम्भव कृदिकारादक्तिन इतिङीष तुन । क्तप्रत्ययोयत्रकारइतिव्याख्यानात् । कृदन्तं यदिकारान्तमितिपक्षेऽपि कार ग्रहणं तत्सामर्थ्याद्देवकेवलग्रहणात् । दुर्घटस्तु । ङीषि । श्रीमितापि रचितद्रष्टतीत्याह ॥ विद्यायाम् ॥ श्रयतिपारतन्त्र्याच्चिदात्मानमिति श्री ॥ राजलक्ष्म्याम् ॥ शरीरशोभायाम् । सर्वोतकृष्टत्वेना न्तस्याश्रयतया स्त्रीक्रियतेप्रलयसुषुप्तावीसर्वभूतैरिता तया । जीवस्वोपाधिभूयामामविद्यायाम् ॥ देवादिनाम पूर्वश्रीशब्दप्रयोग कर्त्तव्यइत्याह । देवगुरुगुरुस्थानचैत्यचैत्याधिदेवताम् । सिद्धसिद्धाधिकारांश्चश्रीपूर्वसमुदीरयेदितिप्रयोगसार । ॥ स्वर्गगामित्वादिनासिद्धेऽधिकारीयेषांनराणामितायेन । जीवताश्रीशब्दादित्वमाप्नोनतुमृतानांतथेतांधुनिकशिष्टानामाचार ॥ पत्रेश्रीशब्द

नप्रमाण यथा । चतुरौ स्वामिन पञ्चैभृत्येचतुरोरिपौ । श्रीशब्दानांवयमिवएकं कापुत्रभार्ययोरिति ॥ उक्तथाया १ इत्तौ ॥ ग श्री । यथा । श्रीस्ते । सास्ताम ॥

श्रीकण्ठ । पु॰ नीलकण्ठे । शिवे ॥ कालकूटविषधारणात् । श्रीशोभाकण्ठेयस्य । धृतकण्ठेविष घोरतत । श्रीकण्ठताममेति नीलकण्ठस्तत ॥ कुरुजाङ्गलदेशे ॥

श्रीकण्ठपदलाञ्छन । पुं॰ मालतीमाधवनाटककर्त्तरि । भवभूतिकवौ ।

श्रीकण्ठसख । पुं॰ कुबेरे ॥ द्रु॰ इ॰ युध ॥

श्रीकन्दा । स्त्री॰ वन्ध्याकर्कोटक्याम् ॥

श्रीकर । पु॰ विष्णौ ॥ स्मरतांस्तुवताकीर्त्तयतामर्चयतांभक्तानांश्रियमीचसांसाम्यं लक्ष्मीं करोति । कृञोहेतुताच्छील्यानुलोम्येष्विति ट ॥ न॰ रक्तोत्पले ॥ त्रि॰ श्रीकारके ॥ करोति । डुकृञ । अच् ॥ श्रियं कर ॥

श्रीकरण । न॰ लेखन्याम् ॥

श्रीकरी । स्त्री॰ शक्तिविशेषे ॥

श्रीकान्त । पुं० विष्णौ ॥

श्रीकारी । पुं० मृगविशेषे । विगिहारिणे ॥ इ० रा० नि० वट: ॥

श्रीकुञ्जम् । न० सरस्वत्यास्तीर्थे ॥

श्रीखण्ड । पुं० न० चन्दने । इ० त्रि० शेष । ॥

श्रीगर्भ । पुं० विष्णौ ॥ श्रीविंभूति० गर्भे ॥ खड्गे ॥

श्रीघ्न । पुं० पश्चिमापाञ्चालीय भाषायाम् । अद्य निप्रपाबाम् ॥

श्रीघन । पुं० सन्मार्गे । बुद्धे । जिने । मुनीन्द्रे ॥ श्रिया० ज्ञानपुण्यसम्भारेण० बुद्ध्या वा० घन पूर्णं चतुर्भिरित्यस्तत्त्वम् ॥ न० दध्नि ॥

श्रीज । पुं० कामदेवे ॥

श्रीताल । पुं० तालसदृशवृक्षविशेषे । मृदुताले । हिमालयजे । मसीलेख्यादौ ॥

श्रीतीर्थम् । न० तीर्थविशेषे ॥

श्रीद । पुं० पुण्यजनेश्वरे । कुबेरे ॥ श्रियं ददाति० ददातीति । देवोद्भीशा० आतश्चेतिक ॥ भि० श्री० ६ । शीभाद्रतरि ॥

श्रीदेवी । स्त्री० तीर्थविशेषे ॥

श्रीधर । पुं० विष्णौ ॥ श्रिया० लक्ष्मीं धरतीति धारक ॥ भूतार्थे जिनदेवे ॥ शालग्रामविशेषे । यथा । अति क्षुद्रं चक्रमतुलवनमालाविभूषितम् । श्रीधर इति विख्यातो यश्रीपदगृहिणां सदा ॥

श्रीनगरम् । न० श्रीविद्यास्थाने ॥

श्रीनन्दन । पुं० कामदेवे ॥

श्रीनिकेतन । पुं० विष्णौ ॥

श्रीनिवास । पुं० विष्णौ । नारायणे ॥ श्रियो निवास । निविश्यते० अपादाने० श्रीवत्सत्वं चवायस्यवत्सिमनपाविनिश्रीच-सति० सप्तत्पर्य: । यथा । श्रियोनिवासी यस्योर: पानपात्रं मुखं दृशाम् । बाहवो बान्धवानां सारङ्गानां पदाम्बुजमिति ॥ यद्वा श्रीयन्त्रे यश्रीमत्त्रोऽस्य । श्रीमन्त्र नित्यनिवासोऽस्य । यतोऽत्र कौस्तुभोऽरिरत्युक्त ॥

श्रीपति । पुं० पुरुषोत्तमे । विष्णौ ॥ अमृतमथनसमये सा रामूसंविन् देवाय विश्वाय विष्णु नेवपतित्वेनमहत्ववतीति विष्णुपुराणप्रसिद्धे ॥ श्रिय: पति ॥ नृपती । पृथिवीनाथे ॥

श्रीपथ: । पुं० राजमार्गे ॥ इ० हे० चन्द्र ॥

श्रीपर्णम् । न० अग्निमन्थे ॥ पद्मे । श्री पर्णे० पर्णशुभाऽस्य । पर्णपावन ।

श्रीपर्णिका । स्त्री० कट्फले । कायफल० इ० प्र० ॥ कास्मर्याम् ।

गम्भार्याम् ॥ स्वार्थे कन् । ङस्व ॥

श्रीपर्णी । स्त्री॰ काश्मर्याम् । गम्भायाम् ॥ इठे । कुम्भयाम् । वाटिपर्ण्याम् ॥ श्रीयुक्तानिपर्णान्यस्याः ॰ श्रीपर्णे पुष्पस्थाना । पाक्काकर्ण प र्णेत्यादिनाङीष् ॥ कट्फले ॥ शाल्मली ॥

श्रीपर्वत । प॰ श्रीशैले ॥ तीर्थविशेषे ॥

श्रीपिष्ट । पु॰ सरलद्रुमरसे । सरलद्रवे ॥ श्रिय सरलद्रुमस्यपिष्ट ॰ तच्चूर्णेमजनितत्वात् ॥

श्रीपुत्र । पु॰ अश्वे ॥ कामदेवे ॥

श्रीपुष्पम् । न॰ लवङ्गे ॥ पद्मकाष्ठे ॥

श्रीप्रसूनम् । न॰ लवङ्गे ॥

श्रीफल । पु॰ बिल्वे । मालूरे ॥ श्रीप्रद ॰ श्रीप्रियवाफलमस्य । शाकपार्थिवादि । । श्रीफलस्तुबस्ति शोधात्तीक्ष्णोऽग्निपित्तकृत् । वात श्लेष्महरोवल्योलघुरुष्णश्चपाचन । राजादनवृक्षे ॥

श्रीफला । स्त्री॰ आमलक्याम् ॥ नील्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥

श्रीफलिका । स्त्री॰ आमलक्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥ महानीलीवृक्षे ॥

श्रीफली । स्त्री॰ धात्र्याम् । आमलक्याम् ॥ नीलिकायाम् ॥

श्रीवल्ली । स्त्री॰ कट्फलायाम् ॥

श्रीभद्र । पु॰ चित्रगुप्तसुतेकायस्थजातिविशेषे ॥

श्रीभद्रा । स्त्री॰ भद्रमुस्तके ॥

श्रीभागवतम् । न॰ पुराणार्थे । महापुराणान्तर्गतपुराणविशेषे ॥

श्रीभ्राता । पु॰ घोटके ॥ विधौ । चन्द्रे ॥ समुद्रोत्पन्नत्वात् ॥

श्रीमान् । पु॰ तिलकवृक्षे । अशोके ॥ अश्वत्थवृक्षे ॥ शिवे ॥ विष्णौ ॥ कुबेरे ॥ वृन्दे ॥ त्रि॰ मनोज्ञे ॥ धनिके । श्रीले ॥ सर्वातिशयितश्रियि । अखण्डितैश्वर्यसम्पन्ने ॥ महाराजचक्रवर्त्तिनि ॥ श्री लक्ष्मी सम्पत्॰ शोभा॰ कान्तिर्वा॰ सा अस्मिन्नस्ति । तदस्यास्त्यस्मिन्निति मतुप् । वचोयजूंषिसामानिसाहिश्रीरमृतासताम् । तथा युक्तामहात्मान . श्रीमन्त . प्रास्तसम्मता ॥

श्रीमति . । स्त्री॰ राधायाम् ॥

श्रीमती । स्त्री॰ श्रीयुक्तायाम् ॥ वैधितामभिधानस्यपूर्वमेतत्प्रयोजयेत् ॥

श्रीमद . । पु॰ धनमदे । सर्वमदाधमे ॥ यथा । नह्यन्योजुषतोजोष्यान बुद्धिभ्रंशोरजोगुण । श्रीमदादाभिजात्यादिर्यत्रस्त्रीद्यूतमासव ॥ हन्यन्तेपशवोयत्रनिर्दयैरजितात्मभि । मन्यमानैरिमंदेहमजरामृ

स्य० मङ्गलम् ॥
श्रीमलापहा । स्त्री० धूम्रपत्रायाम् ॥ गन्धपत्रायां ॥
श्रीमस्तक । पु० रसोने ॥ त्रि० श्रेष ॥
श्रीमुख । पुं० सप्तमेवत्सरे ॥ तत्फलयथा । सुभिक्षं क्षेममारोग्यं वर्षाकाल सुशोभनम । सस्यवृद्धि विज्ञानीयात् श्रीमुखेसुरवन्दिते ॥ ७ ॥ न० शोभितानने ॥
श्रीमूर्त्ति । स्त्री० देवताविग्रहे ॥ विष्णुप्रतिमायाम् ।
श्रीयुक्तः । श्रीयुतः । त्रि० लक्ष्मीविशिष्टे । श्रीमति ॥
श्रीरङ्ग । पुं० पुण्यक्षेत्रविशेषे । श्रीरङ्गाख्य महापुण्य यत्रसन्निहितोहरिरितितन्त्रम् ॥
श्रीरसः । पु० सरलरसे । श्रीवेष्टे ॥
श्रीराग । पुं० षड्रागान्तर्गततृतीयरागे ॥
श्रीराम । पुं० दशरथात्मजे ॥
श्रील । त्रि० श्रीमति । लक्ष्मीवति । लक्ष्मणे । श्रियायुक्ते ॥ श्रीरस्यास्ति । सिध्मादित्वाल्लच् ॥ श्रियलाति वाला० आदाने । आतोनुपसर्गे कः ॥
श्रीलता । स्त्री० महाज्योतिष्मत्याम् ॥
श्रीवत्स । पुं० विष्णोश्चिह्नविशेषे । भृगुपदचिह्ने ॥ श्रीवत्सोभृगुपदं । तत्रैव हरिवंशे भृगुपदाघातरूपेरेखाविशेषे ॥ महापुरुषलक्षणभूते० वक्षस्थस्थे तदर्धदक्षिणावर्त्तरोमावर्त्तविशेषे ॥ प्रदक्षिणावर्त्तविशिष्टरोमश्रीवत्ससहितस्त्रिभुविताङ्गमिति गरुडपुराणात् ॥ वद्तिमङ्गलम् । वद्व्यक्तायांवाचि । मूलविभुजादित्वात्कः ॥ श्रीयुक्तोवत्सः ॥ विष्णौ । कृष्णे । गृहविशेषे ॥ सुदर्शनाप्रभेदे । सर्वतोऽग्नी ॥
श्रीवत्सकी । पु० शुक्लवक्षावर्त्तहये ॥
श्रीवत्सभृत् । पुं० हरौ । विष्णौ ॥
श्रीवत्सलाञ्छनः । पु० विष्णौ । श्रीवत्सोमहापुरुषलक्षणभूतवक्षोऽन्तरोमावर्त्तविशेषोलाञ्छनचिह्नमस्येतिविग्रहः ॥
श्रीवत्साङ्क । पु० विष्णौ ॥
श्रीवराहः । पुं० आदिवराहे । विष्णौ ॥
श्रीवल्लभ । पुं० परमात्मनि ॥ श्रिया विद्याप्रस्तावे शुभसदाकारे ॥
श्रीवाटी । स्त्री० नागवल्लीभेदे ॥
श्रीवारक । पु० शाकविशेषे । सितावरे । सूच्याग्रे । सूचीपत्रके । सिराला० सिरयारा० सिरियारी० ङ० भा० प्र० ॥ तच्छाकप्रकारोयथा । श्रीवारकंदलंग्राह्यमारनालेसुसाधितम् । पीडितावोडितं तैलेकासमर्दसमन्वितम् । वातपित्त

रावख्याविबन्धाध्माननाशिनी । कफक्रम्मूत्रकृच्छ्रघ्नीभेदिनीसारसाथ श्री । सा॰ श्रीवालीत्यर्थः ॥

श्रीवाली । स्त्री॰ श्रीवारकी॰ शाकविशेषे ॥

श्रीवास । पु॰ विष्णौ । नारायणे ॥ श्रियोवास । अस्यवक्षसि॰ श्रीरनपायिनी॰ वसतीत्यर्थः ॥ शिवे । हरे ॥ पद्मजे । वृकधूपे । सरलद्रवे । श्रीवेष्टे ॥ अस्यगुणा॰ । श्रीवासोमधुरस्तिक्तः स्निग्धोष्णास्तुवरसर । पित्तलोवातमूर्द्धाक्षिस्वररोगकफापह । रक्षोघ्नःस्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ॥

श्रीवास्तव । पु॰ चित्रगुप्तात्मजकायस्थजातिविशेषे ॥

श्रीविद्या । स्त्री॰ महाविद्याविशेषे । परदेवतायाम् । त्रिपुरसुन्दर्याम् ॥

श्रीवृक्ष॰ । पु॰ बिल्ववृक्षे ॥ अश्वत्थवृक्षे ॥ श्रीप्रद॰ श्रीप्रियोवावृक्षोस्य । शाकपार्थिवादि ॥

श्रीवृक्षक: । पु॰ अश्वस्यवक्षस्यावर्त्ते ॥

श्रीवृक्षकी । पु॰ श्रीवृक्षकावर्त्तविशिष्टेऽश्वे ॥ तल्लक्षणं यथा। वक्षोभवावर्त्तचतुष्टयस्यकण्ठेभवेद्यस्यपरोचमान: । श्रीवृक्षकीनामहय. सभर्त्तु. श्रीपुत्रपौत्रादिविवृद्धयेस्यादिति ॥ श्रीवृक्षकीवक्षसिचेद्रोमावर्त्तौ सुखिदिचेतितुवैजयन्ती ॥

श्रीवेष्ट॰ । पुं॰ सरलद्रवद्रवरसे । वृक्षधूपे । श्रीवासे । तद्गुणायथा । श्रीवेष्टकटुकस्तिक्तकषाय श्लेष्मपित्तजित् । योनिदोषरुजाजीर्णव्रणाध्मानदोषनुत् ॥ श्रीसज्ञक॰ श्रियोवावेष्टोनियास ॥

श्रीश॰ । पुं॰ विष्णौ ॥ श्रीरामे ॥ श्रियईश. ॥

श्रीशैल । पुं॰ भारतवर्षस्थपर्वतविशेषे । सितितथाविधमनोविलयासमर्थाश्रीशैलमृङ्गकुहरेषुकदोपलभ्यं । गाच यथामरलता परिवेष्टयन्तिकर्णयथाविरचयन्तिखगास्तनीडम् ॥ इतियोगतारावली ॥

श्रीसञ्ज्ञम् । न॰ लवङ्गे ॥ श्रिय सञ्ज्ञा सञ्ज्ञायस्य ॥

श्रीहरि । पु॰ परमात्मनि ॥ श्रियजीवस्योपाधिभूतामविद्यांहरति॰ आत्मज्ञानप्रदानेननाशयति॰ इति श्रीहरि ॥ श्रिय दधाने । विष्णौ ॥

श्रीहस्तिनी । स्त्री॰ भूरुण्ड्याम् हातीसुंडा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ श्रियाहस्त. ॰ श्रीहस्त । सविद्यतेयस्या: । अतइनि. ॥ यद्वा । हस्तंगृह्णातिहस्तयति । अवश्यंश्रियहस्तयति । आवश्यकेतिणिनि ॥

श्रुघ्नका । } स्त्री॰ सर्ज्जिकाक्षारे ॥
श्रुघ्नी ।

श्रुतम् । न॰ शास्त्रे ॥ शास्त्रविचारे ।

दृत्त॰ इत्यत्र॰ द्वितीयाश्रुत्या॰ म
न्त्रस्याङ्गाभिधानाङ्गत्वम् । यदाहव
नीयेजुहोतीत्याहवनीयस्यहोमाङ्ग
त्व सप्तमीश्रुत्या । एवमन्योपिविभ
क्तिश्रुत्याविनियोगोज्ञेय । पशुना
यजेतेत्यत्रैकत्वपुंस्त्वयो सामाना
धिकरण्यश्रुत्याकारकाङ्गत्वम् । य
जेतेत्याख्याताऽभिहितसङ्ख्याया
भावनाङ्गत्वम्समानाभिधानश्रुतेरे
वपदश्रुत्याचयागाङ्गत्वम्॰ नवामू
र्त्तायःसाक्षा क्यभावनाङ्गत्वम॰
कर्त्तृपरिच्छेदद्वारातदुपपत्ते । क
र्त्ताचात्तेपलभ्य॰ आख्यातेनहि
भावनोच्यते॰ साचकर्त्तारंविनाऽनु
पपन्नेतितमाक्षिपति । सेयश्रुति
र्लिङ्गादिभ्य प्रबला॰ लिङ्गादिषु
नप्रत्यक्षोविनियोजक शब्दोस्ति॰
किन्तुकल्प्य । यावच्चतैर्विनियो
जक शब्द कल्प्यते॰ तावत्प्र
त्यक्षयाश्रुत्याविनियोगस्य क्लृप्तत्वेन
तेषांकल्पकत्वशक्तिव्याहतत्वात् । अ
तएवैन्द्र्यालिङ्गेनेन्द्रोपस्थानार्थत्व
म्॰ किन्त्वैन्द्र्यागार्हपत्यमुपतिष्ठत
इत्यत्र॰ गार्हपत्यमितिद्वितीया
श्रुत्या॰ गार्हपत्योपस्थानार्थत्वम् ॥
अवदेवीगीतायांदेवीवाक्य यथा ।
सर्वज्ञाया . सर्वशक्तेर्मत्तोवेद
समुत्थित । अज्ञानस्यममाभावा
दप्रमाणानयश्रुतिरितिसर्वज्ञात्



सर्वशक्तेश्चमत्तइतिपाठेतुमत्तोमत्
स्वरूपादित्यर्थ ॥ प्रयोगविध्युप
योगिप्रमाणविशेषे ॥ तच्चक्रमप
रवचनश्रुति । तच्चद्विविधम् ।
केवलक्रमपरम्॰ तद्विशिष्टपदार्थ
क्रमपरञ्च । तत्रवेदंकृत्वावेदिं क
रोतीतिकेवलक्रमपरम्॰ वेदि
करणादेर्वचनान्तरप्राप्तत्वात् । वष
ट्कर्त्तु प्रथमभक्षइतितुक्रमवि
शिष्टपदार्थपरम्॰ एकप्रसरताभ
ङ्गभयेनभक्षानुवादेनक्रममात्रस्यवि
धातुमशक्यत्वात् । सेयंश्रुतिरित
रप्रमाणापेक्षयाबलवती॰ तेषाम्
वचनकल्पनद्वाराक्रमप्रमाणत्वात् ।
अतएवाश्विनग्रहस्यपाठक्रमात्तृ
तीयस्थानेग्रहणप्रसक्तावाश्विनोद
शमोगृह्यतइतिवचनाद्दशमस्थानेग्र
हणमित्युक्तम् ॥ कर्णः । अस्यप
र्याया । कर्णशब्दग्रहौश्रोत्र श्रुति
स्त्रीश्रवणं श्रव ॥ अस्यशुभाशुभ
लक्षणं यथा । रक्तोल्पकर्णश्चस्थूलक
र्णाः स्यु पापमृत्यव । निर्मां
सैश्चिपिटैर्भोगाः कृपणाह्रस्वकर्ण
का ॥ शङ्कुकर्णाश्चराजानोरोम
कर्णाः शतायुष । बृहत्कर्णाश्च
राजानोधनिन परिकीर्त्तिता
॥ श्रवणं । वाक्यजनितवाक्या
र्थविज्ञाने ॥ मनननिदिध्यासन
सहकृतेश्रवणज्ञाने ॥ श्रोत्रकर्मणि ॥

ति । व्याघ्रीवास्ते जराचायुर्याति भिन्नघटाम्बुवत् । निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेय समाचरेत् ॥ यावन्नाश्रयतीदुःखं यावन्नायान्ति चापद । यावन्नेन्द्रियवैकल्यं तावच्छ्रेय समाचरेत् ॥ कालो गच्छायतो नानाकार्यैः ससारसम्भवे । सुखदुःखैर्जनोऽहन्तनबिशिष्टितमात्मनः कृतिकुलाया विप्रयमोल्लास ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितप्राणिनामभ्युदयनि श्रेयससाधने । प्रवृत्तिनिवृत्तिलक्षणे ॥ पुण्ये ॥ त्रि॰ अतिप्रशस्ते । शस्ते ॥ इदमनयोरतिशयेनप्रशस्तम् । द्विवचनेतीयसुन् । प्रशस्यस्यश्र । विद्याधिके ॥ धर्मार्थावुच्यतेश्रेय • कामार्थौ• धर्म एवच । अर्थ एवेहवाश्रेयस्त्रिवर्ग इतितुस्थिति ॥ अयमुपदेशोऽबुभूत्सूनप्रति बोध्य ॥

श्रेयसी । स्त्री॰ करिपिप्पल्याम् ॥ अभयायाम् । पाठायाम् । शठाम्बायाम् । श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयान् । पुं॰ हताईद्विशेषे ॥

श्रेष्ठ । पुं॰ कुबेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे । न॰ गोदुग्धे । गव्ये ॥ त्रि॰ प्रधाने । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्य । अतिशायनेतमबिष्ठनाविति इष्ठन् । प्रशस्यस्यश्र । प्रधानभूते ॥ ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठ । पुं॰ शाकवृक्षे ॥

श्रेष्ठता । स्त्री॰ श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री॰ स्थलपद्मिन्याम् ॥ उत्तमायांनार्याम् ॥ ज्येष्ठानक्षत्रे ॥

श्रेष्ठाम्लम् । न॰ वृक्षाम्ले ॥

श्रेष्ठी । पु॰ कुलीनमशिल्पिनि ॥

श्रोण । त्रि॰ अङ्घातोनेपङ्गौ ॥ श्रोणति । श्रोणसङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । श्रु॰ । बाहुलकात्न ॥

श्रोणि । स्त्री॰ कट्याम् ॥ श्रोणति । श्रोण॰ । इन् ॥ यद्वा । श्रूयतेपुंभि । श्रु॰ । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिदितिनि ॥ पथि ॥

श्रोणीफलम् । न॰ कटौ ॥

श्रोणीफलकम । न॰ कटिपार्श्वे । कटे ॥ श्रोणि फलकमिव॰ चर्मा कारत्वात् ॥

श्रोणिबिम्बम् । न॰ कटिसूत्रे ॥

श्रोणिसूत्रम् । न॰ खड्गबन्धनसूत्रे । परतला॰ इ॰ भा॰ प्र॰ ॥

श्रोणी । स्त्री॰ कट्याम् ॥ पथि ॥ कृदिकारादिति पक्षे ङीष् ॥

श्रोतव्य । त्रि॰ श्रवणीये । श्रोतुंयोग्ये ॥ श्रोतव्य श्रुतिवाक्येभ्योम

श्रौत । स्मार्त्तैवर्णाश्रमात्मकइति माध्ये १२० अध्याय ॥
श्रौतयज्ञ । पु० अग्निहोत्रदर्शपौर्णमासादौ ॥ श्रुत्याप्रोक्तः श्रौतः । अण् । सचासौयज्ञश्च ॥
श्रौतसक्ति । स्त्री० वेदोक्तसत्क्रियायाम् । यथा । एहस्थएक्रिया सर्वाआगमोक्ता कलौशिवे । नान्यमार्गे क्रियासिद्धि कदापिगृहमेधिनाम ॥ भैक्षुकेप्याश्रमेदेविवेदोक्त दण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौतसक्तिरिति म० नि० तन्त्रम् ॥
श्रौषम् । न० श्रोत्रियतायाम् । श्रोत्रियस्यकर्मभावोवा । युवादित्वादण्० श्रोत्रियस्ययलोपश्च ॥ श्रोत्रवांसम्हे ॥ भिन्नायण् ॥
श्रौषट् । अ० देवहविर्दाने ॥ श्रूयतेऽनेन । श्रु० । बाहुलकात्० डौषट् ॥
श्लक्ष्ण । त्रि० सौके । अल्पपर्यायाय था । सौकाल्पत्वश्लक्ष्ण ' सूक्ष्मश्लक्ष्णादभ्रकृशंतनु । त्रियांमात्राचाश्रुटि पुंसिलवलेशकणाणव ॥ इति ॥ मनोहरे ॥ सुखस्पर्शे । अपरुषे । स्निग्धे ॥ श्लिष्यते० श्लिष्यतिवा । श्लिषआलिङ्गने । श्लिषेरतोपधायाइतिक्स ॥
श्लक्ष्णकम् । न० पूगफले ॥

श्लक्ष्णतीक्ष्णायम् । न० शुक्ले । शूकी ॥ श्लक्ष्णकृष्णसततीक्ष्णश्च० तत्रतदयश्च ॥
श्लक्ष्णत्वक् । पु० अश्मन्तकवृक्षे ॥ सुन्दरवल्कले ॥
श्लक्ष्णभूमि । स्त्री० कृष्णभूमि ॥
श्लथ । त्रि० शैथिल्ये । शिथिले ॥
श्लाघनम् । न० अभिनन्दने ॥
श्लाघा । स्त्री० अभिलाषे । स्पृहायाम ॥ उपास्तौ । परिचर्यायाम् ॥ प्रशंसायाम । अविद्यमानगुणसम्बन्धख्यापने ॥
श्लाघिष्ठ । त्रि० श्लाघ्यतमे ॥
श्लाघ्य । त्रि० प्रशस्ये । श्लाघनीये । स्तुत्ये ॥ आशास्ये ॥
श्लिकु । पु० सेवके । भृत्ये ॥ श्लिष्यति० यावत्कार्यंलगतिव्याप्रियते । श्लिषआलिङ्गने । श्लिषि कशेति कु कशान्तादेश ॥ लिङ्गे ॥ न० ज्योति शास्त्रे ॥
श्लिषा । स्त्री० आलिङ्गने ॥
श्लिष्ट । त्रि० सम्पृक्ते । गत्यर्थाऽकर्मकेति० श्लिषि ' क्त । श्लेषयुक्त शब्दादौ । भिन्नार्थैकरूपान्वितवाक्ये ॥ तल्लक्षणं यथा । श्लिष्टमिष्टमविस्पष्टमेकरूपान्वितंवचइति ॥
श्लीपदम् । न० पादरुग्भिदि । पादवल्मीके ॥ अस्यनिदानन्तु । यः सज्वरोवङ्क्षणयोर्भृशार्त्तिः शो

शेन्दृथापादगत क्रमेण । तस्मी
पदस्यात्कारकाणं नैव शिश्लीपदनामा
स्यपिकेपिदाङ्कु ॥ पुराणोदकभू
यिष्ठाः सर्वर्त्तुषु शीतलाः ये
देशास्तेषु जायन्ते श्लीपदानि विशेष
तः । इति ॥ विशेषतस्तु त्युक्ते रन्य
त्रापि भवतीति बोध्यते ॥

श्लीपदप्रभव । पुं॰ आम्रवृक्षः ॥

श्लीपदापह । पुं॰ पुत्रजीववृक्षः ॥

श्लीपदी, त्रि॰ व्याधिनाश्य लक्षणे ।

श्लील । त्रि॰ लक्ष्मीवति । श्रीलि ॥ श्रि
यलाति । ला॰ । क । कपिलका
दित्वात् लत्वम् ॥

श्लेष । पुं॰ संयोगः । सम्बन्धः ॥ शब्दा
लङ्कारविशेषः । तस्य लक्षणादयो य
था । वाच्यभेदेन भिन्ना यद्युगपद्भाष
णस्पृशः । श्लिष्यन्ति शब्दाः श्लेषो
सावक्षरादिभिरष्टधा ॥ अर्थभेदेन
शब्दभेदइति दर्शने॰ काव्यमार्गे स्व
रो न गण्यतइति च नये॰ वाच्यभेदेन
भिन्ना अपि शब्दा यद्युगपदुच्चारणेन
श्लिष्यन्ति॰ भिन्नस्वरूपमपह्नुवते॰
स श्लेषः । स च वर्णपदलिङ्गभाषा
प्रकृतिप्रत्ययविभक्तिवचनानां भेदा
दष्टधा । क्रमेणोदाहरणम् । अल
ङ्कार शङ्काकरनरकपाल परिज
नो विशीर्णाङ्गो भृङ्गी वसु च वृष
एको बहुवयाः । अवस्थेयं स्था
णोरपि भवति सर्वामरगुरोर्वि



धौ वक्रे मूर्द्धि स्थितवति वयं के पु
नरमी ॥ विधौ चन्द्रे एव॰ विधौ
दैवे वक्रे कुटिले एव॰ वक्रे प्रतिकूले
॰ मूर्द्धि मस्तके स्थितवति सति सर्वा
मरगुरोर्महादेवस्यापीयमवस्था भव
ति ॰ अमी मानुषा वयं पुनः के
स्यां गणनायामित्यर्थः । अत्र विधा
वित्युभयत्र॰ वर्णश्लेषः ॥
पृथुकार्त्तस्वरपात्रं भूषितनि
श्शेषपरिजनं देव । विलसत्करेणु
गहनं सम्प्रति सममावयोः सदन
म् ॥ भक्तिप्रह्वविलोकनप्रणयिनी
। नीलोत्पलस्पर्धिनी । ध्यानालम्बन
ताम् । समाधिनिरतैर्नीते हित
प्राप्तये । लावण्यैकमहानिधौ रसि
कतां लक्ष्मीदृशोस्तन्वती युष्माकं
कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा
हरेः । एतच्चलिङ्गश्लेषेऽपि ॥ महदे
सुरसम्मदे तमव समासङ्गमागमा
हरणे । हरबहुसरणं तं चित्तमो
हमवसर उमे सहसा ॥ अथ सर्वाणि
शास्त्राणि हृदि ज्ञेषु च वक्ष्यति । सा
मर्थ्यकृदमित्राणां मित्राणां च नृपात्म
जः ॥ रजनिरमणमौले पादप
द्मावलोकक्षणसमयपराप्तापूर्वसम्प
त्सहस्रम् । प्रथमनिवहमध्ये जातु
चित्तप्रसादाद्भवमुचितकविः त्वा
मन्दितास्तातथामि ॥ सर्वं सर्वरसं
सत्यभवच्छेदतत्परः । नयीमकार

ते ॥ श्लोकसङ्घाते । घञ् ॥

श्लोककार । पु॰ वाल्मीकिमुनौ ॥ श्लो

कक्रति ॥ श्लोकं करोतिकर्मण्यण् ॥

श्लोक्य । त्रि॰ पुण्यकीर्त्ते ॥

श्व . कार्य्यम् । न॰ आगामिन्यहनि

कर्त्तव्ये ॥ यथा । श्व कार्यमद्य

कुर्वीतपूर्वाह्णेचापराह्णिकम् ॥

नहिमृत्यु प्रतीक्षेतक्कतवाप्यथवा

क्कतम् ॥ इतिकुलार्णवतन्त्रम् ॥

श्व श्रेयसम् । न॰ शिवे । भद्रे ।

कल्याणे । मङ्गले । शुभे । प्रस्ते

अर्थं परपदस्याचश्व शब्द काल

वाच्यपि । अभिधत्तेस्वभावेन॰ ते

नैमौमङ्गलार्थंकावितिपाणिनोयम

तदर्पण ॥ परमात्मनि । परान

न्दे । हर्षे । शान्ते । सुखे ॥

श्व आगामीश्रेयोऽत्र । श्वसीव

सीय श्रेयसञ्चत्यच् समासान्त ॥

श्व श्रेयद्रतिविग्रहे॰ मयूरव्य स

कादित्वात्समास ॥

श्वगण । पु॰ कुक्कुरसमूहे ॥

श्वगणी । त्रि॰ शुनांपोषके ॥ श्वगणो

। व्याधङ्कूनि ॥

श्वगाही । त्रि॰ शुनांपोषके ॥ शुना

गाही ॥

श्वचक्रम् । न॰ कुक्कुरचेष्टायाम् ॥ य

थ्यवाराचाम् ॥

श्वदंष्ट्रक । पु॰ गोक्षुरे ॥

श्वदंष्ट्रा । स्त्री॰ गोकण्टके । गोक्षुरके

शुनोदंष्ट्रेव ॥

श्वधूर्त्त पु॰ शृगाले ॥

श्वा । पु॰ ग्रामसृगे । अस्य पर्याया य

था । कौलेयक सारमेय कुक्कु

रोमृगदंशक । शुनकोभषकःश्वा

श्वादिति ॥ शुनोलक्षण यथा । प

दा पञ्चनखास्त्रयो ऽग्रचरणा ष

ड्भिर्नखैर्दक्षिण स्ताम्रौष्ठाग्रनखो

मृगोश्वरगतिर्जिघ्रन भुवं यातिच ।

लाङ्गूलसटा॰ हनुस्वसदृशौ कर्णौच

लम्बौ मृदू यस्य स्यात् सकरोतिपो

ष्टुर्घिरात्पुष्टां श्रिय वेश्मनि ॥ इति

वाराही ॥ अस्यपरीक्षातुमृगयार्थं

शकुनार्थं कौतुकार्थं मत्रोचिता ।

श्वान पोष्यास्ततस्तेषांमनवद्या

मिलक्षणम् ॥ गुणजातिप्रभेदेनशु

नोभेदाह्यनेकश । सात्त्विकाराज

सांश्चैवतामसाश्चत्रिधामताः ॥ अ

ग्लानाश्चपरिक्षीणा पवित्रा॰ स्व

ल्पभोजिन ।श्वानस्ते सात्त्विका

प्रोक्ताःदृश्यन्तेचक्वचित्क्वचित् ॥ १ ॥

क्रूरावह्नभुजोदीर्घाशुरुवक्षसन् दृ

राः । जाङ्गलेस्याःज्ञिकाश्च श्वान

स्तेराजसामताः ॥ २ ॥ अल्पश्रमे

णयेश्रान्तालल्लिह्वागुरूदराः ।

श्वानस्तेतामसाज्ञेया सन्ध्याव

नसमाश्रयाः ॥ ३ । ब्रह्मादिजाति

भेदेनचतुर्द्धासर्वएवहि । शुभादो ॥

र्घास्त्वकर्णाशुपुच्छास्तनूदराः

पाप्तथा । वध्यवासांसि गृह्णीयुः
शय्याश्चाभरणानि चेति मनुः ॥ च
ण्डाल, श्वपच, क्षत्ता, सूतो, वैदेह
कस्तथा । मागधायोगवौ चैव सप्त
ैतेऽन्त्यावसायिनः ॥ इत्यङ्गिरा ॥
श्वपच । डोम॰ डुमडा॰ इ॰ भा॰
प्र॰ ॥ श्वानं पचति । डुपचष्॰ ।
पचाद्यच् ॥

श्वपदम् । न॰ कुक्कुरपादे ॥

श्वपाक । पुं॰ निषादे । चण्डाले ॥
तस्योत्पत्तिर्यथा । क्षत्तुर्जातस्तथो
ग्रायां श्वपाक इति कीर्त्यते॰ इति म
नुः । शूद्रेणैव श्वायां जातः क्षत्ता
॰ क्षत्रियेण शूद्रायां जातोऽग्रा॰ ते
न तस्यां जातः, श्वपाक इत्युच्यत इति
कुल्लूकभट्टः ॥

श्वफल । पु॰ बीजपूरे ॥

श्वफल्क । पु॰ वृष्णिपुत्रे । अक्रूर
पितरि ॥

श्वफल्कपुत्र । पुं॰ अक्रूराख्ययादवे ॥

श्वभीरु । पु॰ फेरौ । शृगाले ॥

श्वभ्रम् । न॰ भूछिद्रे । तत्पर्याया
यथा । कुहरशुषिरविवरबिलम् ।
छिद्रं निर्व्यथन रोक रन्ध्रं श्वभ्र वपा
शुषिरिति ॥ श्वभ्रं गर्त । श्वभ्रग
तौ । भ्वा । पचाद्यच् ॥ श्वभ्रं
भनसभ व्योमाचवा ॥ विदीर्णभू
भागे ॥

श्वयथु । पुं॰ शोथे । लघ्विवर्द्धने
श्वयति॰ श्वयनमनेनवा । टुओ
श्वि गतिवृद्ध्योः । ट्वितोऽथुच् ॥

श्वयीचि । पु॰ चन्द्रे ॥ व्याधौ ॥
श्वयति । टुओश्वि॰ । श्वयते
श्छिदितीचि । गुणायादेशौ ॥

श्ववृत्ति । स्त्री॰ सेवायाम् । चाक
री॰ इ॰ भा॰ प्र॰ ॥ सेवातुदीन
हृष्टिसदृशं न स्वामितर्जननीचक्रिया
दिधर्मयोगात्॰ शुनोवृत्तिरिव ।
शुन इव वृत्तिर्वा । सेवा श्ववृत्तिरा
ख्याता तस्मात्तां परिवर्जयेदिति
मनुः ॥

श्वव्याघ्र । पु॰ श्वापदे । व्याघ्रादि
हिंस्रपशौ ॥

श्वशुर । पु॰ पूज्ये ॥ पतिपत्न्योः
पितरि ॥ पत्युः पिता पत्न्याः श्व
शुर॰ पत्न्याः पिता पत्युः श्व
शुर ॥ शुद्धत्यासार्थे॰ पूजायां वा
। शुपश्नुते॰ अश्नुते वा । अशू व्या
प्तौ॰ सङ्घाते च । आशुशेराशावि
त्युरन् ॥

श्वशुरा । स्त्री॰ श्वश्र्वाम् ॥

श्वशुरौ । पु॰ २ सहोक्त्या॰ श्वश्रू
श्वशुरयोः ॥ श्वश्रूश्च श्वशुरश्च
तौ । श्वशुरः श्वश्र्वेति पाक्षि
कएकशेषः ॥

श्वशुर्य्य । पुं॰ देवरे ॥ श्याले ॥
श्वशुरस्यापत्यम् । राजश्वशुरा
द्यत् ॥

श्वेतकण्टकारी । स्त्री० नाकुल्याम् । कटुवार्त्ताक्यां ॥

श्वेतकन्दा । स्त्री० अतिविषायाम् ॥

श्वेतकिणिही । स्त्री० गिरिकर्णिकायाम् । शिरीषपर्ण्याम् । विषघ्निकायाम् ॥ श्वेता चासौ किणिही च ॥

श्वेतकुञ्जर । पु० ऐरावते ॥ शुक्लगजे ॥ श्वेतश्चासौ कुञ्जरश्च ॥

श्वेतकुश । पु० तृणविशेषे ॥ सितदर्भे । ह्रस्वकुशे । पूते । वज्रभूषणे । सूचीमुखे । पुण्यदर्भे । दर्भे ॥

श्वेतकुष्ठम् । न० शुक्लकुष्ठे ॥ अस्यौषधं यथा । सोमराजस्य बीजानि नवनीतयुतानि च मधुनास्वादितानि च शुक्लकुष्ठहराणि वै ॥

श्वेतकेतु । पु० उद्दालकर्षेस्तनये । श्रुतिप्रसिद्धे आरुणेयमुनौ ॥ केतुग्रहविशेषे ॥ बुधे ॥

श्वेतकेश । पु० रक्तशिग्रौ ॥ शुक्लकचे ॥

श्वेतकोल । पु० शफरमत्स्ये ॥

श्वेतखदिर । पु० शुक्लखदिरे । सोमवल्के । कदरे ।

श्वेतगज । पु० इन्द्रहस्तिनि । ऐरावते । अभ्रमातङ्गे । चतुर्दन्ते ॥

श्वेतगरुत् । पु० हंसे ॥ श्वेता गरुतोऽस्य ॥

श्वेतगुञ्जा । स्त्री० चूडालायाम् । श्वेतकाम्बोज्याम् । काकादन्याम् ॥

श्वेतचन्दनम् । न० शुक्लचन्दने ॥

श्वेतचिल्ली । स्त्री० शाकभेदे । वास्तुक्याम् । सुपथ्यायाम् । श्वेतचिल्लिकायाम् । ज्वरघ्न्याम् । क्षुद्रवास्तुक्याम् । अस्या गु० यथा । भा० प्र० ॥ अस्या गुणा यथा । श्वेतचिल्ली मधुरा शीता क्षारा पित्तविनाशिनी ॥

श्वेतच्छद । पु० हंसे ॥ श्वेताश्छदा यस्य । गन्धपर्णे । वायु पु० ब्र० भा० ॥

श्वेतजीरक । पु० शुक्लाजाज्याम् । गौरजीरके ॥

श्वेतटङ्कणम् । न० क्षारविशेषे । द्रावकरे । मालतीतीरसम्भवे ॥

श्वेतदूर्वा । स्त्री० पाण्डुरदूर्वायाम् । अस्याः पर्यायास्तु । गोलोमी शतवीर्या च गण्डाली शकुलाक्षका इति गुणास्तु । श्वेतदूर्वा कषाया स्यात् तिक्ता ... वीर्यवती । तिक्ता च मा विसर्पतृट्पित्तकफदाहहृत् इति ॥

श्वेतद्युति । पु० इन्दौ । चन्द्रे ॥

श्वेतद्विप । पु० भद्रहस्तिनि । हस्तिमल्ले । चतुर्दन्ते । ऐरावते ॥

श्वेतदीप । पुं॰ विष्णोर्धामविशेषे ॥ यत्रानिरुद्धमूर्त्तिर्भगवानास्ते ॥

श्वेतधातु । पु॰ खटिकायाम ॥ शुक्लवर्णधातुमात्रे ॥

श्वेतधामा । पु॰ चन्द्रे । घनसारे अब्धिफेने ॥

श्वेतनील । पु॰ अम्बुदे । मेघे ॥ शुक्लनीलवर्णे ॥

श्वेतपद्म । पु॰ हंसे ॥ न॰ शुभ्रपद्मे ॥

श्वेतपत्ररथ पु॰ स्रष्टरिब्रह्मणि । विधातरि ॥ श्वेतपत्रोहंसोरथोवाहनयस्य ॥

श्वेतपद्मम् । न॰ पुण्डरीके । सिताब्जे । अम्बुजभे ॥

श्वेतपर्णा । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

श्वेतपर्णास पु॰ श्वेततुलस्याम् अर्जके । गन्धपत्रे ॥

श्वेतपाटला । स्त्री॰ शुक्लपाटलायाम् ॥

श्वेतपिङ्ग । पुं॰ सिंहे ॥ वृ॰ वै॰ न्द्र ॥

श्वेतपिङ्गल । पुं॰ सिंहे ॥ त्रि॰ शुक्लकपिलवर्णयुक्ते ॥

श्वेतपिण्डीतक : । पुं॰ महापिण्डीतके ॥

श्वेतपुष्प : । पुं॰ सिन्धुवारवृक्षे ॥

श्वेतार्के । श्वेतकरवीरे ॥ वरुणद्रुमे । न॰ शुक्लवर्णकुसुमे ॥

श्वेतपुष्पक । पु॰ करवीरवृक्षे ॥

श्वेतपुष्पा । स्त्री॰ मृद्वाम । श्वेतघोषा॰ वृ॰ गो॰ भा॰ प्र॰ ॥ नागदन्त्याम । मृगेर्वारौ ॥ श्वेतानिपुष्पाणियस्याः ॥

श्वेतपुष्पिका । स्त्री॰ महाशणपुष्पिकायाम् ॥ पुत्रदात्र्याम् ॥ वृ॰ रा॰ नि॰ ।

श्वेतप्रसूनक । पु॰ वृक्षविशेषे । वरुणद्रुमे ॥

श्वेतभण्डा । स्त्री॰ श्वेतापराजितायाम ॥

श्वेतमन्दारक । पु॰ पृथ्वीकुरबके । दीर्घायुर्थे । श्वेतमन्दार॰ भा॰ प्र॰ ।

श्वेतमरिचम् । न॰ शिग्रुबीजे ॥ श्वेतमरिचमिव ॥ शुक्लमरिचे ॥

श्वेतरक्त । पुं॰ पाटलवर्णे ॥ श्वेतयुक्तोरक्तः ॥

श्वेतरञ्जनम् । न॰ सीसके ॥

श्वेतरथ । पु॰ दैत्यगुरौ । शुक्रे ॥ श्वेतोरथोऽस्य ॥ शुक्लवर्णस्यन्दने ॥

श्वेतराजी । स्त्री॰ चिचिण्डे । सुदीर्घफले ॥

श्वेतरोचि : । पुं॰ चन्द्रे ॥

श्वेतरोहित । पुं॰ सितपुष्पे । सि

श्वेतकण्टकार्य्याम् ॥ पाषाणभेदाम् ॥ श्वेतदूर्व्वायाम् ॥ शिलावल्कलायाम् ॥ वशरोचनायाम् ॥ शर्करायाम् ॥ लताविशेषे । क्षुरिकापत्रिकायाम् । पर्व्वमूलायाम् ॥ अतिप्रियायाम् ॥ गुणास्तु श्वेतातिमधुराशीतास्र न्यदाहघ्निकार्श्का ।

श्वेतावल्लन् । स्त्री॰ शुक्लचित्रतायाम् । त्रिभाण्डाम् ॥

श्वेताम्लि । स्त्री॰ क्षुपविशेषे । अम्लिकायाम् पिष्टोडाम् ॥

श्वेतार्क । पु॰ शुक्लार्कवर्णे । तपने । शर्करापुष्पे । वत्तमल्लिकायाम् ॥ अस्यगुणा । श्वेतार्क कटुकस्तिक्तउष्णो मलविशोधन । मूत्रकृच्छ्रास्रशोफाश्चित्र व्रणदोषविनाशनकृति ॥

श्वेतावर । पु॰ सितावरशाके ।

श्वेताश्व । पु॰ अर्ज्जुने ॥ सप्त देवपाण्डवे ॥

श्वेताह्वा । स्त्री॰ सितपाटलायाम् ॥

श्वेतेक्षु । पु॰ सितेक्षौ । वंशपत्रके । पाण्डुरेक्षौ ॥ अस्यगुणा । श्वेतेक्षु काठिन्यकृद्गुरुश्च कफ मूत्रकृत् । दीपन पित्तदाहघ्नो विपाकेशोथलस्तर्पितः ॥

श्वेतोदर । पुं॰ कुवेरे ॥ त्रि॰ चि

काण्डशेष ॥

श्वोवसीयसम् । न॰ कल्याणे । मङ्गले ॥ वसुशब्द प्रशंसावाची॰ ईयसुन्नन्त । श्वस शब्दउत्तरपदार्थ प्रशंसामाशोर्व्विषयमाह । श्वोवसीयइतिविग्रहे॰ मयूरव्यंसकादित्वात्समास । श्वोवसीय श्रेयस इत्यच् समासान्त अर्थं पर पदस्थश्व शब्द कालवाच्यपि । अभिधत्ते स्वभावेन तेनेमोमङ्गलार्थकाविति पाणिनीयमतदर्पणः । श्वोवसीयसन्ते भूयात ॥

षकारस्य प्रारम्भ

ष । पं॰ षकारे ॥ कचे ॥ त्रि॰ विज्ञे । निपुणे ॥ श्रेष्ठे ॥

षट्क । पु॰ षस्रासङ्घे । सङ्ख्याया सख्यासङ्घसूत्राध्ययने ष्वितिकन् ॥ षष्ठेनरूपेणगृह्णातीत्यर्थे तु॰ तावतिथेनगृह्णातीतिकानुवत्तौ पूरणप्रत्ययस्यचनित्यंलुक् । षष्ठेनरूपेणगृह्णाति॰ षट्कोदेवदत्त ॥

षट्कट् । न॰ षड्वर्णे ॥

षट्कर्ण । पु॰ कर्णवेधहीनयोर पत्ययोर्विद्यमानयोस्तृतीयस्यापत्यस्यसम्भावनायाम ॥

षट्कर्म्मा । पु॰ यागादिभिर्युते ब्राह्मणे ॥ षट्कर्माण्यध्ययनादीन्यस्य । तानियथा । इज्याध्ययन

वृत्तान्तरे । यथा । षट्कलमादौ तदनु चतुष्कलगण परिसन्तनु ॥ इति हि कल चामर चतुष्पद इति स सतनु० । छन्द षट्पदनाम भवति फणिना यकगीत ० रुद्रे विरतिमुपैति च तिसुखकरमुपनीतम् । उल्लालयुगलमस्मिन्भवेदृष्टाविंशतिकलमिदम् ० श्रृणु पञ्चदशे विरतिश्चित पठनेप्रविदितजनहितम् ॥ तथा । वासकरोदरकलितकमलसोदरसचिवदना ० गुरुपुरतोऽपि तवैव नामजल्पति गुरुमदना० भवदभिलषणाविशेषरभसपरशेषितदिवसा० मुग्धं तचन्द्रमयेनरजनिमधिजीवितमपि सा । निजहृदि विनिहितभवदभिसरणारम्भतरङ्ग गमनङ्गयति० भवदीयविलोकनमन्तरानमनोरथसुखमनुभवति ।

षट्पदप्रिय । पु० नागकेशरवृक्षे ॥ न० रक्तोत्पले ॥

षट्पदा । स्त्री० यूकायाम् ॥

षट्पदातिथि । पु० आम्रवृक्षे ॥

षट्पदानन्द । पु० पुष्पवृक्षविशेषे । किङ्किराते । पीतभद्रे ॥

षट्पदानन्दवर्द्धन । पु० किङ्किराते । अपीक्षपादपे ।

षट्पदी । स्त्री० यूकायाम् । वृ० हे० मृ० ॥

षट्पदेष्ट । पुं० नीपे । कदम्बे ॥

षट्प्रज्ञ । पु० कामिनीनां कामुके । विटे ॥ धर्मार्थकामसर्व्वज्ञे । यथा । धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञास्ति यस्योच्चैः ० सषट्प्रज्ञ इति स्मृत ॥ वृ० चि० शेष ॥

षड । पु० पेयान्तरे । भेदे ॥

षडश्र । त्रि० षडस्रे ॥ सञ्ज्ञा शब्दस्य त्रिषु वर्णेषु रत्नार्थत्वम ॥

षडङ्ग । पु० वेदे ॥ षट्शिक्षादीन्यङ्गान्यस्य । षड्वर्गीयरक्षे ॥ न० शिक्षादिषे दाङ्गेषु ॥ यथा । शिक्षा कल्पो व्याकरण निरुक्तं ज्योतिष तथा । छन्दश्चेति षडङ्गानि वेदानां वैदिका विदु ॥ छन्द पादौ तु वेदस्य हस्तौ कल्पस्तु पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ वृ० स्मृति ॥ शरीरस्य षडवयवे । यथा । जङ्घे बाहू शिरो मध्य षडङ्गमिदमुच्यते० वृति ॥ छन्दादिषु ॥ हृच्छिरश्शिखाकवचनेत्रमयम् । करतलकरपृष्ठौ च षडङ्ग न्यासकर्म्मणि ॥ गव्यविशेषे ॥ यथा ॥ गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना । षडङ्गमेतन्माङ्गल्यं पवित्रं सर्वदा गवामिति स्मृति ॥

प्रकाश ॥

षड्गया । स्त्री॰ षड्विधगयायाम ॥ यथा । गयागजे।गयादित्योगा यत्रोषगदाधर । गयागयासुरश्चैव षड्गयामुक्तिदायिकेतिवायुपुराणे गयापवक्ति ॥

षड्गवम् । न॰ गोषट्कयुक्तहलादौ ॥ यथा । अष्टागवधर्महलंषड्गव जीविकार्थिनाम् । चतुर्गवनृश सानाद्विगवब्रह्मघातिनाम ॥ षणांगवांसमाहार । गोरतद्धितलुकोकोतिसमासान्तष्टच ॥

षड्गुणरहित । पु॰ मधुरादिष ड्गुणरहितेपरमात्मनि ॥

षड्गुणेश । पु॰ षडिन्द्रियनि यन्तरि ॥

षडग्रन्थ । पु॰ महाकरञ्जपादपे । षट्ग्रन्थयोयस्य । अच्प्रत्यन्ववपूर्वा द्विलयाजितियोगविभागादच् ॥ षट्ग्रन्थायस्यवा ॥

षडग्रन्था । स्त्री॰ वचायाम् ॥ षट् ग्रन्था ग्रन्थयोयस्या सा ॥ श ठ्याम् ॥ शुक्लवचायाम् ॥

षड्ग्रन्थि । पु॰ षटपर्वणि ॥ स्त्री॰ वचायाम ॥ न॰ पिप्पली मूले ॥

षड्ग्रन्थिका । स्त्री॰ शठ्याम । ग न्धमूल्याम ॥ षट्बहवोग्रन्थयो यस्या । स्वार्थेकन् ॥

षड्ज । पु॰ तन्त्रीसमुत्थिते॰ क ण्ठोत्थितेचस्वरविशेषे ॥ षड्भ्य स्थानेभ्योजात । पञ्चम्यामिति ड ॥ यथा । नासाकण्ठमुरस्ता लुजिह्वांदन्ताश्चसस्पृशन् । षडभ्य सञ्जायतेयस्मात्तस्मात्षड्जइति स्मृत ॥ मयूरस्वरतुल्यस्वरोयम । यथा । षड्जरौतिमयूरोहिगावोन र्दन्तिचर्षभम् । अजाविरौतिगा न्धारंक्रौञ्चोनदतिमध्यमम ॥ ता नसेनमतेसप्तस्वराणामध्येप्रथमस्व- रोयम् ॥

षड्धा । अ॰ षट्प्रकारे ॥ सङ् ख्यायाविधार्थेधा ॥

षड्विध । वि॰ षट्प्रकारे ॥ षट् विधा प्रकारायस्य ॥

षड्भावविरहित । वि॰ अस्ती त्यादिशरीरधर्मरहितेपरमात्मनि अस्तीत्यादयोयथा । अस्तिजायतेव र्द्धतेविपरिणमतेअपक्षीयतेविनश्य- तीति ॥

षड्भुज । वि॰ षड्हस्तयुक्ते ॥

षडभुजा । स्त्री॰ चण्डिकायाम् ॥ रुद्रचण्डायाम् ॥ चण्डवत्याम् ॥ न॰ पञ्चाख्याभिधेयफललताविशेषे । मधुफलायाम् । वृत्तकर्कट्याम् । तिक्तफलायाम् । खरबूजा॰ हू॰ भा॰ प्र॰ ॥ अस्या फलगुणाय था । तिक्तत्वाल्येतदनुमधुरंकिञ्चि

षण्डाली । स्त्री॰ सरस्याम् । कामुक स्त्रियाम् । तैलमाने । छटाक॰ इ॰ भा॰ प्र॰ । दूर्तसेमचन्द्रोमेदिनिकारश्च ॥

षण्ढ । पु॰ षण्ढशब्दार्थे । शाम्यति गिन्नाभावात् । शमउपशमे । शमेढं । बाहुलकात्षः । यद्वा । सनति । षमष्टमवैक्लव्ये । अनिटेभ्यादिनाषमेर्ढं । बाहुलकात्सत्वाभाव ॥ अस्यदर्शनेसूर्यदर्शनम्॰ स्पर्शनम्॰ स्पर्शनेतुस्नान सूर्यावलोकानस्वप्रायश्चित्तम् ॥

षण्मुख । पु॰ कार्त्तिकेये । स्कन्दे । षट मुखान्यस्य ॥

षण्मुखा । स्त्री॰ षटभुजायाम् । खरबूजा॰ इ॰ भा॰ ॥

षट् । त्रि॰ सङ्ख्यान्तरे । छ छै॰ इ॰ भा॰ । सङ्ख्येये ॥

षष्टि । स्त्री॰ सङ्ख्यान्तरेसाठ॰ इ॰ भा॰ । सङ्ख्येये । षट दशत परिमाणमस्य । प्रकृते षभावश्ति प्रत्ययोऽपद्दत्वञ्च॰ पङ्क्तिविंशतित्रिंशत्चत्वारिंशत्पञ्चाशत्षष्टीतिनिपातनात् ॥

षष्टिक । पु॰ न॰ ग्रीष्मजे॰ धान्यविशेषे । साठी॰ इ॰ भा॰ प्र॰ । षष्टिकाहिधान्यविशेषा षष्टिका षष्टिरात्रेणपच्यन्तइतिहतीयान्तात्कन्॰ रात्रशब्दलोपश्चनिपात्यते । धान्यविशेषएवाय सानुनासिके पु॰ तिपिषष्टिरात्रेणपच्यन्ते ॥ अस्यलक्षणगुणाश्चयथा । गर्भस्थाएवयेपाक यान्तितेषष्टिकामता ॥ षष्टिक शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्या षष्टिका समुदाहृता ॥ एतेपिव्रीहय शीतास्त्रीहिलक्षणदर्शनात् ॥ षष्टिकामधुराशीतालघवीबद्धवर्चस । वातपित्तप्रशमना शालीनासदृशागुणै । तत॰ साठीगुणा । षष्टिकायाम ॥ अपिच । गौरीनील षष्टिकोऽयद्विधाम्य॰इ॰धौरुच्य शीतलोदोषहारी । बल्य पथ्योदीपनोवीर्यवृद्धि दत्तेतस्मात्किञ्चिदूनोद्वितीय ॥

षष्टिका । स्त्री॰ साठीतिप्रसिद्धधान्ये ॥ अस्या गुणा । षष्टिका प्रवरातेषालघ्वीस्निग्धात्रिदोषजित् । स्वाद्वीमृद्वीग्राहिणीचबलदाज्वरहारिणीति ॥ रक्तशालिगुणैस्तुल्यास्तत स्वल्पगुणा परे ॥ तेषाषष्टिकशब्द पुष्पादीनाम् । परे॰ षष्टिकशतपुष्पाद्य ॥ शरदिषष्टिकाभि पार्वणन्नित्यमितिवाचस्पतिमिश्रा ॥

षष्टिक्यम । न॰ षष्टिकधान्योत्पत्त्युचितभूमौ ॥ षष्टिकानाभवनक्षेत्रम् । यवयवकषष्टिकाद्यदितियत् ॥

ग · सान्द्रस्ते तृषाजव स्मृत · ॥ इति ॥ अपिच । षाडवामधुराम्ला दिरससयोगपाचितादिति ॥ गुडा म्बुप्रभृतय षाडवादयस्तथा ॥

षाड्गुणिक । पु॰ षुगुण्यज्ञषड्गुणविषये ॥

षाड्गुण्यम् । न॰ राज्ञ । रञ्यकरणोपा येषुषट्सु ॥ यथा सन्धानासनम् • सन्धि कृत्वाऽवस्थानम् १ यात्रा सन्धानम् २ । विग्रह्यासनम् • वैर कृत्वावस्थानम् ३ । यात्रा सम्परिगृह्यासनम् • शत्रोर्भयप्रद र्शनार्थ यान प्रदर्श्यस्थानेऽवस्था नम् ४ द्वैधीभाव • उभयचस न्धीकरणम् ५ । अन्याश्रय • दुर्गादिभिश्चाराजस्त्राश्रय ६ इतिसप्ताभारतेराजधर्म . ॥ सन्धि र्नाविग्रहोयानमासन द्वैधमाश्रय इत्यमर ॥ षड्गुणाएव । चतुर्वर्णा दित्वात्स्वार्थेष्यञ् ॥

षाण्मातुर । पु॰ शक्तिधरे । कार्त्ति केये ॥ षण्णामातृणामपत्यम् । मा तुरुत्सङ्ख्यासम्भद्रपूर्वायाइत्यणि • उत्व रपरत्वञ्च ॥

षाष्ठ । त्रि॰ षष्ठे ॥

षिङ्ग : । पु॰ कामकेली । कामुके । नागरे । विटे । लुच्चा॰ इ॰ भा॰ ॥ षिटति॰ षिट्यतेवा । षिटवनादरे । बाहुलकाद्गन्॰ सत्वाभावश्च ॥

षु । पु॰ गर्भविमोचने ॥

षोडन् । त्रि॰ षड्दन्तयुक्ते ॥ षट्द न्ताअस्य । वयसिदन्तस्यदतिदत्रादे श । तत· षषउत्व दतृदशधासूत्त रपदादेष्टुत्वञ्च॰ धासुवेतिवाच्यम ॥

षोडश । त्रि॰ षोडशानाम्पूरणे । तस्यपूरणेडट ॥

षोडश । पु॰ नित्यबहुवचनान्त । ए काधिकपञ्चदशसङ्ख्यायाम् ॥ ग र्भाधानादिसंस्कारेषु ॥ तेयथा । गर्भाधान पुंसवन सीमन्तोन्नयनतथा । जातकर्माभिधानञ्चनिष्क्रम प्रा शनन्तत ॥ चूडोपनयन वेदव्रता नाञ्चचतुष्टयम् ॥ गोदान मेखलो न्मोक्षोविवाह षोडशक्रमात् ॥ ष ट्चदशचषडधिका दशवा । षषउ त्व दतृदशधासूत्तरपदादेष्टुत्वञ्च• धासुवेतिवाच्यम् ॥ त्रि॰ सङ्ख्येये ॥

षोडशक · । पु॰ षोडशसङ्ख्यापरि मितेगणविशेषे ॥ यथा । षोडशक स्तुविकारइति । पञ्चभूतानि॰ ए कादशेन्द्रियाणिचेत्येतानिविकारप दवाच्यानि ॥

षोडशकला । स्त्री॰ चन्द्रमण्डलस्य षोडशधादशभागेषु ॥ यथा । अमृ तामानदापूषातुष्टि . पुष्टीरतिर्धृ ति । शशिनीचन्द्रिकाकान्तिर्ज्यो त्स्नाश्री प्रीतिरङ्गदा ॥ पूर्णापू र्णामृताकामदायिन्य शशिन

कला ॥

षोडशदानम् । न० आद्यादिषोडशप्रकारदेयद्रव्ये । तत्क्रमस्तु साम्प्रदायिका । भूम्यासनजलवस्त्रप्रदीपान्नततःपरम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् । शय्याचपादुकागावः काञ्चनं रजतन्तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते ॥ तत्षोडशषोडशकैरेकोदानसागरोभवति ॥

षोडशभुजा । स्त्री० षोडशहस्तयुक्ता यादुर्गाया ॥

षोडशमातृका । स्त्री० गौर्यादिषु ॥ यथा । गौरीपद्माशचीमेधासावित्री विजयाजया । देवसेनास्वधास्वाहा शान्तिपुष्टिर्धृतिःक्षमा ॥ आत्मनोदेवता चैवतथैवकुलदेवता ॥

षोडशर्त्विक्क्रतु । पु० षोडशर्त्विक्साध्ये ज्योतिष्टोमयागे द्वादशाहसाध्यसत्रयागेच । तत्कर्त्तॄणां नामानियथा । ब्रह्मा १ ब्राह्मणाच्छंसी २ आग्नीध्र ३ पोता ४ एतचार्द्धिनः ॥ होता ५ मैत्रावरुणः ६ अच्छावाकः ७ ग्रावस्तोता ८ एतेचरमेदिनः ॥ अध्वर्युः ९ प्रतिप्रस्थाता १० नेष्टा ११ उन्नेता १२ एतेपादिनः ॥ उद्गाता १३ प्रस्तोता १४ प्रतिहर्त्ता १५ सुब्रह्मण्य १६ एतेसामगाः ॥

ज्योतिष्टोमेद्वादशशतर्द्दक्षिणाविभागः षोडशर्त्विजाम् । तद्विकृतीभूतेसत्रात्मकेद्वादशाहसाध्ये शतेनार्द्धिनोदीक्षयन्तीत्यादिदर्शने ननिर्णीयते । तत्रविभागमनुराह । सर्वेषामर्द्धिनोमुख्याःस्युरर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशैकपादिनः ॥ दक्षिणागोशतविभागायशोतकात्यायनेनापि । अथद्वादशद्वादशमार्द्धिभ्यः षट्षट्द्वितीयिभ्यश्चतस्रश्चतस्रस्तृतीयिभ्यस्तिस्रस्तिस्रइतरेभ्यः । कृत्स्नषोडशर्त्विजश्चतुरश्चतुरः शतात्पञ्चादेवर्गाद्वितमनमासनत्वम् ॥

षोडशांशु । पु० शुक्रग्रहे ॥ षोडशअंशवोऽस्य ॥

षोडशाङ्ग । पु० धूपविशेषे । यथा । गुग्गुलु सरल दारुपद्म मलयसत्वसम् । क्षीरमगुरु कुष्ठगुडसर्जरसं शृङ्गनम् ॥ हरीतकीनखीलाक्षाजटामांसाश्चशैलजम् । षोडशाङ्गं विदुर्धूपं दैवेपित्र्ये चकर्मणि ॥ त्रि० षोडशावयवयुक्ते ॥

षोडशाङ्घ्रि । पु० कर्कटे ॥

षोडशारम् । न० षोडशदलपद्मे ॥

षोडशार्चि । पु० शुक्रग्रहे ॥

षोडशावर्त्त । पु० शङ्खे ॥

षोडशिकाम्रम् । न० पलपरिमाणे ॥

षोडशी । पु० यज्ञपात्रविशेषे ॥ सप्ते ।

मकपाश्वविशेषे ॥ समयाध्युषितै सूर्ये षोडशिन ग्रीन्समुपाकरोति ॥
षोडशी । स्त्री॰ दशमहाविद्यान्तर्गत महाविद्याविशेषे ॥ यथा । काली तारामहाविद्याषोडशीभुवनेश्वरी। भैरवीछिन्नमस्ताचविद्याधूमावती तथा ॥ बगलासिद्धविद्याचमातङ्गी कमलात्मिका । एता दशमहाविद्या सिद्धविद्या प्रकीर्त्तिता ॥ ऊनविंशतिपिण्डदानक्रियायाम ॥ षोडशानापूरणी । डट् । ङीप् ॥
षोढा । अ॰ षड्धा । षट्प्रकारे ॥ षोढाषट्धाव.कुरु । सङ्ख्यायाविधार्थेधा । षषउत्व दढदशधासूत्तरपदादेष्टुत्वञ्च॰धासुवेतिवाच्यम् ।
ष्ठीवनम् । ) ष्ठेवनम् । ) न॰ मुखस्य श्लेष्माणप्रक्षेपे ॥ ष्ठिवुनिरसने । ल्युट् । ष्ठिवुसिव्योर्ल्युटिदीर्घोवेतिवाच्यो॰
ष्ठ्यूतम् । त्रि॰ ष्ठीवने ॥ ष्ठिवु॰ । क्त । र्विष्ठ । च्छ्वोरित्यूठ् ॥

सकारादिशब्दप्रारम्भ

स । पु॰ शङ्करे ईश्वरे । सर्पे ॥ पक्षिणि । विष्णौ ॥ सगणे॰ । ऽपु॰।
सय । पु॰ कङ्काले ॥ इ॰ श॰ च॰ का ॥
संयत् । पु॰ स्त्री॰युद्धे । आयोधनै। समितौ ॥ संयतनम्॰ संयमनवा । यतीप्रयत्ने॰ यमउपरमेवा । सम्पदादित्वात्क्विप् । गमादीनामितिमलोप । तुक् ॥
संयत । त्रि॰ बद्धे ॥ संयम्यतेस्म । यम॰ । क्त ॥ कृतसंयमे ॥
संयतेन्द्रिय । त्रि॰ वशीकृतेन्द्रिये ॥ संयतानिविषयेभ्योनिवर्त्तितानि॰ इन्द्रियाणियेनस ॥
संयत्त । त्रि॰ उद्युक्ते ॥
संयद्वर । पु॰ नृपे । संयच्छति । यम॰ । छित्वरच्छत्वरेतिष्वरच् । निपातनान्मस्यद ॥
संयन्ता । त्रि॰ संयमनकर्त्तरि । नियन्तरि ॥ संयच्छति । यम॰ । सम्पूर्व तृच् ॥
संयम । पु॰ व्रताद्यङ्गपूर्वदिनकर्त्तव्याचारे । नियमे । वियमे । यामे । यमे । संयामे । संयमने । धारणाध्यानसमाधिरितित्रयलेवाविषय॰ संयमशब्देनोच्यते । त्रयमेकत्र संयमइतितच्छास्त्रि ॥ सर्वधर्मा नुष्ठेय सकलपुरुषार्थोपयुक्तोयसयम । तथाचमनु । इन्द्रियाणा विचरताविषयेष्वपहारिषु । संयमेयत्नमातिष्ठेद्विद्वान्यन्तेववाजिनामिति ॥ विद्वान्॰ विषयेषुवर्त्तमानानामिन्द्रियाणाहर्त्तृत्वादिदोषानुजानन्निग्रह ॥ धर्माधर्मौतद्दानेनानुग्रहेनिग्रहेच॥ संयमनम् । यम । समुपनिविषुचेतिपक्षे ऽप

॥ स यती ॥

सयमक । त्रि० नियन्तरि ॥ संयमिनि ॥

सयमन । पुं० यमलोके ॥ न० बन्धने ॥ व्रते ॥

सयमनी । स्त्री० यमस्यपुर्य्याम् ॥ यथा श्रीमृगेन्द्रसंहितायाम् ॥ सृष्टौ सं यमनीतुङ्गलोहप्राकारमण्डला । कालपाशसिद्धव्याधिप्रेतमारीनिषेविता ॥ कालपाशादिजुष्टा० ऽत्युन्नतायसप्राकारसमूहा० स यमनी नामदक्षिणस्यांयाम्यपुरीत्यर्थ: ॥

सयमित । त्रि० आत्तसंयमे ॥ तारकादित्वादितच् ॥ यमिते ॥

सयमी । पुं० मुनौ ॥ त्रि० संयमवति ॥ स्थितप्रज्ञे ॥ यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमी ॥ संयमोऽस्यास्ति । इनि: ॥

सयात्रा । स्त्री० समुद्रयात्रायाम् । पोतैर्द्वीपान्तरगमने ॥ समुदितानांगमने ॥

स याम । पुं० संयमे ॥ संयमनम् । यम . समुपनिविषुयेतिपक्षे घञ् ॥ संयते ॥

सयाव । पुं० घृतक्षीरगुडगोधूमचूर्णसिद्धे भोज्यविशेषे ॥ यथा । संयावस्तुघृतक्षीरगुडगोधूमपाककृति ॥ पिष्टकविशेषे । पिराक० पिराकी ० हि० भा० प्र० ॥ यथा । पर्पस्यमाज्यसमितानिर्मिताघृतभर्ज्जिता । कुट्टितास्त्रोलिता: शुभ्रा शर्कराभिर्विमर्दिता ॥ ततश्चूर्णेर्मिषैदेलालवङ्गमरिचानिच । नालिकेरसकर्पूरखारवीजान्यनेकश: ॥ घृताक्तसमितापुष्टैरोटिकारचितात त । तस्याततपूरणन्यस्यकुर्यान्मुद्रांदृढासुधी ॥ सर्पिषिप्रचुरेतान्तुसुपचेन्निपुणोजन । प्रकारैरप्रकारैरयसयावइतिकीर्त्तित ॥ मठकीनसमीर्णम . संयावोपिगुणैर्जनै . ॥ लोके० गंभाइतिप्रसिद्धोयम् ॥ सयूयतेमिश्रीक्रियतेगुडादिभि । यु० । समियुद्रुदुवइतिघञ् ॥

सयुत्त । त्रि० संलग्ने । सयोगाश्रये ॥ सम्यक्युक्त ॥

सयुक्तसमवाय । पुं० सन्निकर्षे ॥ यथा० घटरूपप्रत्यक्षे संयुक्तसमवाय . सन्निकर्ष: । चक्षु: संयुक्तेघटेरूपस्यसमवायात् ॥

सयुक्तसमवेतसमवाय । पुं० सन्निकर्षविशेषे ॥ यथा० रूपत्वसामान्यप्रत्यक्षे० संयुक्तसमवेतसमवाय: सन्निकर्ष । चक्षु: संयुक्तेघटेरूपंसमवेतम्० तत्ररूपत्वस्यसमवायात् ॥

संयुग : । पुं० युद्धे । आयोधने । अन्यैरपि ॥ संयोजनम् । युजिर्० । घञ् । रथयुगीतिनिर्द्देशाद्गत्वा

श्रि । संवयति । वय० । अच् ॥
संवत् । अ० वर्षे । वत्सरे ॥ संवय
ति । वयगतौ । क्विप । यलोपः ।
तुक ॥
संवत्सर । पुं० वत्सरे । अब्दे ।
सम्यग्वसन्त्यत्रर्त्तवोमासादयश्च ।
वसनिवासे । सम्पूर्वाच्चिद्सरप्रत्य
य । सस्याईधातुकइतिसकृत
संवत्सरपरिवत्सरेडावत्सरानुवत्स
रोद्वावत्सरेषुप्रथमवत्सरे ॥ तत्र
द्वाशुक्लप्रतिपद्दिसङ्क्रान्तिर्भवति॰
तदासौरचान्द्रयोर्मासयोर्युगपदुप
क्रमोभवति॰ ससंवत्सर । त
त सौरमासेन॰ वर्षेषड्दिना
निवर्द्धन्ते॰ चान्द्रमासेन॰ क्रम
शोषिहादपदिनव्यवधानादुभयोर
पपक्षाद्वावीभवति । एवपञ्चवर्षा
णिगच्छन्ति । तन्मध्येद्वौमलमासौ
भवतः यष्ठः संवत्सरोभवति ।
तदेवचान्तरभेदेन॰ संवत्सरादिप
ञ्चकसमामनन्ति ॥ एतासुद्धरस्तु
। मकाब्दात्पञ्चभि श्रेषात्सम
यादिषुवत्सराः । सम्परीदानुपू
र्वास्तथोदापूर्वकामताः॰ कृत ॥
काबात्मवाख्यितेविष्णौ ॥
संवत्सरमुखी । स्त्री॰ ज्येष्ठशुक्लदश
म्याम् । दशहरायाम् ॥ यथा ।
ज्येष्ठस्यशुक्लदशमीसंवत्सरमुखी
स्मृता । तस्यांस्नानप्रकुर्वीतदान

ञ्चैवविशेषत ! इतिब्रह्मपुराण
म् ॥
संवत्सरा । स्त्री० दुर्गायाम् ॥
संवद् । अ० वर्षे ॥ संवदतिभावा
न् । वद० विच ॥
संवदनम् । न० संवादे ॥ समालो
चे ॥ वशीकृतौ ॥
संवननम् । न० वशक्रियायाम् । व
शीकरणे ॥ सम्पूर्वोवनुयाचने
वशीकरणार्थे । ल्युट ॥
संवर । पु० अनेकात्मवादिनांसप्त
पदार्थात्मगतपदार्थविशेषे ॥ य
था । इन्द्रियसंयमलक्षणप्रतिष्ठ ध्यान
म्॰ आस्रवनिरोधात्मकत्वात्॰स
ह्योत्यास्रवमितिसंवरस्तुर्थे ।
वृङ्वरणे॰ अप्॰ ऋदोरप्॰ इत्यादिना
कर्मण्यप ॥
संवरणम् । न० गोपने ॥ सम्यक
वरणं वेष्टनम् ॥ आवरणे ॥
संवर्गः । पु० प्राणे ॥ वायौ ॥
संवर्जनादर्थात्सङ्ग्रहणात्॰ स
ङ्ग्रसनाद्वाऽग्न्यादीनां॰ वायु ।
संवर्ग । संवृङ्क्ते । वृजि० ।
घञ् । कुत्वम् ॥
संवर्गविद्या । स्त्री० वायूपासनवि
द्यायाम् ॥ संवर्गस्यविद्या ॥
संवर्त्त । पुं० प्रलये ॥ संवर्त्ततेज
गत् । वृतु० । हलश्चेतिघञ् ॥
मुनिविशेषे ॥ मृत्यादिप्रसिद्धेपर

प्रापणे । स्वार्थेष्यन्तात्ल्युट् । वाहनमाहितादितिनिपातनाद्दीर्घं ह्रस्वो वा ॥

संवाहित । त्रि॰ सम्वारिते ॥

सविग्न । त्रि॰ उद्विग्ने । सम्भ्रान्ते ॥ ओविजीभयचलनयोः, सपूर्व.। क्त । ओदितश्चेतिन । श्वीदितइतिनेट् ॥

सवित्ति । स्त्री॰ प्रतिपत्तौ ॥ ज्ञानाववादे ॥ विद्ज्ञाने । स्त्रियांक्तिन् ॥

संवित्॰ द्॰ स्त्री॰ ज्ञाने ॥ सम्भाषायाम् ॥ क्रियाकारे । आजौ । सङ्ग्रामे । नाम्नि ॥ अङ्गीकारे ॥ प्रतिज्ञायाम् ॥ आचारे । तोषणे ॥ सयमे ॥ सङ्केते ॥ यथा । प्रहर्त्तोपनिहर्त्तोचस विद ख्यापयेद्रणेइति । क्रतव्यवस्थायाम ॥ यथा । स विद्व्यतिक्रमइति ॥ मनीषायाम् ॥ सवेदनम्॰ सविद्यतेऽनयावा । विद्ज्ञाने॰ विद चेतनादौवा । सम्पदादित्वात्क्विप् ॥

सविदित । त्रि॰ अङ्गीकृते । अङ्गीकृते । सविद्यतेस्म । विद्ज्ञाने । क्त ॥

सविधा । स्त्री॰ भोग्यवस्तुनि । सामग्र्याम ॥ सविधीयतेऽनया । सविपूर्वात्धाञ्जातश्चोपसर्गेइ-तिक ॥

सविधानम् । न॰ उत्पादने ॥

सविभाग.। पु॰ विभज्यप्रतिपादने ॥

सविद्यतीर्थम । न॰ तीर्थविशेषे ॥

सविषा । स्त्री॰ अतिविषाया ॥

सवीक्षणम । न॰ अन्वेषणे । अपहृतवस्तुनस्तात्पर्येणान्वेषणे । सम्यक्तात्पर्येणविविधप्रकारैरीक्षणम् ॥

सवित । त्रि॰ रुद्धे । आवृते । नद्यादिनावेष्टिते ॥ सवीयतेस्म । व्येञ्सवरणे । क्त ॥

सवीताङ्ग.। त्रि॰ आच्छादितदेहे ॥

सवृत.। त्रि॰ सङ्कुचिते ॥ यथा । नासवृतमुख . कुर्याद्धास्य जृम्भातथाक्षुतमिति ॥ निगूढे । गुप्ते । सवेष्टिते ॥ सम्पूर्वाद्वृञ्. क्त .॥

सवृत्ति । स्त्री॰ वागिन्द्रियप्रयुक्तव्यवहारे ॥ गोपने ॥ सवरणम् । वृञ्॰ क्तिन् ॥

सवृत्त.। त्रि॰ सञ्जाते । सम्यक्प्रवृत्ते ॥ सम्पूर्वाद्वृतं ते । क्त । ॥ पु॰ वरुणे ॥

संवृत्ति । स्त्री॰ सवरणे ॥ अविद्याविषयेलौकिकेव्यवहारे । लौकिकबुद्धौ ॥ अविद्यायाम् ॥ सव्रियते॰ आच्छाद्यतेतत्त्वं यया । विभ्रमे ॥ सवर्त्तनम् । वृतु॰

ह॰समानेत्यादि । उपपत्तिज्ञान म । तथाच॰ समानस्यविरुद्ध कोटिद्वयसाधारणधर्मस्यज्ञानादि त्यर्थः । तथाचसाधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः । विप्रतिपत्तिविरुद्धकोटिद्वयोपस्थापक शब्दस्तस्मादित्यर्थः । यद्यपिशब्द ज्ञानसंशायकत्वम्॰ तथापिशब्दात् कोटिद्वयोपस्थितौमानस संशय इतिवदन्ति उपलब्ध्यज्ञानस्य॰अनुपलब्धेर्व्यतिरेकज्ञानस्ययाऽव्यवस्था सद्विषयकत्वानिधारणं प्रामाण्यसंशयहेतुरिफलितार्थः ॥ अन्येतु उपलब्धव्यवस्थाप्रामाण्यसंशय । अनुपलब्धिरुपलब्ध्यभावत्वम्॰ तद व्यवस्था ततसंशयहेत्वाहु । वस्तु तस्तुप्रामाण्यसंशयज्ञानसंशयहेतुत्व म्॰किन्तु गृहीताप्रामाण्यकज्ञानस्य विरोधितयासतिप्रामाण्यसंशयेतज्ज्ञानग्राविरोधितयासाधारणधर्म दर्शनादितएवसंशयोत्पत्तिरिति । उपलब्ध्येत्यादिकताहृशग्रन्थलिसंशयो भवतीत्येतावन्मात्रपरम् । चकारो व्याप्यसंशयस्यव्यापकसंशयहेतुत्व समुच्चिनोतीतिवदन्ति । विशेषापेक्ष कोटिस्मरणसापेक्ष । वस्तुत स्तुसंशयधारावाहिकत्वस्यादतआह । विशेषेति । विशेषविशेषस्य दर्शनम्॰ अपेक्षतेनिवर्तकत्वेन॰ तथाच॰ विशेषदर्शननिवर्त्यत्वकथनमुखेनविशेषादर्शनजन्यस्संशयइत्युक्तम् ॥ १।२३ ॥ संशयनम् । शीङ् एरच् ॥

संशयात्मा । त्रि॰ इदमेवमथवानैवेति सर्वत्रसंशयाक्रान्तचित्ते ॥ संशये॰ आत्मामनोयस्य ॥ संशयात्माविनश्यति ।

संशयान । त्रि॰ संशयापन्ने । संशययुक्ते ॥

संशयापन्न । त्रि॰ संशयिनि ॥

संशयापन्नमानस । त्रि॰ सन्देहकी । संशयिते । सांशयिके ॥ संशयमापन्नं मानसं यस्य॰ यस्मिन्विषये वा ॥

संशयालु । त्रि॰ संशयितरि ॥

संशयित । त्रि॰ सन्देहविषये । विचिकित्सिते ॥

संशयिता । त्रि॰ सन्देहाश्रये । संशयकर्त्तरि ॥ यथाहु । अस्तित्वयमित्यस्मिन्नर्थेकश्चास्तिसंशयं पुंस । अत्रापिसंशयश्चेत् संशयिताथ॰ सएवभवसित्वम् ॥ ४ ॥

संशित । त्रि॰ सम्यकसम्पादिते ॥ संशितव्रतम् । सम्यक् सम्पादितमित्यर्थः ॥ व्रतविषयकयत्नवति ॥ संशितोब्राह्मणः । व्रतविषयकयत्नवानित्यर्थः ॥ सम्यक् शायतेस्म

द्विमुसंसर्गौमुच्यतेनकदाचन ॥

संसक्ति'। स्त्री॰ संश्लेषे ॥

संसत्॰द्। स्त्री॰ परिषदि। सभायाम्॥ संसीदन्त्यस्याम्। षद्लृविश रणादौ। सम्पदादित्वात्क्विप ॥

संसरण। न॰ असम्बाधचमूगतौ। रथादीनामसम्बाधगमने॥ घण्टापथे। नगरस्योपनिर्गमे॥ संसारे॥ रणारम्भे॥ समारम्भे॥ प्राणिजन्मनि॥ पुनःपुनर्योनिसम्बन्धे॥ गतौ॥ सम्यक्सरन्त्यनेन॰ सम्भूयसरन्त्यनेनाचवा। सृगतौ। कारणादौल्युट्। बाहुलकाद्वाल्युट। युवोरनाकौ। अण्लुङप्रमादत्वात॥

संसर्ग। पु॰ सङ्गे। सङ्गमे॥ सम वायादिसम्बन्धे॥ संसर्जनम्॰ संसृज्यतेवा। सृज॰। घञ्॥

संसर्गाभाव। पु॰ सम्बन्धरहितत्वे॥ न्यायमतेचभावपदार्थविशेष। सतुभेदभिन्नाभाव। सचत्रिविध। प्रागभाव'१ ध्वंस २ अत्यन्ताभाव ३ इतिभेदात्। यथा। अभावस्तुद्विधासंसर्गान्योन्याभावभेदतः। प्रागभावस्तथाध्वंसोप्यत्यन्ताभावएवच॥ एवंत्रैविध्यमापन्न संसर्गाभावइष्यते। इ॰ भा॰ प॰॥ भेदत्व तादात्म्यसम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वम्। विनाश्य भावत्व प्रागभावत्वम् १ जन्याभावत्वम्ध्वंसत्वम् २ नित्यसंसर्गाभावत्वमत्यन्ताभावत्वम्। ३। इतिसिद्धान्तमुक्तावली॥

संसर्गी। त्रि॰ संसर्गविशिष्टे॥ मत्वर्थीयइनि॥ सङ्गिनि॥ सम्पूर्वसृजधातो॰सम्पृचानुरुधेतिघिनुण्॥

संसर्प॰। पु॰ मासविशेषे॥ यथा। यद्याचयमासोभवति॰ तदाचय मासस्यपूर्वोत्तराधिमासोभवतः। तत्रपूर्वस्मिन्नधिमासे॥ सचनम लमासः किन्तुशुद्धवतुल्य। उत्तरएवासन्नान्तोमलमास। तथाच कालाकिं। एकस्मिन्नपिवर्षेचेद्द्वौ मासावधिमासकौ। पूर्वोमासः प्रशस्तःस्यादपरस्तुमलिम्लुचइति॥ संसर्पणं॥

संसर्पण। न॰ सम्यक्प्रकारेणगमने॥

संसर्पी। त्रि॰ संसर्पविशिष्टे। संस्यग्गमनशीले॥

संसार। पु॰ मृषाज्ञानसम्भूतवासनायाम्॥ यथा। संसारमिथ्याधीप्रभवावासनेति॥ भवे। स्वादृष्टोपनिबद्धशरीरपरिग्रहे। जन्ममरणलक्षणे। प्रमातृताप्रमुखकर्तृत्वाद्यनर्थे॥ अविद्यायाम्॥ यथोक्तं शङ्कराचार्यैः। संसार स्वप्नतुल्योहिरागद्वेषादिसङ्कुल। स्व

र्थेद्रएषसंसारवृक्षीनिरूपितोवेदा न्तोव्याचार्यैं । तचोक्तं श्रीकृष्णाभिधे । अमुष्यसंसारतरोरवेधम्लूस्यचोन्मूलविनाशनाय । विश्वेश्वराराधनबीजजाततत्त्वप्रबोधान्नपरोऽभ्युपायइति ॥

संसारहृत् । पुं॰ आत्मबोधे ॥

संसारहेतु . । पुं॰ आत्मनोऽविद्यायाम् ॥

संसारी । पुं॰ संसारविशिष्टप्राणिनि । भोक्तरि । संसारीऽस्यास्ति । इनि ॥ कर्तृत्वादिधर्मवति ॥

संसिद्धि । स्त्री॰ सम्यक्सिद्धौ ॥ प्रकृतौ ॥ स्वभावे । मदोन्मत्तायां स्त्रियाम् ॥ मुक्तौ । मोक्षे । देहेन्द्रियसङ्घातस्याऽशुद्धिक्षयेणसम्यगज्ञानोत्पत्तियोग्यतायाम् । श्रवणादिसाध्यायाज्ञाननिष्ठायाम् ॥ फले ॥ साङ्ख्ययोगमनुष्ठायपरिसमापन संसिद्धिरितियोगिन ॥ संसेधनम् । षिधुसंराद्धौ । क्तिन् ॥

संसृति । स्त्री॰ संसारे ॥ प्रवाहे ॥ संसारणं । सृ॰ । क्तिन् ॥

संसृष्ट : । त्रि॰ संसर्गे ॥ वमनादिनासंशुद्धे ॥ विभोगानन्तर प्रीत्या पुनःसम्मिलितधने ॥ यथा । विभक्तोय . पुनः पित्राभ्रात्रावैकत्र संस्थित . । पितृव्येणाथवाप्रीत्या सतुसंसृष्टउच्यते॰ इतिवृहस्पति .

॥ संसर्जनम । सृज॰ । क्त ॥

संसृष्टि । स्त्री॰ काव्यालङ्कारविशेषे ॥ यथा । सैषासंसृष्टिरेतेषाभेदेनयदिहस्थिति । एतेषांशब्दार्थालङ्काराणांयथासम्भवमन्योन्यनिरपेक्षतया॰ यदिह॰ शब्दभागएव॰ अर्थविषयएव॰ उभयत्रापिवाऽवस्थान ॰ सैकार्थसमवायनुभावस्संसृष्टि । तत्रशब्दालङ्कारसंसृष्टिर्यथा । वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया । चलितयाविदधेकलमेखलाकलकलोलकलोलदृशान्यया । अर्थालङ्कारसंसृष्टिर्यथा । लिम्पतीवतमोऽङ्गानिवर्षतीवाञ्जनं नभ । असत्पुरुषसेवेवदृष्टिर्निष्फलताङ्गता ॥ पूर्वत्रपरस्परनिरपेक्षौयमकानुप्रासौसंसृष्टि प्रयोजयत । उत्तरत्रतुतथाविधे॰ उपमोत्प्रेक्षे । शब्दार्थालङ्कारयो संसृष्टिर्यथा । रोमाञ्चि एत्थ गामे जीएणंसहमहत्तलाअथम् । तरुणाणहिअअलुण्डिपरंसपंतीत्थिवारेइसनास्तित्रत्रयामेयएतास्मतरुणानाम् । तरुणानाहृदयलुठनपरिसङ्कामतिनिवारयतीतिसमस्तनम् ॥ हृदयलुण्ठनमितिरूपकम्॰ आयुष्टमितिवत् । पूर्वोक्तिषुअनुप्रास । एवंशब्दार्थालङ्कारयो संसृष्टिरियम् ॥ अत्रानुप्रा

थोविप्रभिन्नयत्स्वत्रयोतास म्भिगा म् । शेवेनयत्म नाकुर्यादेवधम कलौयुगे ।

संस्तर । पुं॰ प्रस्तरे । पल्लवादिरचि तशय्यायाम । साथरा॰ भू॰ भा॰ प्र॰ ॥ अध्वरे । यज्ञे ॥ संस्तीर्यते । स्तृञ् आच्छादने । ऋदोरप् ॥

संस्तव । पुं॰ परिचये । सङ्गतिस्त वने । संस्तवनम् । ष्टुञ् स्तुतौ । ऋदोरप् ॥ सम्यक् स्तुतौ ।

संस्तवान । त्रि॰ वाग्मिनि । संस्तौ ति । ष्टुञ् । सम्यानच् स्तुवश्च स्यानच् ॥

संस्ताव । पु॰ क्रतुषु द्विजन्मनांस्तु तिभूमौ । यज्ञे छन्दोगैः क्रियमा णायां स्तुतेर्भूमौ । यज्ञे स्तावका द्विजानांस्थानभूमौ । समेत्य स्तुवन्त्य त्र । ष्टुञ् । यज्ञे समि स्तुवः इतिघ धिकरणे ल्युटोपवादो घञ् ॥ संस्त वनं वा ॥

संस्तुत । त्रि॰ सम्यक् स्तुतिविषयी भूते । संस्तूयतेस्म । ष्टुञ् । क्त । सहभावेन निरूपिते ॥ प रिचिते ।

संस्थानम् । न॰ मृतौ । उपचये ॥

संस्थाय: । पुं॰ सन्निवेशे ॥ संस्था ने ॥ विस्तृतौ । सङ्घाते ॥ स स्थानम् । कर्मण्यधिकरणे च घञ् । आतोयुक् ॥ यथा ।

यथा । संस्थायान् प्रविशेयुरिति ॥

संस्थ । पु॰ चरे ॥ निजराष्ट्रवासिचरे ॥ क्रतुभेदे । संतिष्ठतेऽनेन । ष्ठा॰ । अङ् ॥ त्रि॰ अवस्थिते ॥

संस्था । स्त्री॰ स्थितौ । साहश्ये ॥ नाशे ॥ न्याय्यपथस्थितौ । मर्यादा याम् । संतिष्ठतेऽनया । सम्यगव स्थानं वा । ष्ठा॰ आतश्चोपसर्गे इत्य ङ् ॥ अवस्थायाम् । समाप्तौ ॥ व्यक्तौ । प्रलयचतुष्टये । यथा । नैमित्तिक · प्राकृतिको नित्यआ- त्यन्तिकोलय :। संस्थेतिकवि भि प्रोक्तश्चतुर्धास्यस्वभावइति पुराणम् ॥

संस्थानम् । न॰ आकृतौ । मृतौ ॥ सन्निवेशे ॥ चतुष्पथे ॥ संस्थीयते ऽनेनवा॰ संस्थितिर्वा । ष्ठा॰ । भावाधिकरणादौ ल्युट । चिह्ने ॥ त्रि॰ शिवादौ ॥ समीचीन स्थान मस्य ॥

संस्थापनम् । न॰ स्थिरीकरणे ॥

संस्थित । त्रि॰ मृते ॥ व्यवस्थिते । सम्यक् स्थिते । उत्थिते । संतिष्ठ तेस्म । ष्ठा॰ गत्यर्थाकर्मकेतिक्त ॥

संस्थिति । स्त्री॰ तल्पे । संस्थाने ॥ मृत्यौ ॥

संस्पर्श । पुं॰ स्पर्शे । त्वगि न्द्रियग्राह्यगुणविशेषे । यथा । आ लापाल्लापसंस्पर्शात् । नि : श्वा

सात्सस्मिजनात् । सम्यग्व्यासमा
व्याघात्पापसङ्क्रमतेनुबामिति-
छागवीय ॥ सम्प्रयोगि । सम्य
र्थे ॥ संस्पर्शनम् । स्पृशसस्प
र्शने । पञ्चाद्विचकारकेस प्रोक्ता
मितिघञ् ॥

संस्पर्शन । त्रि॰ विषयेन्द्रियसं
बन्धाज्जातेभोगे । येङ्गिसस्पर्शजा
भोगाद्गुःखयोनयएवते । आद्यन्तवन्त
कौन्तेयनतेषुरमतेबुध ॥

संस्पर्शा । स्त्री॰ जलूकायाम् । जनी
नामगन्धद्रव्ये । स्पृशति । संस्पृ
श्यतेवा । स्पृश॰ । पदरुजेति
घञ्॰ पचाद्यच्॰ कर्मणिघञ्
वा॰ ॥

संस्फाल । पुं॰ मेषे ॥

संस्फुट । त्रि॰ फुल्ले । विकसिते
॥ स्फुटति । स्फुटविकसने । इ
गुपधेतिक॰ ॥

संस्फेट । पुं॰ युद्धे । रणे ॥
संस्फेटनम् । स्फिटअनादरे ।
घञ् ॥

संस्फोट । पु॰ युद्धे ॥ संस्फोट
नम् । स्फुटिर्॰ । घञ ॥

संस्मरण । न॰ संस्कारजन्यज्ञाने ।
संस्मृतौ

संस्मृतिः । स्त्री॰ संस्मरणे ॥ क्ति
र्यांक्तिन् ॥

संस्वेदज । न॰ स्वेदजैर्यामशि
वि ॥ तथाहि । उक्तसंस्वेदज
मार्कभूमिकञ्चमिलौष्मजम् । क्षि
तिगोमयकाष्ठेषुश्रयादिषुतदुद्भवे
सर्वेसंस्वेदजा शीतदोषला पि
च्छिलाश्रते । गुरवश्कदर्तीसारज्व
रश्लेष्मामयप्रदा ॥ श्वेता शुचि
स्थलीकाष्ठवंशगोव्रजसम्भवा ना
तिदोषकरास्तेषु शिषास्तेभ्यो
विगर्हिता ॥ त्रि॰ भूव । शरी
रस्यघस्वेदाद्घर्षणात्जातेद्रमशक-
आदिरूपेभूतग्रामे ॥

संहत । त्रि॰ सङ्गते । मिलिते
दृढे ॥ दृढसन्धौ ॥ संहन्यतेस्म
। क्त॰ ॥

संहतजानु । त्रि॰ सज्ञौ । संह
तजानुके ॥

संहतजानुक । त्रि॰ सज्ञौ ॥
संहतेमिलितेजानुनीयस्य ॥

संहतल । पुं॰ मिलितपाणिद्वये
। प्रतले । सिंहतले । विस्तृता
ङ्गुल्योर्मिलितयोर्मिदङ्क्षिणयोः पा
ण्योः ॥ संहतसङ्घट्टलाति ।
ला॰ । आतोनुपसर्गङ्कृतिक ॥

संहति । स्त्री॰ समूहे । वृन्दे ।
मिकुरम्बे । कदंबके ॥ अल्पानाम
पिवस्तूनांसंहति कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्वध्यन्तेमत्त-
दन्तिनः ॥ संहतिःश्रेयसीपुंसां
स्वकुलैरल्पकैरपि । तुषेणापिप

रित्यक्ता अप्ररोहन्तितरुज्ञा ' ॥ घनतायाम् । संहन्यते । कर्म्मणि क्तिन् ॥ घाते ॥

संहननम । न० काठिन्ये । गात्रे । शरीरे ॥ संहति० संहन्यतेऽन्न । हन० । करणे ल्युट् ॥ वधे । संहन्यतेऽस्मिन भूतानि । करणे ल्युट ॥ दृढाङ्गत्वे ॥

संहननाङ्ग । त्रि० कठिनावयवे ॥ संहन्यतेनिबिडीभवन्ति० अङ्गानि यस्य ॥

संहर्ष: । पुं० स्पर्धायाम् ॥ मुदि । सुखे ॥ स्पर्धे । धृष्टौ ॥ प्रभञ्जने । पवने ॥ संहर्षणम् । हर्षतुष्टौ । घञ ॥

संहार: । पुं० प्रलये ॥ सङ्क्षेपणे सङ्क्षेपे ॥ नरकविशेषे ॥ हरणहार ' । कर्म्मभावेघञ् । सम्यक् हारोऽत्र ॥ यद्वा । संह्रियते ऽनेन । अध्यायन्यायेतिघञन्त साधु ' ॥ असिताङ्गादिभैरवागम्तभैरवविशेषे ॥

संहारमुद्रा । स्त्री० विसर्जनमुद्रायाम् ॥

संहित ' । त्रि० सहिते । येजिते ॥ सन्धीयतेस्म । डुधाञ . क्त: । दधातेर्हि . ॥ मिलिते ॥

संहितपुष्पिका । स्त्री० मिश्रेयायाम् ॥

संहिता । स्त्री० मन्वादिप्रणीतधर्म्मशास्त्रे ॥ पुराणसंहितासु ॥ पञ्चसंहितायथा । ब्रह्मपद्मशिवस्कान्धिप्रज्ञाख्यस्तथैवच । गौतमस्यकुमारस्यसंहिता: परिकीर्त्तिता ' ॥ चतस्रोयथा । ब्राह्मीभागवतीशैवीवैष्णवीचप्रकीर्त्तिता . । चतस्रसंहिता ' पुण्याधर्म्मकामार्थमोक्षदा . ॥ षट्संहितायथा । आद्यासनत्कुमारोक्ताद्वितीयासूतसंहिता । ततोयाब्राह्मीविप्रास्तुर्य्यौ वैष्णवीमता ॥ तत्परासंहिताब्रह्मीसौराख्यासंहितामतेति ॥ सन्धीवर्णानामतिशयितसन्निधौ । व र्णसंयोगे ॥ वेदैकदेशे ॥ सम्यग्धाहिताः कर्म्मणि क्त . । दधातेर्हि: ॥

संदूति: । स्त्री० बहुभिर्व्विहिताह्वाने ॥ समाह्वानम । सम्पूर्व्वात् ह्वेञ . स्त्रियांक्तिन् . वचिस्वपीति सम्प्रसारणम ॥

संह्रत ' । त्रि० कृतसंहारे सङ्क्षिप्ते ॥

संह्रति । स्त्री० संहारे ॥

संहृष्ट । त्रि० प्रहर्षिते ॥

सकट: । पुं० शाखोटवृक्षे ॥

सकटान्न . । पुं० दरान्ने ॥ त्रि० कटान्नसहिते ॥

सकण्टक: । पुं० शैवाले । करञ्जे

करञ्जे ॥ त्रि॰ कण्टकयुक्ते ॥
सकर । त्रि॰ सहस्ते ॥ राजस्व विशिष्टे ॥ शुण्डयुक्ते ॥ सकिर णे ॥ करैयसहवर्त्तते य स ॥
सकरुण । त्रि॰ सदये । करुणा विशिष्टे ॥
सकर्ण । त्रि॰ श्रवणशीले । श्रुति तत्परे ॥ सावधाने ॥
सकर्म्मक । पु॰ कर्मयुक्तपचत्यादि धातुषु ॥
सकल । पुं॰ सगुणेशिवे ॥ यथा शारदातिलके । निर्गुण स गुणश्चेतिशिवोज्ञेय सनातन । निर्गुण प्रकृतेरन्य सगुण सकल स्मृतइति ॥ कलाप्र कृतिस्तयासहवर्त्तते ॥ त्रि॰ सम्पू र्णे । सर्वस्मिन् ॥ कलान्विते । कलाभि परिपूर्णे ॥
सकलप्रिय । पु॰ घणाके ॥ त्रि॰ सर्वेषांप्रीतिविषये
सकलाञ्ज्ञानम् । न॰ समग्रज्ञाने ॥
सकषाय । त्रि॰ सरागे ॥ कषाये थकामक्रोधादिमलेनसहवर्त्तमाने ॥ कषायविशिष्टे । कसैला॰ हू॰ भा॰ प्र॰ ॥
सकाम । त्रि॰ कामनाविशिष्टे । कामिनि ॥ पुसीयाविषयापेक्षास काम इतिभण्यते । तेनयुक्तोदीन मना सकाम प्रोच्यतेबुधै ॥ सकामाश्चैवनिष्कामाद्विविधाभुवि मानवा । कामिनांफलमित्युक्तं चयिनाखप्राप्नुयात् । निष्कामा श्चान्तुनिर्वाणपुनरावृत्तिवर्जितम् । सहकामेनवर्त्तते । सहार्थस ॥
सकाश । पु॰ समीपे ॥ त्रि॰ का शयुक्ते ॥
सकुरण्ड । पु॰ साकुरण्डवृक्षे ॥
सकुल । त्रि॰ कुलान्विते ॥
सकुल्य । त्रि॰ सगोत्रे । सप्तम पुरुषानन्तरत्रयमपुरुषपर्यन्तस न्तती ॥ दशाहेनसपिण्डास्तुशुध्य न्तिप्रेतसूतके ॥ त्रिरात्रेणसकुल्या स्तु॰ स्नात्वाशुद्ध्यन्तिगोत्रजा ॥ दायाधिकारिसकुल्यास्तु॰पञ्चमपुरु षावधय । यथाहबौधायन । प्रपितामह॰ पितामह॰ पिता॰ स्वय॰ सोदर्य्यभ्रातर॰ सवर्णाया पुत्र॰ पौत्र॰ प्रपौत्रोवाएतानवि भक्तदायादान्सपिण्डानाचक्षते । विभक्तदायादान्सकुल्यानाचक्षते सत्स्वङ्गजेषुतद्गामीह्यर्थोभवतीति ॥
सकृत् । अ॰ सहार्थे ॥ एकवारे॥ एकवारम् । एकस्यसकृच्चेतिसु च् । सयोगान्तस्येतिसुचोलोप ॥ सकृद्द्वेनिपततिसकृत्कन्या प्रदीयते । सकृदाहददानीतित्री ण्येतानिसतांसकृत् ॥
सकृत्प्रज । पुं॰ काके । वायसे ॥

सकृत्प्रजायम्यस ॥ सिंहे ॥

सकृत्फला । स्त्री॰ कदल्याम् ॥ सकृत्फलान्यस्याः ॥

सकृद्गर्भ । पु॰ खेसरे । खच्चर॰ इ॰ भा॰ प्र॰ ॥

सकृद्विभात । त्रि॰ एकदैवकृत्स्नाऽभिव्यक्ते ॥ सदैवविभाति । सदाभारूपे ॥

सक्कवीर । पु॰ एकवीरवृक्षे ॥

सक्त । त्रि॰ अविरते । सक्ते ॥ अभिनिविष्टमनस्के । कर्ट्टत्वाभिमानेन फलाभिसन्धिना च कर्म्मण्यभिनिविष्टे ॥ सज्यतेस्म । सञ्ज सङ्गे । क्तः ॥

सक्तचेता । त्रि॰ आसक्तचित्ते ॥ यथा । अवध्यवत्मन घोरमखीकृत महाविषम् । अयस्कखण्डनं देविसं सार सक्तचेतसाम् ॥

सक्तिः । स्त्री॰ सङ्गे ॥ सञ्जेः क्तिन् ॥

सक्तु । पुं॰ न॰ भृष्टचूर्णके । भृष्टयवादिचूर्णे । सत्तू॰ इ॰ भा॰ प्र॰ ॥ सचति । षच सेचने । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ अस्य लक्षणादयो यथा । धान्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः ॥ तत्र यवसक्तवो यथा । यवजाः सक्तवः शीतादीपन लघव सराः । कफपित्तहराः रूक्षा लेखनाश्च प्रकीर्त्तिताः ॥ तेषीतावलदाव्याद्य च्वणाभेदनास्तथा । तर्प्पणा मधुरा रुच्याः परिणामे बलावहाः ॥ कफपित्तश्रमक्षुत्तृट्व्रणनेत्रामयापहाः । प्रशस्ता घर्मदाहाढ्य व्यायामार्त्तशरीरिणाम् ॥ चणकयवसक्तवस्तु । भिस्तुषैश्चणकैर्भृष्टैस्तुर्यांशैश्च यवैः कृताः । सक्तव शर्करासर्पिर्युक्ता ग्रीष्मेतिपूजिताः ॥ शालिसक्तवो यथा । सक्तवः शालिसम्भूता वह्निदा लघवो हिमाः । मधुरा ग्राहिणो रुच्याः पथ्याश्च मलशुक्रदाः ॥ नभुञ्जीत रदैश्छित्त्वा न निशायां न वा बहून् । न जलान्तरितान् नहि सक्तून्याज्ञिकेवलान् ॥ पृथक्पानं पुनर्दानं सामिषं पयसा निशि । दन्तच्छेदनमुष्णञ्च सप्तसक्तुषु वर्जयेत् ॥ चर्कवादि ॥

सक्तुक । पुं॰ विषप्रभेदे ॥ यद्ग्रन्थि सक्तुकेनेव पूर्णमथ्यः सक्तुकः ॥

सक्तुफला । स्त्री॰ शमीवृक्षे ॥ सक्तुवत्फलमस्याः । अजादित्वात्टाप् ॥

सक्थि । न॰ ऊरुभागे । जाङ्घे । साथल॰ इ॰ भा॰ ॥ सजति॰ सज्यते वा । सञ्जसङ्गे । असिसञ्जिभ्यां क्थिन् ॥

सक्रियम् । न॰ व्यक्ते । परिस्पन्दवति । तथाहि । बुद्ध्याद्यवच्छिन्नात्मन्नुना स देहस्तक्रिया देहान्तस्थोपादद तद्गतिनीर्थायपरिस्पन्द । शरीरपृथि व्यादीनामपरिस्पन्द । प्रसिद्धएव ॥ त्रि॰ क्रियासहिते ॥

सक्षण । त्रि॰ कृतावसरे ॥

सचत्रम् । अ॰ क्षत्रियाणांयोग्यत्वत्र त्वे ॥ क्षत्रियाणासम्पत्ति अव्यय विभक्तीतिसम्पन्नाव्ययीभाव । सम्पत्तिवसमस्यमानोत्तरपदस्थयो ग्यप्रवृत्तिनिमित्तम् ॥

सक्षम । त्रि॰ क्षमतायुक्ते ॥ क्षमा विशिष्टे ॥

सक्षार । त्रि॰ लवणयुक्ते ॥

सखा । पु॰ मित्रे । सुहृदि । वयस्ये । सवयसि । स्निग्धे । ऋहितेप्रति षेधहितेचैवप्रवर्त्तनम् । व्यसने चापरित्यागस्त्रिविधसखिलक्षणम् ॥ अपिच । सन्त्यागासहनोवन्धु सदैवानुगत । सुहृत् । एकक्रियोभ वेन्मित्र समप्राण सखाभवेदिति ॥ समान । ख्यायतेलोके । ख्या प्रकथने । समानेख्य सचोदात्तश्च तोण् । सवडित् । यलोप । स मानस्यतूदात्त । सखत्वादेश ॥ स खायो । सखायादौ ॥

सखिता । ) स्त्री॰ सख्ये
सखित्वम । ) न॰

सखी । स्त्री॰ आली । वयस्यायाम् ॥ सख्यशिश्वीतिङीष् ॥

सख्यम् । न॰ मैत्र्ये । मित्रतायाम् । साप्तपदीने । सौहार्दे ॥ दृष्ट्वान्दा व्यपीरसख्यपश्चाच्छ्व्यकलाभना म । व्यच्छ्पूर्वश्योश्चियाणासख्ये क्षापिसख्योरितिषु ॥ इतिमनु ॥ स ख्युर्भाव कर्म वा । सख्यु य ॥ सख्येनिषिध्यथा । कृतवैरेप्रठेस्ता व्ये क्षामुकेवगतघृणे । निर्लज्जे नैव कर्त्तव्यसख्यमितिमतासदेति ॥ हि ताप्रसने ॥

सगद्गद । पु॰ भयेनहर्षेणचाश्रुपूर्ण नेत्रत्वे । सति॰ कफरुद्धकण्ठन तयायोवाचोमन्दत्व सकम्पादिवि कारसत्मिन् ॥ वि॰ तद्वति ॥

सगन्ध । पु॰ बान्धवे । ज्ञातौ दा यादे ॥ त्रि॰ गन्धयुक्ते ॥

सगर । पु॰ अयोध्याधिपतौ॰ बाहु राजपुत्रे॰ सूर्यवंशीयेनृपतिभेदे ॥ नामनिदानन्तु । सपत्न्यातुगरस्तस्य दत्तोगर्भजिघांसया । गरेणसहतेने वजातस्ततसगरोऽभवदिति ॥ षड्ह्रदे ॥ वि॰ गरसहिते । स विषे ॥

सगर्भ । पु॰ सोदरे ॥ समानेगर्भे भवस । सगर्भेतिनिर्देशात्समा नस्यस ॥ अभ्यस्तदितसूत्रपवा दियुक्तकुशादौ ॥

सगर्भा । स्त्री० गर्भवत्याम् ॥

सगर्भ्यः । पुं० सहोदरे ॥ समानेगर्भे भवः । सगर्भसयूथेति यत् । सगर्भेति निर्देशात् ॥ यद्वा । सहतुल्ये गर्भे कुक्षौ भवः ॥

सगुण । पुं० गन्धादिविशिष्टे । विद्यादियुक्ते ॥ यथा सगुणो निर्गुणो वापि सखायो बलवत्तरः । तुषेणापि परिभ्रष्टस्तण्डुलो नाङ्कुरायते ॥ मायाशबलिते सर्वज्ञे सर्वशक्तियुक्ते ब्रह्मणि ॥

सगुणा । स्त्री० दुर्गायाम् ॥ गुणवत्याम् ॥

सगोत्रम् । न० गोत्रे । कुले ॥ पुं० सप्तमादूर्द्ध्वपुरुषे । त्रि० अभिन्नगोत्रे । ज्ञातौ ॥ समानगोत्रं कुलमस्य ज्योतिर्जनपदेति समानस्य सः ॥

सग्धि । स्त्री० सहभोजने ॥ अदनम् । अद० । क्तिन् । बहुलं छन्दसीति घस् । घसिभसोर्हलि च इत्युपधालोपः । झलो झलीति सलोपः । झषस्तथोर्धोऽधः । झलां जश्झशीति जश्त्वम् । समाना ग्धिः । समानस्य छन्दसीति सभावः ॥ सहग्धिर्वा । सहस्य सः संज्ञायाम् ॥

सङ्कट । त्रि० सम्बाधे । सङ्कीर्णे । अल्पावकाशे । वर्त्मादौ ॥ सम्यक् कटति आवृणोतीति । कटेश्चावरणे ॥ पचाद्यच् ॥ यद्वा सम्बाधार्थात्सं शब्दात् तूभार्थे । सम्प्रोदश्चेति कटच् । न० दुःखे ।

सङ्कटा । स्त्री० देवीविशेषे ॥ योगिनीप्रभेदे ॥

सङ्कटाक्ष । पुं० धववृक्षे ॥

सङ्कथनम् । न० सम्यग्भाषणे ।

सङ्कथा । स्त्री० परस्परभाषणे । सम्भाषणे । मिथः प्रश्नगोष्ठ्याम् ॥

सङ्कर । पुं० सम्मार्जन्यादिक्षिप्तधूल्यादौ । अवकरे । सङ्कारे ॥ सङ्कीर्यते । कॄ विक्षेपे ऋदोरप् । व्यामिश्रत्वे । मिश्रितत्वे । परस्परात्यन्ताभावसमानाधिकरणयोरेकाधिकरण्ये ॥ यथा मूर्त्तत्वं मनसि वर्त्तते भूतत्वं नास्ति । आकाशे भूतत्वं वर्त्तते मूर्त्तत्वं नास्ति । पृथिव्यां भूतत्वं नास्ति । पृथिव्यां भूतत्वं वर्त्तते मूर्त्तत्वं चास्तीति जातिसाङ्कर्यमिति ॥ रामान्यजातौ । वर्णसङ्करजातौ ॥ अलङ्कारविशेषे ॥ यथा । अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वन्तु सङ्करः । एत एवालङ्कारा यत्रात्मन्यनासादितस्वतन्त्रभावाः परस्परमनुयाह्यानुयाहकतां दधति स एषां सङ्कीर्यमाणस्वरूपत्वात् सङ्करः । उदाहरणं यथा । आत्तसीमन्तचिह्नमरकतानिहृष्टेमताटङ्कपत्रेलुप्तायां मेखलायां झटितिमणितुलाकोटियुग्मे ग

हीते । शोण विम्बौष्ठकान्त्यास्वदरि मृगदृशामित्वरीणामरण्ये राजन् गुञ्जाफलानांस्रजइतिशवरानैव हरन्ति ॥ अनतङ्गुणमपेक्ष्य स्वगुणत्यागः । न्तिमताप्रादुर्भूत तदाश्रयेणचतङ्गुण सचेतसाप्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभाव : ॥ अस्यान्ये भेदा काव्यप्रकाशादिषुद्रष्टव्याः ॥

सङ्करी । स्त्री० सङ्कार्यामि ॥

सङ्करीकरणम् । न० नवविधपापान्तर्गतपापविशेषे ॥ यथाहविष्णुः । अथपुरुषस्यकामक्रोधलोभाख्यं रिपुत्रय भवति० परिग्रहप्रसङ्गेनविशेषात्‌गृहाश्रमिण । तेनायमाक्रान्तो ऽतिपातकमहापातकानुपातकोपपातकेषुवर्त्तते० जातिभ्रंशकरेषु० सङ्करीकरणेषु० अपात्रीकरणेषु० मलावहेषु० प्रकीर्णकेषु० । तद्यथा । खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य चेतिमनु । ॥ गर्दभतुरगोष्ट्रमृगहस्त्यजामेषमत्स्यसर्पमहिषाणामन्यतमस्य वध . सङ्करीकरणं ज्ञेयमितिकुल्लूकभट्ट ॥

सङ्कर्षक : । त्रि० सङ्कर्षणकर्त्तरि ॥

सङ्कर्षण । पु० सीरपाणौ । बलभद्रे ॥ सम्यक्‌ कर्षतिशत्रु शरीरमायुधे । कृषविलेखने । नन्द्यादित्वाल्ल्यु ॥ सम्यक्‌ कृष्यते वा । कर्मणिल्युट ॥ गर्भस्य सम्यक्‌ कर्षणाद्वा । यथोक्तं हरिवंशे । गर्भसङ्कर्षणात्सोऽसौ लोके सङ्कर्षणः स्मृत इति ॥ अहङ्काराधिष्ठातरि ॥ द्रष्टृदृश्ययो सम्यक कर्षणमेकीकरण येन न० अन्यत्रस्थितस्यान्यत्रनयने ॥ आकर्षणे ॥ सम्यक्‌ प्रकारेणाकर्षणम् ॥

सङ्कलनम् । न० क्रमादुत्क्रमतोवाऽङ्कयोगे । जोडदेना० इ० भा० प्र० कालशब्दसङ्ख्यानयो । सम्पूर्व । ल्युट ॥

सङ्कलित । त्रि० सङ्गृहीते । सङ्गृहीते एकत्रीकृते । अङ्कान्तरेणैकीकृताङ्के । जोडदियाअङ्कइतिभाषा ॥ सङ्कल्यतेस्म । कालसङ्ख्याने क्त ॥ पुञ्जीकृतधान्यादौ ॥

सङ्कल्प । पु० मानसकर्म्मणि । इदमहङ्कुर्यामितिमनसो व्यापारे । इदङ्करिष्यामीत्यादिलक्षणेऽन्तःकरणपरिणामे ॥ इदं नीलमिदं पीतमितिविषयविवेचने ॥ इष्टसाधनताज्ञाने । समीचीनत्वेनभावने ॥ अहङ्करोमीतिकर्त्तृत्वाभिमाने ॥ दृष्टेष्वपिविषयेषु० अशोभनत्वाद्दर्शनेनशोभनाध्यासे ॥ अनेनकर्मणा दमिष्टफलं साध्यते० इत्येवं विषयायांबुद्धौ ॥ तिथ्याद्युल्लेखपूर्वकानामगोत्राद्युच्चारणपूर्वकोवाक्यविशेष ॥

ने ॥ सङ्क्षिप्यतेसङ्क्षेपणं वा ।
क्षिप० । घञ् ॥
सङ्क्षेपणम् । न० विस्तृतानांसंक्षेपणे । समसने सम्पूर्वात्क्षिपे ल्युट् ॥
सङ्क्षेपयोग । पुं ध्यानयोगश्चसङ्क्षेपनीयेयोगे ॥ यथाह्याजुनायश्री भगवान् । यथा । स्पर्शान्कृत्वा'ब हिर्वाह्यांश्चक्षुश्चैवान्तरेभ्रुवो । प्राणापानौसमौकृत्वानासाभ्यन्तरचारिणौ ॥ यतेन्द्रियमनोबुद्धिर्मुनि र्मोक्षपरायणः । विगतेच्छाभयक्रोधोयः सदामुक्तएवसः ॥
सङ्क्षेप्ता । पुं० हरौ ॥ त्रि० सङ्क्षेपकारके ॥ विस्तृतसूक्ष्मरूपेणसङ्क्षिपति । क्षिपप्रेरणे । तृच ॥
सङ्क्षोभ । पुं० सञ्चलने । चाञ्चल्ये ॥
सङ्ख्यम । न० युधे । आस्कन्दने । युद्धे । सङ्ख्यानम् । चक्षिङ० ख्या प्रकथनेवा । भावेकोवाहुलका त् ॥ त्रि० सङ्ख्येये ॥
सङ्ख्या । स्त्री० विमर्शे । चर्चायाम् । विचारणायाम् । विचारे ॥ सम्यक्विवेकेनात्मकथने । सम्यगात्मबुद्धौ ॥ एकद्वयादौ ॥ अत्राहामरसिंहः । सङ्ख्या सङ्ख्येये ह्यादशत्रिषु । विंशत्याद्याः सदैकत्वेसर्वाः सङ्ख्येयसङ्ख्ययोः । सङ्ख्यार्थेद्विबहुत्वेस्तस्तासुचानवतेः स्त्रियः ॥ पङ्क्तौ शत सहस्रादिक्रमाद्दशगुणोत्तरमिति ॥ अस्यार्थः । आदश० दशशब्दमभिव्याप्य । आङ मर्यादाभिविध्योरित्यव्ययीभाव । नपुंसकादन्यतरस्यामितिपक्षेटच्न । एकादिकोनवदशपर्यन्ता ० सङ्ख्या ' सङ्ख्येये० त्रिलिङ्गाः । तेनसङ्ख्यासङ्ख्येययो ' सामानाधिकरण्यं नवास्ति । यथा० एक पट ० एकाशाटी० एक वस्त्रम् ' त्रिशब्दो ऽवधारणे० सङ्ख्येयएव० नतुसङ्ख्यायामित्यर्थः । तेन० एकोविप्रइत्यादिभवतिनतुविप्रस्यैकइत्यादि । किन्तु ' द्व्येकयोर्द्विवचनैकवचनइतिसूत्रे० द्व्येकयोरितिनिर्देशात्सङ्ख्यामात्रेपिसम्भव । तेनघटात्पर्वत्यपिद्वयादितिसुभूति । वार्त्तारम्भ्यायुक्तेति ... ते । विंशतिराद्यायासांता सङ्ख्या । ० सङ्ख्येय सङ्ख्ययोश्चर्त्तते० एकवचनान्ताश्च० यथा विंशतिर्गाव. ० गवाविंशति. । विंशत्यादीनायदासङ्ख्यार्थस्तदाद्विवचनबहुवचनेअपिस्त । यथाद्वे विंशती० गाव. ० गवावातिस्त्रोविंशतयइति । तासु विंशत्यानवतिमभिव्याप्यस्त्रीलिङ्गा ।

व्यतेस्म । घुषिर् विशब्दने । सा कण्ठम्स्वरमङ्गष्टासनामितिपक्षे क्लूट ॥

सङ्घुष्ट । त्रि० सङ्घुषिते । सश ब्दिते । सम्यगघोषयाश्रये ॥ स ङ्घुष्यतेस्म । घुषिर्० कण्ठमस्वर सङ्घुषासनामितिपक्षे क्लभाव . ॥

सचल । त्रि० अचलभिन्ने । अस्थिरे ।

सचि । स्त्री० शच्याम् ॥ सर्वेन्द्रि येषुसचते । षचसमवाये । सर्व धातुभ्यइन् ॥

सचिक्कण । त्रि० क्लिन्नमेध्ये ॥

सचिव । पु० अमात्ये । मन्त्रिविशे षे ॥ कार्यसहाया सचिवाबुद्धि सहायास्समन्त्रिण : प्रोक्ताइतिभेद ॥ अथसचिवा : तेषभेदा७८ध्याये ५४८वधिश्लोकेद्रष्टव्या । सहाये ॥ चेटे । सचनम् । सच० । सर्वधा भ्यइन् । सचिवाति । वा० आ तोनुपसर्गेक ॥

सचिवामय । पु० विसर्परोगे ॥

सची । स्त्री० इन्द्राण्याम् ॥ कृदिका रादितिङीष ॥

सचीनन्दन । पु० जयन्ते ॥ गौडदे शोत्पन्नेकलौवैष्णवविशेषधर्मप्रव- र्त्तकेचैतन्यदेवे ॥ यथाशाकेमुनि व्योमयुगेन्दुगण्ये १४०७ पुण्ये तिथौफाल्गुनपौर्णमास्याम् । श्रे लोक्यभाग्योदयपुण्यकीर्त्तिर्देव : सचीनन्दनआविरासीदितिचैत न्यचन्द्रोदयनाटकम् ॥

सचेतन । त्रि० सप्राणे ।

सचेता । त्रि० अव्याकुलचित्ते ॥ प्र सन्नचित्ते ॥

सचेष्ट त्रि० चेष्टयासहवर्त्तमाने ॥

सञ्चारा । स्त्री० हरिद्रायाम् ॥

सच्चित् । न० ब्रह्मणि ॥

सच्चिदानन्दम् । न० ब्रह्मणि । नित्यज्ञानसुखस्वरूपे ॥ त्रि० सा कारदेवविशेषणे ॥

सच्चिदानन्दलक्षणम् । त्रि० पर मात्मनि ॥ सच्चिदानन्दे० अन् तजडदु खप्रतियोगिभिर्लक्ष्यते० विरुद्धधर्मत्यागलक्षणयाभागलक्ष णयाज्ञायते० इतिसच्चिदानन्दल क्षणम् ॥ यद्वा । सन्तोसर्वदाद्वा यिनोयोचिदानन्दोज्ञानानन्दोतौ लक्षणसुरूपमस्य ॥

सच्छाकम् । न० आर्द्रके ॥

सजम्बाल । त्रि० पङ्किले । पङ्कवि शिष्टे । जम्बालेनपङ्केनसहेति विग्रह ॥

सजाति । पु० समानजातिस्त्री पुंसयो: पुत्रे ॥ यथा । सवर्णेभ्य सवर्णासुजायन्तेहिसजातय । अ निन्द्येषुविवाहेषुपुत्रा सन्तान वर्द्धना . ॥ त्रि० समानजातौ ;

सजातीय : । त्रि० समानजातीये ।

सत्यवादी । त्रि॰ यथार्थवक्तरि । सत्योद्ये ॥
सत्यवृत्त । त्रि॰ अकपटचरिते ॥
सत्यव्रत । पु॰ ईश्वरे ॥ सत्य व्रत सङ्कल्पोस्य ॥ सूर्यवंशीयत्रय्यारुणस्यात्मजे राजर्षिविशेषे । योसौ त्रिशङ्कुसञ्ज्ञामवाप ॥ त्रि॰ सत्य सङ्कल्पे ॥
सत्यसङ्कल्प । त्रि॰ अमोघवाञ्छिते । ईश्वरे ॥ सत्या सङ्कल्पायस्य
सत्यसङ्गर । पु॰ विश्विरसि । श्रीदे । कुवेरे ॥ कूटास्त्रवर्जितेशूरायुधे ॥ त्रि॰ सत्यप्रतिज्ञे ॥
सत्यसन्ध । पु॰ कैकयीतनये । भरते । जनमेजये ॥ त्रि॰ सत्यप्रतिज्ञे ॥ सत्यासन्धाप्रतिज्ञायस्य ॥
सत्यसन्धा । स्त्री॰ द्रौपद्याम् ॥
सत्या । स्त्री॰ दुर्गायाम् ॥ जनकात्मजायाम् । सीतायाम् ॥ व्यासमातरि । सत्यवत्याम् ॥ सत्यभामायाम् ॥ विनापिप्रत्ययंपूर्व्वोत्तरपदलोप ॥ सत्यभामायाम् ॥ अविनाशिन्यां ॥
सत्याकृति । स्त्री॰ सत्यापने । मयेदवश्यं कर्त्तव्यमितितथ्यकरणे । सत्यक्रिया॰ सात्व॰ भा॰ प्रसिद्धनिष्कने ॥ सत्यङ्कारच । स्त्रियांक्तिन् । सत्यादगदपदे॰ कृतिडाच् ॥
सत्याग्नि । पु॰ अगस्त्यमुनौ ॥ च्

डाकमाग्नौ ॥
सत्यानृतम् । न॰ वाणिज्ये ॥ सत्यसहितमनृतम् । शाकपार्थिवादि ॥
सत्यापनम् । न॰ सत्यङ्कारे । सत्याकृतौ ॥ सत्यस्यकरणम् । सत्यापपाशेतिणिजापुकौ । भावेल्युट् ॥
सत्योद्यम् । न॰ सत्यवचे । सत्यस्यवदने ॥ वद सुपिक्यप्चेतिक्यप् ॥
सत्रम् । न॰ क्रतौ । यज्ञे ॥ सदादाने ॥ आच्छादने ॥ अरण्ये ॥ केतवे ॥ यज्ञविशेषे । गवायनादिक्रतुविशेषे ॥ यत्रयजमानाएवसमाना ऋत्विगादिरूपेण॰ कर्म्म कुर्व्वन्ति॰ तस्मिन् यज्ञे सदच्छिन्नेसततान्नदाने ॥ धने ॥ गृहे ॥ कर्म्मणि ॥ सीदन्त्यत्राऽनेनवा । षद्लृविशरणगत्यवसादनेषु । ष्ट्रन् ॥ गृधुशीभ्यादिनावोच: ॥ सत: साधून् त्रायतेवा । त्रैङ् पालने । आतोनुपसर्गेकइतिक । नपुंसकत्वात्सत्रमिति ॥
सत्रम् । अ॰ सहार्थे ॥ सत्रायते । त्रैङ्पालने । अम् । यरोहितम् ॥
सत्रशाला । स्त्री॰ प्रतिश्रये । अन्नदानाद्युद्दवसिते ॥
सत्रा । अ॰ सहार्थे ॥ सत्राकलत्रैर्गाङ्श्याम् ॥ सत्रायते । त्रैङ्॰ । क्विप् ॥
सत्राजित् । पु॰ कृष्णस्यश्वशुरे ॥

स्यात्मेीवी । चि॰ सत्त्ववहुले । जर्हसत्त्वविशाल ॥ सत्त्वेनविशाल ॥

सत्त्वसंशुद्धि : । स्त्री॰ चन्त करणस्य निर्मलतायाम् । श्रवणादिपरंपरा भ्यासात् : करणस्यासम्भावनाविप रीतभावनादिमलराहित्ये सम्य क्शुद्धि ' संशुद्धि सत्त्वस संशुद्धि ' । तथा सम्यक्भगवत्त त्त्वस्फूर्तियोग्यता ॥

सत्त्वसङ्क्षय । पु॰ चित्तभङ्गे ॥ प्रारब्धकार्यासिद्ध्यादिविषाद स त्त्वसङ्क्षय . ॥

सत्त्वसमाविष्ट । त्रि॰ सत्त्वेनच तम ना॰ चात्मविवेकज्ञानहेतुनाचित्त गतेनातिशयेन॰ सम्यग्ज्ञानप्रति बन्धकरजस्तमोमलराहित्येन॰ चा समन्तात्फलाव्यभिचारेण॰ चावि ष्टे व्याप्ते ॥

सत्त्वसम्पन्न । त्रि॰ सद्भावापन्ने ॥

सत्त्वस्थ . । त्रि॰ सत्त्वगुणप्रधाने ॥ पु॰ विष्णौ ॥ सत्त्व सत्वगुण प्रका शात्मकमधितिष्ठतिपालनोपाधित याविष्णुरूपेणेतिसत्त्वस्थोविष्णु । यद्वासत्त्वेषुसर्वप्राणिषुजीवरूपे णान्तर्यामिरूपेणचतिष्ठतीतिसत्त्व स्थ ' । स्था॰ । सुपिस्थइतिक ॥

सत्पथम् । न॰ सवर्त्मकायाम् ॥

सत्पथ . । पु॰ चर्चितेऽध्वनि ' । स त्सामीप्यात्स । सन्पन्थाइतितत्पु रुष । समासान्तष्टच् ॥

सत्पुत्र । पु॰ सद्पत्ये ॥ सत्पुत्रो पातुजातीनवैशोपिविविधयो । पु न्नाम्नोनरकात्त्रात सत्तेनसुमहा त्मना ॥

सत्पुरुष : । पु॰ पूज्यमानपुरुषे ॥

सत्प्रतिग्रह । पु॰ साधुजनदत्तद्र व्यग्रहणे ॥ सद्भ्य ' साधुभ्य प्र तिग्रहोदानग्रहणम् । यथा । सम्र वित्तागमाधर्म्यादायोलाभ क्रियो जय । प्रयोग कर्मयोगश्चसत्प्र तिग्रहएवचेतिमनु ' ॥

सत्प्रतिपक्ष । पु॰ तुल्यबलौ । प्र तियोगिनि ॥ न्यायमते॰ साध्या भावसाधक हेत्वन्तर यस्यतस्मिन्- ॥ यथा । शब्दोनित्य : श्रवणत्वात् शब्दवत् । शब्दोऽनित्य कार्यत्वात् घटवदिति ॥ यद्वा । ह्रदोवह्निमा न्धूमात्॰ ह्रदत्वाद्वीवह्न्यभावव्या प्यवदृश्यदादिरिति ॥

सत्फल । पु॰ दाडिमवृक्षे ॥ शोभ नफलवतिवृक्षे ॥

सत्सङ्ग । पु॰ साधुसङ्गमे । सधर्म्म वत्तिजनसमागमे । यथोक्त कुला र्णवे । सत्सङ्गश्चविवेकश्चनिर्मल न यनद्वयम् । यस्यनास्तिनर सो न्ध . कथ नस्यादमार्गगइति ॥

सत्सार . । पुं॰ खादिरे । खदिरसा

रे । वृक्षविशेषे ॥

सद्युत्कारम । न० सत्कृतौ ॥ युत्का रेणसहवर्त्तमाने ॥

सदंशक । पु० कर्कटे । कुलीरे ॥ त्रि० दंशयुक्ते ॥

सदंशवदन । पु० कङ्कपक्षिणि । रथालङ्करणे । आमिषप्रिये ॥

सदञ्जनम् । न० कुसुमाञ्जने ॥

सदनम् । न० वेश्म । भवने । गृहे ॥ सीदन्त्यत्र । षद्लृ० । अधिकरणे ल्युट् ॥ तैथे । जले ॥ ग्लानौ ॥ यथा । दौर्बल्यंसदनं कार्श्यं शुष्किशूनमथारुचिमिति ॥

सद्व्यय । त्रि० विनाशापक्षयोपलक्षितसर्वविकारशून्ये । स चासौ अव्ययश्चेति कर्मधारय ॥

सदश्व । पु० दान्ताश्वे ॥

सद । स्त्री० न० सभायाम् ॥ सीदन्त्यस्याम् । षद्लृ० । असुन् ॥

सदसदात्मकम । न० स्वरूपपररूपाभ्यांनिरूपणीयेसर्वात्मकजगति । जगद्धि व्यवहारदशायासत् परमार्थदर्शनेनासत् । तत्स्वरूपम । सदसतीआत्मास्वरूपयस्यतत् ॥

सदसद्ग्रामनिर्वचनीयम् । न० अज्ञानस्योत्कृष्टलक्षणे ॥ नेदमसदभिव्यञ्जनस्यसत्त्वेविदात्मवद्वाधाभावप्रसङ्गात् । असत्त्वेच वन्ध्यासुतादिवद्परोक्षप्रतिभासानुपपत्तेः शाब्यप्रतीत्योश्चाश्चानैप्रसिद्धत्वाद्यतः तस्यानिर्वचनीयत्वम् ॥

सदसद्योनि । स्त्री० धर्माधर्ममिश्रस्वाद्वाह्मणादिमनुष्येषु । तेषुहिराजसमिश्रफलभुक्त्वात् । सदसतीयोनि ॥

सदसद्वादो । पु० अकलङ्कितप्रभृतिषु० अर्हत्सु ॥

सदसद्विकारम् । न० जगति ॥ सत् आकाशवायुरूपममूर्त्तभूतद्वयम् । असत् तेजोजलभूमिरूपम् मूर्त्तभूतत्रयम् । तयोर्विकार तत्परिणामरूपं यत् तत् ॥

सदस्पति । पु० सभाधिपतौ ॥ सदसः पति ॥

सदस्य । पु० विविद्वर्गिनि । सभायाम न्यूनाधिकविचारकै० कर्त्तव्यविशेषे ॥ सदभिमाधु । तत्रसाधुरितियत् ॥ सभ्ये ॥ सदसियज्ञसभायामृत्विग्भ्योऽन्यो मिलितायेब्राह्मणास्तेसदस्या ॥

सदा । अ० सर्वकाले । सर्वदार्थे ॥ सर्वस्मिन काले सर्वकान्यकिंयत्तद्भ्य कालेदा । सर्वस्यसोन्यतरस्यांदि ॥

सदाकार । पु० आत्मनि । असौत्वं तन्मात्रव्यवहारकारणभूतयाकारोयस्य ॥

सदागति । पु० वाते । वायौ ॥

सदागतिरम्य ॥ नाके ॥ निर्वाणे ॥ सदीश्वरे ॥ सूर्य्ये ॥

सदाचार. । पुं॰ प्रातः कृत्यादि नियमाचरणेनसाधुव्यवहारे । शिष्टाचारे ॥ अथमनु । तस्मिन् देशेयआचार पारम्पर्यक्रमागत वर्णानांसान्तरालानांससदाचारउच्यते ॥ तस्मिन्देशे॰ ब्रह्मावर्तदेशे ॥ सताम्आचार ॥ सदाचार वतापुंसाजितौलोकावुभावपि । विशेष कालिकावामनपुराणादौ द्रष्टव्य ॥ वि॰ तद्वति ॥

सदाचारवान । वि॰ सदाचारविशिष्टे । सदाचारिणि ॥

सदातन । पुं॰ विष्णौ ॥ वि॰ नित्ये ॥ सदाभव । सायश्चिर मित्यादिना॰ ट्युट्युलौतुट्च ॥

सदातोया । स्त्री॰ एलापर्ण्याम् ॥ सदानीरायांसरिति ॥

सदादान । पुं॰ अभ्रमातङ्गे । ऐरावते ॥ हेरम्बे । लम्बोदरे ॥ गन्धहस्तिनि । मत्तगजे ॥ न॰ नित्यदाने ॥ त्रि॰ सर्वदादानशीले ॥ सदादानंयस्य ॥

सदान । पु॰ समदे ॥

सदानन । त्रि॰ शोभनवदने । सतृणाननयस्य ॥

सदानन्द : । पुं॰ सदाशिवे ॥ सदा आनन्द : सन्॰ सर्वदाह्लादयोऽस्य आनन्दोयस्य । सत साधून्आनन्दयतीतितथा ॥ वि॰ सततानन्दयुक्ते ॥ यथा । ममानन्दे सदानन्द सदानन्दोभविष्यति । ममानदेनिरानन्दोनिरानन्दोभविष्यतीतिपुराणे भगवतीवाक्यम् ॥

सदानर्त । पु॰ खञ्जनखगे ॥

सदानीरवहा । स्त्री॰ करतोयायाम् ॥

सदानीरा । स्त्री॰ करतोयायासरिति ॥ गौरीविवाहसमये॰ शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात्॰ सदानीरंयस्या अरजस्वलत्वात् । तथाचात्रस्मृति. । प्रथमेकर्कटे देवीत्र्यहगङ्गारजस्वला । सर्वारक्तवहानद्य करतोयाम्बुवाहिनीति ॥

सदापुष्प । पु॰ नारिकेलवृक्षे ॥ श्वेतार्के ॥ न॰ कुन्दे । माघ्ये ॥

सदापुष्पी । स्त्री॰ अरुणार्के । आदित्यपुष्पिकायाम् ॥

सदाप्रद । त्रि॰ सततदातरि ॥

सदाप्रसून । पुं॰ अर्कवृक्षे ॥ रोहितके ॥ कुन्दवृक्षे ॥

सदाफल । पु॰ स्कन्धफले ॥ उदुम्बरे ॥ नारिकेले ॥ बिल्वे ॥ सदाफलानियस्मिन् ॥

सदाफला । स्त्री॰ त्रिसन्धिपुष्पवृक्षे ॥ वार्त्ताकुविशेषे । सदावेङ्गन॰ इ॰ भा॰ ॥ सदाफलाचिदोनम्नी

भाविधर्म : सत्त्वप्रमेयत्वादिरस्मिन् ॥ चस्मिन् । देवदत्तसुवादिकमस्तीत्यस्मिन्नर्थे ॥

सद्भूत । त्रि० सत्ये ॥

सद्म । न० वेश्मनि । निकेतने । गृहे ॥ तोये । पानीये । नीरे ॥ सौदृश्यव । यद्वत्विषयगतृयवसादनेषु : मनिन् ॥

सद्य क्षतम् । न० नामनि ॥ त्रि० तत्कालक्षते ॥

सद्य प्राणकर । त्रि० तत्क्षणात्बलकारकद्रव्यादौ ॥ यथा । सद्योमांसं नवान्नश्च बालास्त्रीक्षीरमोजनम् । घृतमुष्णोदकश्चैव सद्य प्राणकराणिषट ॥

सद्य प्राणहर । त्रि० तत्क्षणात्बलायुर्विनाशकद्रव्यादौ ॥ यथा । शुष्कमांसं स्त्रियोवृद्धाबालार्कस्तरुणदधि । प्रभातेमैथुनं निद्रा सद्य प्राणहराणिषट् ॥

सद्य शुद्ध । स्त्री० सद्य शौचे ॥ यथा । देशान्तरमृतेवापिसद्य शुद्धिरुदीरिता ॥ इ० गारुडे १०७ अध्याय ॥

सद्य . श्रीता । स्त्री० कपिकच्छ्वाम् ॥

सद्य श्रीच । पु० आर्वाद्विषु ॥ तेयथा । कारव : शिल्पिनो वैद्या : दासीदासस्तथैव च । राजानोराजभृत्याश्च सद्य : शौचा : प्रकीर्ति

ता : ॥ विशेषोगरुडकूर्मपुराणयुद्धविविवेकादौद्रष्टव्य ॥

सद्य । अ० तत् क्षणे । समदीत्यर्थे ॥ समानेऽहनि० इत्यस्मिन्नर्थे० सदृयपत्तत्पराद्यं चमकृत्यादिनासमानस्यसभावेऽद्यस्चाइनिनिपात्यते ॥ यथा । सद्योवलकरानारीसद्योबलहरापय: । स्त्रिय गच्छे त्पय पौत्वातत्ख्णात्सुनः पिवेदिति ॥

सद्यस्क । त्रि० नवीने । नूतने ॥

सद्योजात : । पु० शिवे । मत्स्ये ॥ त्रि० तत्क्षणोत्पन्ने ॥

सद्योनि । पु० देवे । सुरे ॥ सा त्त्विकीश्फलभुजि । सतीयोनि ॥

सद्योभावी । पु० तर्णके । गोवत्से ॥ त्रि० तत्क्षणभवनशीले ।

सद्रूप । त्रि० यथार्थस्वरूपे । सर्वदास्थायिस्वरूपे ॥ सत्सदास्थायी रूपं यस्य ॥

सद्वत्ता । पु० सत्यवने । सत्यवीव साच ॥

सद्वृत्तम् । न० सच्चरित्रे । साधुस्वभावे ॥ त्रि० तद्युक्ते ॥ यथा । नासमञ्जसशीलैस्तुसहासीतनराधम । सद्वृत्तसन्निकर्षोहिक्षणार्द्धमपिशस्यते ॥

सद्वृत्ति : । स्त्री० शास्त्राविरुद्धजीवने ॥ प्रमाणाशास्त्रबाधायोग्यायामस्यामवस्थायाम् ॥ सतीवासौवृत्तिश्च

कोनामचतुर्थस्सनन्दनइति ॥ सनत्कुमारे ।।

सनपर्णी । स्त्री॰ असनपर्ण्याम

सना । अ॰ नित्ये ॥ सनति । षणसम्भक्तौ । आप्रत्यय ।

सनाखल । पु॰ सनखले ॥ यथा । महेन्द्रभीमबिमलकुरुक्षेत्रगयाखला । सनापदोत्तरा साहशा सा ' सनखला खग ।।

सनात् । अ॰ नित्यार्थे ।

सनातन । पुं॰ अच्युते । विष्णौ ॥ शिवे ।। अजे । वेधसि ।। पितृणामतिथौ ॥ दिव्यमनुष्ये । ब्रह्मणः पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते॰ उपाधिपरिच्छेदेपिवस्तुत परमात्मस्वरूपत्वान्नित्ये॰ आत्मज्ञानविनाछेत्तुमशक्येससारवृक्षे ॥ वि॰ स्थिरे । सुनिश्चले । सर्वदैकरूपे । अविनाशिनि श श्रुते ॥ सनाभव : । सायश्चिरंमतिव्युव्युलौतुट् च् ॥ अनादिपरम्परागते । चिरन्तने ॥

सनातनी । स्त्री॰ लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् ॥ निर्वचनन्तु । सर्वकालेसनाप्रोक्तं विद्यमानेतनीतिच । सर्वंसर्वंकालेषुविद्यमानासनातनीति ॥ अपिच । निर्गुणस्यचनित्यस्यवाचकस्सनातन । सदानित्यानिर्गुणायाकीर्त्तितासासनातनीति ।। टि

त्वान्ङीप् ॥

सनत्कुमार । पु॰ ब्रह्मणः पुत्रे॰ सनत्कुमारे ॥ सनात्॰ नित्य कुमार॰ ॥

सनाथ । वि॰ सस्वामिके । नाथवति ॥

सनाथा । सनाथिका । स्त्री॰ पतिव्रतयाम् । जीवद्भर्तृकायाम् ॥

सनाभ । पु॰ सोदरेभ्रातरि ॥

सनाभि । पु॰ ज्ञातौ । सपिण्डे ॥ सोदरे । समानोनाभिर्मूलपुरुषोऽस्य । ज्योतिर्जनपदेतिसमानस्यस ॥ वि॰ तुल्ये । सदृशे ॥

सनामक । पुं॰ ग्रीभाञ्जने ॥ वि॰ समाननामवति ॥

सनि । स्त्री॰ भक्तौ । दाने ॥ सनोति । षणुदाने । खनिकषोत्यादिना॰ इन् ॥ सनन वा ॥ अध्येषणायाम । गुर्वादिप्रार्थनयाकश्चिदर्थेनियोजने ॥ यथा । हेस्वामिन्ममाभिषेकं कुरु । अपिच । वाहिनायकुलाचारनलिनीकुलवल्लभ । त्वत्पादाम्भोरुहच्छायांदेहिमूर्द्धि कृपानिधे॰ इति ॥

सनित । वि॰ प्रतिपन्ने ॥

सनिष्ठीवम् । न॰ सश्लेष्मवचसि । सनिष्ठीवे । निष्ठीवनम् । ष्ठिवुनिरसने । घञ् । लघूपधगुणः । ह

घोद्राद्दित्वाद्दीकारः। सहनिष्ठी
वेन• श्लेष्मकगादिनिर्गमनेनवर्त्त
तेइतिसंनिष्ठीवस॥ त्रि• तद्वति।
सन्निष्ठेवम्। न• सश्लेष्मवचसि। अ
म्बूकृते॥ निष्ठेवनम्• निष्ठेव:
। ष्ठिवु• । घञ्। लघूपधगुण।
सहनिष्ठेवेनश्लेष्मकगादिनिर्गमने
नवर्त्ततइतिसन्निष्ठेवम्॥ अम्बूकृ
तसनिष्ठेवमित्यमरः॥ त्रि• त
द्वति॥
सनी। स्त्री• सन्निधानार्थे॥
सनीड। त्रि• निकटे। समीपे।
उपकण्ठे॥ समाननीडं वासस्था
नमस्य। सहनीडनेनेतिवा॥
सन्तुतर्। अ• अन्तर्द्धाने॥
सन्तत:। पुं• ज्वरविशेषे। तल्लक्ष
णं यथा। सप्ताहं वाद्दशाहं वाद्वाद
शाहमथापि वा। सन्तत्या योऽविस
र्गी स्यात् सन्तत: सनिगद्यतइति
॥ विकल्पोवातिकादिभेदात्। स
न्तत्या निरन्तरेण च। अविसर्गी अपरि
त्यागी॥ न• सतते॥ त्रि• त
द्वति। व्याप्ते॥ विस्तीर्णे॥ सन्त
न्यतेस्म। तनु• । क्त:। अनुदात्तो
पदेशेतिनलोप:। समोवाहिततत
योरितिपक्षे मलोपाभाव:॥
सन्ततम्। अ• सातत्ये॥
सन्तताभ्यास:। पुं• स्वाध्याये॥
सन्तति:। स्त्री• गोत्रे। अभिजने।
हलाने॥ पङ्क्तौ। पुत्रपौत्रादीनां
पारम्पर्ये॥ विस्तारे॥ तनये॥
दुहितरि॥ सन्तन्यते। तनोतेर्क्ति
र्वाक्तिन् पारम्पर्ये॥
सन्तप्त त्रि• अध्वगमनादिनाश्रान्ते
। तत्पर्यायोयथा। सन्तापितस्तुस
न्तप्तधूपितधूपायितौचदूनश्चेति
॥ सन्ताप्यतेस्म। तपसन्तापे। क्त:
अकर्मकत्वात् कर्त्तरि वा॥ प
रितोदूने॥ अभितापयुक्ते॥
सन्तमसम्। न• विष्वगन्धकारे। व्याप
कान्धकारे॥ समन्तात् सर्वत: •
तम:। अवसमन्धेभ्यस्तमसइत्यच्
अ॥
सन्तरणम्। न• तरणे। पारगमने।
अवनपूर्वकदेशान्तरगमने॥
सन्तर्जनम्। न• हठसंस्पर्शे॥
सन्तर्पणम्। न• प्रीणने। तृप्तौ॥
द्राक्षादाडिमखर्जूरीकदलीयवशर्क
राभाजं मध्वाज्यसंमिश्रितं॥
त्रि• तृप्तिकारके।
सन्तर्पित• त्रि• सम्यक्प्रीणिते
सन्तान: पुं• सन्ततौ। विस्तारे॥
गोत्रे। वंशे। अन्ववाये॥ अप
त्ये॥ सन्तन्यते। तनुविस्तारे॥
घञ्॥ सुरद्रुमे। कल्पवृक्षे॥
सन्तानकनामिपुष्पविशेषेति
ह्न• तनोतेर्घञ्सञ्ज्ञायाम्:॥
सन्तानकन्यन्तेपुष्पाण्यस्मिन्नधि

कारणे इन्वर्धे तिघञ् वा ॥

सन्तानिका । स्त्री॰ मर्कटजाले ॥ छुरिकाफले । फेने ॥ क्षीरादिसारे । मलाइ॰ इ॰ भा॰ ॥ सन्तानिकागुरु शीतारुष्यापित्तास्त्रवातनुत् । तर्पणी बृंहणी स्निग्धा बलासवलशुक्रदा ॥

सन्ताप । पु॰ अग्निजतापे । सज्ज्वरे ॥ सन्तापयति । तपसन्तापे । व्यत । पचाद्यच् ॥ सम्यगुत्तापे । शोकादौ ॥

सन्तापन । पुं॰ स्मरशुगविशेषे ॥ त्रि॰ सम्यक् तापकारके ॥

सन्तापित । त्रि॰ अध्वादिनाश्रान्ते । सन्तप्ते ॥ सन्ताप्यतेस्म । तपदाहेचुरादिः । क्त । अचामर्कत्वात् कर्त्तरि वा क्तः ॥

सन्तार । पुं॰ सन्तरणे ॥

सन्ति । स्त्री॰ दाने ॥ अवसाने ॥ पुं॰ भृत्ये ॥

सन्तुष्ट । त्रि॰ उत्पन्नातमप्रत्यये । निवृत्तस्पृहे । सन्तोषयुक्ते ॥ यथा । अप्राप्त हिपरित्यज्यसम्प्राप्ते समतां गत । अदृष्टखेदाखेदोय . सन्तुष्टइतिकथ्यतइति ॥ असन्तुष्टाद्विजानष्टा ' सन्तुष्टाश्चमहीभुज '। सलज्जागणिकानष्टानिर्लज्जाश्चकुलाङ्गना ॥ पुं॰ अश्वत्थरक्षे । लग्नरङ्ग॰ भा॰ प्रसिद्ध ॥

सन्तृप्त । त्रि॰ विवे । व्याप्ते ॥

सन्तोष । पु॰ विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपायाश्चित्तवृत्तौ । चाममवे । यदृच्छालाभसन्तुष्टौ अलाभेचाविषादे । अलम्बुद्धौ । यथासम्भवमूल्यात्मवाधधारणावश्यकपञ्चयज्ञाद्यनुष्ठानमात्रोचितधनातनधिकायास्पृहायाम् ॥ सन्तोषामृततृप्तानायत सुख शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम् ॥ धृतौ । स्वास्थ्ये ॥

सन्त्रास । पु॰ साध्वसे । भये ।

सन्दंश । पु॰ कङ्कमुखे । सडसीतिख्याते लोहयन्त्रविशेषे । एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेविहितत्वसन्दंश । ॥ नरकविशेषे ॥

सन्दंशिका । स्त्री॰ सुचुट्याम् ॥ लौहयन्त्रविशेषे । कातारि॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सन्दर्भ । पुं॰ प्रबन्धे । रचनायाम् । ग्रन्थने ॥ प्रकरणे ॥

सन्दर्शनम् । न॰ साक्षात्कारे । सदृश्यते । दृशिर्॰ । ल्युट् ॥ सम्यक्प्रकारेणदर्शनवा ॥

सन्दृष्ट । त्रि॰ सम्यक्प्रकारेणदृष्टे

सन्दानम् । न॰ दामनि । दे.हनकाशैपादबन्धनरज्जौ ॥ सन्दीयते

संदेशहारक । पु॰ दूते ॥ सन्देश हारक ॥

सन्देह । पुं॰ विचिकित्सायाम् । संशये । हृदयशङ्कौ ॥ यथा । व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति । न हि सन्देहमात्रादलक्षणता भवति । पुनः प्रमाणान्तरेण निश्चयोत्पादादिति । सन्देहनम् । दिहउपचये । भावे घञ् । देहमध्यभागे ॥ सन्दिह्यते॰ उपचीयतेऽनेनेति वा । पृथिव्यादिभूतैरुपचितेशरीरे ॥ अलङ्कारविशेषे ॥ यथा । विषयोविषयीयत्र साहश्यात्कविसम्मतात् । सन्देहगोचरौ स्यातां सन्देहालङ्कृतिस्तु सेति ॥

सन्दोह । पु॰ विसरे । समूहे ॥ सन्दुह्यते । दुहप्रपूरणे । घञ् ॥

सन्द्राव । पु॰ पलायने । अस्य पर्यायायथा । प्रद्रावोद्रावसन्द्रावसन्दावाविद्रवोद्रव । अपक्रमोपयानम्बेति ॥ सन्द्रवणम् । द्रुगतौ । समियुद्रुदुवद्भूतिघञ् ॥

सन्धा । स्त्री॰ स्थितौ ॥ प्रतिज्ञायाम ॥ सन्धानि ॥ सन्धानम्॰ अनया । डुधाञ॰ । आतश्चोपसर्गेकृत्यङ् ॥

सन्धाता । पु॰ शौहरी ॥ कर्मफले . पुरुषानसन्दधाति । डुधाञ॰ । तृच् । सन्धत्तसंयोजयतिकर्मफलैः पुरुषानिवा ॥ त्रि॰ सन्धानकर्त्तरि ॥

सन्धानम् । न॰ अभिषवे । सुराकरणे । सुरोत्पत्तिप्रकारे । मद्यसु आवना॰ इ॰ भा॰ ॥ सङ्घट्टने । मिथोऽवयवसंयोजने । जोड जोडना॰ इ॰ भा॰ ॥ सन्धीयते । डुधाञ॰ । ल्युट् ॥ काञ्जिके ॥ मदिरायाम ॥ अक्षरेशे ॥ सौराष्ट्रे ॥ धनुषिशरयोजने ॥ यथा । तदाशुकृतसन्धानप्रतिसंहर सायकम् । आर्त्तत्राणायवः शस्त्रं नप्रहर्त्तुमनागसि ॥

सन्धानित । त्रि॰ सन्धानविशिष्टे । सङ्घट्टिते ॥ कृतच ॥

सन्धानी । स्त्री॰ स्वर्णरूप्यान्यसन्धानि । कुप्यशालायाम् ॥ सन्धाने । सन्धिकायाम् ॥

सन्धार्य्य । त्रि॰ अनुष्ठेये ॥

सन्धि । पु॰ राज्ञांषड्गुणान्तर्गतगुणविशेषे । स्वर्णादिदानेनबन्ध्वादिभिः प्रीत्युत्पादनात्मैकीकरणे । पणबन्धेनैकार्थ्ये । परिविजिगीषोर्व्यवस्थाकरणरूपे॰ ऐक्यसन्धौ ॥ उभयोर्मेलने ॥ यथा । शत्रोर्दृधिपरिज्ञायचयस्यनिरीक्ष्यच । स्वामिनेकथयेत्सन्धिमन्त्री हितकरप्रभो ॥ तथाचोक्तंरामा

चसंयुता ॥ अपिच । अष्टम्यास
धिवेलेषुसकालपरिजनैः पूजयेतस
त्वभावैरिति ॥
सधिवध । पु॰ भूमिचम्पके ॥
सधिवधनम् । न॰ शिरायाम ॥
सधिला । स्त्री॰ सुरङ्गायाम् । गू
ढमार्गे । सुरङ्ग॰ क॰ भा॰ प्र॰
॥ नद्याम् ॥ मन्दिरे । ओक
सि ॥
सधिवल्ली । स्त्री॰ चिसन्धिपुष्पे ॥
सधिवेला । स्त्री॰ कालविशेषे ।
अहोरात्रादिमेलनकालरूपे ॥
सधिहारक । पु॰ कुम्भिले । स
धिचौरे ॥
सधुक्षित । चि॰ प्रदीप्ते ॥
सन्ध्यम् । न॰ स्वप्नस्थाने ॥ सध्य
स्वप्नस्थानमितिवेददर्शनात् ॥
सन्ध्या । स्त्री॰ पितृप्रसाम् ॥ नदी
विशेषे ॥ युगसन्धौ ॥ चिन्तायाम्
समये ॥ सीम्नि ॥ सधाने ॥ कुसु
मान्तरे ॥ दुर्गानाम ॥ अहोरात्र
सधौ ॥ यथा । अहोरात्रस्यय
सधिः सूर्यनक्षत्रवर्जितः । सा
तुसध्यासमाख्याता मुनिभिस्तत्वद
र्शिभिरिति ॥ कालभार्येयम् । य
थाकालस्यतिस्रोभार्याससध्यारात्रि
दिनानिच । याभिर्विनाविधात्राच
सङ्ख्यातुं नशक्यतइति ॥ सध्या
रात्रिर्दिनानामपिकालाधीनत्वात्
स्त्रीसहस्रत्वात्स्त्रीत्वम् ॥ प्रातर्मध्याह्न
सायाह्नरूपकालविशेषे ॥ त्रिकालवि
हितेकर्मविशेषे ॥ अत्रोक्तमहानिर्वाण
तन्त्रे । सध्यात्वैकालिकीकार्यावैदि
कीतान्त्रिकीक्रमात् । उपासनाया
मेदेनपूजाकुर्याद्यथाविधि ॥ ब्रह्म
मन्त्रोपासकानागायत्रीजपनात्प्रि
ये । स्नानाद्वस्त्रतिलकाच्च सध्या
भवतिवैदिकी ॥ अर्घ्यपात्रेदिकी
सध्यासूर्यौपस्थानपूर्वकम् । अ
र्घ्यं दानदिगीशायगायत्रीजपनतथा
॥ अष्टोत्तरसहस्रं वाशतवाद्दशधा
पिवा । जपानांनियमोभद्रे सर्व
त्राह्निककर्मणि ॥ शूद्रसामान्य
जातीनामधिकारोस्तिकेवलम् ॥
आगमोक्तविधौदेविसर्वसिद्धिस्ततोभ
वेत् ॥ प्रातः सूर्योदय कालो
मध्याह्नस्तदनन्तरम् । सायसूर्या
स्तसमयस्त्रिकालानामयक्रम
। इति ॥ तत्काले॰ उपास्या॰
अपिदेवता॰ सध्या । तथाचयाज्ञ
वल्क्यः । सधौ सध्यामुपासीत
नास्तगेनोद्गतेरवाविति ॥ उपासने
पक्रमश्चोक्तस्तत्र । प्रातः सध्यां
सनक्षत्रामुपासीतयथाविधि । सा
दित्यांपश्चिमांसध्यामर्द्धास्तमितभा
स्करामिति ॥ गायत्रीमभ्यसेत्ताव
द्यावदादित्यदर्शनमेतत्त्वनुदितहो
मीतरविषयम् । सन्ध्याकर्मान

समाप्तिकाल आह । अपक्रामीतसा
विर्भीप्रत्यगातारकोदयात् । सन्ध्या
प्राक् प्रातरेव हितिष्ठेदासूर्यदर्श
नात् ॥ प्रत्यक् पश्चिमाभिमुख ।
प्राक् पूर्वाभिमुख । आसीतेति
साय जपेआस ततीयम् । तिष्ठे
दितप्रातर्जपेअर्हत्वार्थम् , मध्या
ह्नसन्ध्याजपेप्युर्ध्वतैव ॥ सम्यग् ध्या
यन्त्यस्याम् । ध्यैचिन्तायाम , आ
तश्चोपसर्गेकङ् ॥ यद्वा । सन्द
धाति । डुधाञ् । अघ्न्यादित्वाद्य
क् । आतोलोप । तीर्थविशेषे ।

सन्ध्यांश । पु॰ युगसन्धौ । पश्चात्य
विवरस्य युगे ॥

सन्ध्याकाल । पुं॰ मुहूर्तमात्रे ॥ स
न्ध्याकालेप्रणवव्याहृतिद्वयोपेतांसा
वित्रींमाद्यादिजपेत् । सन्ध्या
या काल ॥ आहार मैथुन निद्रां
सन्ध्याकालेविवर्जयेत । कर्मचा
ध्ययनञ्चनितथा दानप्रतिग्रही ॥

सन्ध्याचल । पु॰ शैलविशेषे । स
न्ध्याश्रित कृतवान्॰ तदयमा
दिघे सुत । अत सन्ध्याचल
नामतस्यगाय तिदैवता ॥ सवद
विचार्याकाङ्क्षांवीभवाऽऽस्यशैला
दैशान्यांचली ॥

सन्ध्यानाटी । पु॰ शम्भौ । शिवे ॥

सन्ध्य पुष्पी । स्त्री॰ जात्याम् । माल
त्याम । सुमनायाम् ॥

सन्ध्याबल । पु॰ राक्षसे ॥

सन्ध्याबलि । पु॰ शिवालयेल स्पृष्ट
वृषे ॥ येशिवायतनेतस्युष्टास्ते सन्ध्या
बलयोवृषा ॥

सन्ध्यभ्रम् । न॰ स्वर्णगैरिके ॥ सान्ध्य
मेघे ॥

सन्ध्याराग । पु॰ लोहिते । न॰ सि
न्दूरे ॥

सन्ध्याराम । पु॰ विधातरि ॥

सन्ध्यालक्षणम । न॰ सन्ध्यास्वरूपे ॥
यथा । अर्द्धास्तमितानुदितात्सूर्या
दस्पष्टभ नभोयावत् । तावत्सन्ध्या
कालश्चिह्नैरेतै फल वाच्यम् ॥
चिह्नानिफलानिच॰ वाराहीसंहि
तायामद्रष्टव्यानि ॥

सन्ध्योपासनम् । न॰ स धयायाब्रह्म
णोऽभिन्नायागायत्र्याध्याने ॥ यथा
। अभिन्नांप्रतपद्येतगायत्रीब्रह्मणा
सह । सोहमस्मीत्युपासीतविधि
नायेनकेनचिदितिव्यास ॥ सन्ध्य
या सन्ध्याकालाधिष्ठात्र्या गायत्री
देव्याउपासन ध्यानम् ॥ यथा ।
ब्रह्मणोपासितासन्ध्याविष्णुनाशङ्क
रेणच । कस्तानोपासयेद्दीनसिद्धि
कामोद्विजोत्तमइतियाज्ञवल्क्येन
देवीस्वं नकीर्तनात्सन्ध्यारूपाया-
देव्या प्राणायामादिनोपासनम्
राघवभिन्नय । यथा । स धृ
तिप्राणायामादिकर्मनामउपासन

संनिधानम् । डुधाञ् । उपसर्गौ . क्तिः ॥

सन्निपतनम् । न॰ सम्यङ्निपाते ॥

सन्निपात । पुं॰ सङ्गमे । मेलने ॥ तालविशेषे ॥ यथा । एकएवगुरुर्यत्र सन्निपात स उच्यतइति ॥ त्रिदोषजनितव्याधौ ॥ यथा । द्वित्र्येकोल्बणैः षट्स्युर्हीनमध्याधिकैश्च षट् । समैश्चैकोविकारास्ते सन्निपातास्त्रयोदश॰ इतिचरकोक्त्रयोदशसन्निपाताउक्ताः । तेयथा वातोल्बण १ । पित्तोल्बण २ । कफोल्बण ३ । वातपित्तोल्बण ४ । वातश्लेष्मोल्बण ५ । पित्तश्लेष्मोल्बण ६ । एवंषट् । अधिकवातोमध्यपित्तोहीनकफः १ । अधिकवातोमध्यकफोहीनपित्त . २ अधिकपित्तोमध्यवातोहीनकफ . ३ । अधिकपित्तोमध्यकफोहीनवातः ४ । अधिककफोमध्यवातोहीनपित्त ५ । अधिककफोमध्यपित्तोहीनवातश्चेतिषट् ६ । समैर्वातपित्तकफैश्चत्युल्बणएक १ । एवंत्रयोदशसन्निपाताः ॥ सन्निपतनम् । पत्लृ॰ । घञ् ॥ समूहे ॥

संनिपातज्वरः । पुं॰ त्रिदोषज्वरे ॥ त्रिदोषजनकैर्वातपित्तश्लेष्मभिर्गदाः । वह्निनिरस्यकोष्ठाग्निरसगा ज्वरकारिणः ॥ अत्राह । संनिपातभ्यकालश्चकश्चिद्दोनविद्यते । चिकित्सकोजयेद्यस्तु तस्मात्कोस्ति प्रतापवान् ॥ त्रिदोषाजगरग्रस्तमोचयेद्यस्तुवैद्यराट् । आत्मापितस्य दातव्यः किंपुनः कनकादयइति लोलिम्बराज ॥

सन्निपातनुत् ।
सन्निपातरिपु । पु॰ ) नेपालनिम्बे । तृणनिम्बे । ज्वरान्तके ॥

संनिबद्ध । त्रि॰ संयोजिते । सम्यग्बन्धनयुक्ते ॥ संनिपूर्वाद्बधेः क्तः ॥

सन्निभ । त्रि॰ सदृशे ॥ सन्निभाति । भा॰ । आतश्चोपसर्गइतिकः ॥

सन्निरोध । पु॰ क्षये ॥

सन्निवाय । पु॰ समुदाये ॥

सन्निविष्ट । त्रि॰ स्थिते ॥ उपविष्टे ॥

सन्निविष्टोद्गम । पु॰ उपविष्टस्याधिभावे ॥

संनिवृत्त । त्रि॰ प्रत्यागते ॥

सन्निवृत्तिः । स्त्री॰ सम्यङ्निवर्त्तने ॥

संनिवेश . । पु॰ पुरादौगृहादिरचनापरिच्छिन्नप्रदेशे । निकर्षणे ॥ पुरादेर्बहिर्विहारभूमौ ॥ नगरादिबहिः स्वैरविहारार्थाभूमिषु । तत्रद्वयं निगदितं सन्निवेशो निकर्षणमिति शब्दरत्नावली । सन्निविशन्तेऽत्र । विश॰ । हलश्चेतिघञ्

एतेषां सर्ववर्णानामाश्रमौ द्वौ महेश्वरि । तेषामाचारधर्मांश्च शृणुष्वावहिता मिते ॥ पुरैव कथितं तावत् कालसम्बन्धचेष्टितम् । तप:स्वाध्यायहीनानां नृणामल्पायुषामपि । क्लेशप्रयासाशक्तानां कुतो देहपरिश्रम । ब्रह्मचर्याश्रमो नास्ति वानप्रस्थोपि न प्रिये । गार्हस्थो भैक्षुकश्चैव आश्रमौ द्वौ कलौयुगे ॥ गृहस्थस्य क्रिया: सर्वा आगमोक्ता: कलौ शिवे । नान्यमार्गैः क्रियासिद्धि कदापि गृहमेधिनाम् ॥ भैक्षुकेप्याश्रमे देवि वेदोक्तं दण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञे यतस्तच्छ्रौतसंस्कृति ॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेव कथितं भद्रे संन्यासग्रहणं कलौ । विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ उभयत्राश्रमे देवि सर्वेषामधिकारिता सर्वेषामेव संस्कारा: कर्माणि शैववर्त्मना । विप्राणामितरेषाञ्च कर्मलिङ्गं पृथक् पृथक् । जातमात्रो गृहस्थ: स्यात् संस्कारादाश्रमी भवेत् । गार्हस्थ्ये प्रथमं कुर्यात् यथाविधि महेश्वरि ॥ तत्त्वज्ञाने समुत्पन्ने वैराग्यं जायते यदा । तदा सर्वं परित्यज्य संन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्य वैराग्ये धनदारांश्च यौवने । प्रौढे धर्म्याणि कर्माणि चतुर्थे



प्रव्रजेत् सुधी: ॥ मातरं पितरं वृद्धं भार्याञ्चैव पतिव्रताम् ॥ शिशुञ्च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥ मातॄः पितॄन् शिशून् दारान् स्वजनान् बान्धवानपि । य: प्रव्रजति हित्वैतान् स महापातकी भवेत् ॥ मातृहा पितृहा स स्यात् स्त्रीवधी ब्रह्मघातक: । असन्तर्प्य स्वपित्रादीन् यो गच्छेद् भिक्षुकाश्रमे ॥ ब्राह्मणो विप्रभिन्नश्च सत्त्ववर्णाश्च सत्क्रिया: । शैवेन वर्त्मना कुर्यादेष धर्म्म: कलौयुगे । इति ॥ अपिच । अवधूताश्रमे देवि कलौ संन्यास उच्यते । इत्युपक्रम्य । ब्रह्मज्ञाने समुत्पन्ने विरते सर्वकर्मणि । अध्यात्मविद्यानिपुण: संन्यासाश्रममाश्रयेत् ॥ विहाय वृद्धौ पितरौ शिशुं भार्यां पतिव्रताम् । त्यक्त्वाऽसमर्थान् बन्धूंश्च प्रव्रजन् नारकी भवेत् ॥ ब्राह्मण: क्षत्रियो वैश्य: शूद्र: सामान्य एव च । कुलावधूतसंस्कारे पञ्चानामधिकारितेति ॥ संन्यस्त न्यास संन्यास । सम्यग् वान्तविषादिवत् लौकदयभोगस्य न्यासस्त्याग: संन्यास इत्यर्थ: । यथ कुमारसम्भवे कालिदास: । संन्यासं श्रुतियुगलेपये शिखण्डे रुचिरसीन्दूपूजितञ्च । नीरिक्तस्थिरसदनेऽपवर्गसिद्धै सोमेज्य

वसेत् पर्वतमूर्द्धसु प्रौढो योऽध्यानधारणात् । सारात् सारं विजानाति पर्वतः परिकीर्त्तितः ॥ ६ ॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रहः । मर्यादां नलङ्घतसागरः परिकीर्त्तितः ॥ ७ ॥ स्वरज्ञानवशो नित्यं स्वरवादी कवीश्वरः । स सारः सागरे सारो भिन्नो योऽभिसरस्तु तौ ॥ ८ ॥ विद्याभारेण सम्पूर्णः सर्वभारं परित्यजेत् । दुःखभारं न जानाति भारती परिकीर्त्तितः ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः । परब्रह्मरतो नित्यं पुरी नामा स उच्यते ॥ १० ॥ इति शङ्करविजये श्रीविद्यारण्यस्वामिनः ॥ अस्य धर्माचरणादिकं मनुस्मृतौ ब्रह्मवैवर्त्तं गरुडकूर्म पुराणादिषु द्रष्टव्यम् । विधानन्तु श्रीमहानिर्वाणतन्त्रे श्रीसदाशिवेनोक्तं ततस्ततोऽवगन्तव्यम् ॥ संन्यासोऽस्यास्ति । अतइनि ॥ अस्यान्त्यविधिर्माहयोनक्ष । सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च । न तस्य दहनं कार्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिलेभिक्षो कलेवरम् । प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत् इति ॥

सन्मुख । त्रि० अभिमुखे ॥

सपक्ष । त्रि० निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये । यथा धूमवत्त्वे महानसम् ॥ अनुकूले ॥ समानः पक्षः इतिविग्रहे समानस्य तियोगविभागात् सादेशः ॥ यद्वा । सप्तार्थ सहार्थवचनः । तेनात्मपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्य इति सपक्ष ॥

सपण । पुं० ग्लहे ॥ पणेन सह वर्त्तमाने व्यवहारविशेषे ॥ यथा यद्यहमपराजितो भवामि तदा यत दास्यामीति ॥

सपत्नाकरणम् । न० अत्यन्तपीडने । सपत्नि निष्पतादति व्यथन इति डाच् ॥

सपत्नाकृत । पुं० हतमृगादौ ॥ त्रि० अत्यन्तपीडिते ॥

सपत्नाकृति । स्त्री० अत्यन्तदुःखे । निष्पत्राकृतौ ॥

सपत्न । पु० शत्रौ । सपत्नोऽरिः ॥ व्यन् सपत्नइति निर्देशात् साधुः । इवार्थे च प्रत्ययो वा ।

सपत्नारि । पु० वेणुश्च ॥ शत्रौ शत्रौ ॥ सपत्नस्यारिः ॥

सपत्नी । स्त्री० समानपतिकायाम् ॥ समानः एकः पतिर्यस्याः इति विग्रहे सपत्न्यादिषु समानस्य सभावो निपात्यते । नित्यं सपत्न्यादिष्विति ङीप् ॥

सपत्नीक । पु० पत्नीसहिते ॥ सह पत्न्या वर्त्तते इति तथा नद्यृतश्चेति

तेनमातामहादीनामेकपिण्डसम्बन्धे पिनसपिण्डता ॥ सपिण्डस्यभाव . । तल् । टाप् ॥

सपिण्डीकरणम् । न॰ श्राद्धविशेषे । प्रेतपिण्डस्य पितृपिण्डेनसहमिश्री करणे ॥ तच्चपूर्णेसंवत्सरेसपि ण्डीकरणमितिमुख्यकाल्प • तदश क्तौनवमेमास तदशक्तौषष्ठेमास . तत्राप्यसक्तौत्रिपक्ष तथाप्यशक्ता वथौचापगमेप्रथममासस्यद्वादशभि र्दिनैद्वादशमासिकानिश्राडानिनि वर्त्यत्रयोदशाह सपिण्डीकरणका ल ॥ सपिण्डीकरणविषयेकूर्मपु राणंयथा । सपिण्डीकरण प्रोक्त पू र्णेसम्वत्सरेपुन । कुर्याच्चत्वारिपा त्राणिप्रेतादीनांद्विजोत्तमा ॥ प्रेत र्थपितृपात्रेषुपात्रमासेचयेत्त त । येसमानाइतिद्वाभ्यांपिण्डा नप्येवमेवहि ॥ सपिण्डीकरणंश्रा द्वेदेवपूर्वंविधीयते । पितृनावाह येदत्रपृथक्पिण्डञ्चनिर्दिशेत् ॥ येस पिण्डीकृता प्रेतानतेषांस्यात्पृथक्क्रिया । यस्तुकुर्यात्पृथक्पिण्ड पितृ हासोपिजायते • इति ॥

सपीतक । पु॰ राजकोषातक्याम् ॥

सपीति । स्त्री॰ आत्मीयेनजनेनसह मिलित्वैककालकृतेपाने । तुल्यपा ने । पानम । पापानेस्त्रियांक्तिन् । घुमास्थेतीत्वम् । समानापीति । समानस्यच्छन्दसीतिसभाव । स हपीतिर्वा । सहस्यस सत्रार्था ॥

सपीतिका । स्त्री॰ हस्तिघोषायाम् ॥

सपुत्र : । त्रि॰ पुत्रेणसहवर्त्तमाने ॥

सप्तक । पुं॰ सप्तसङ्ख्यायाम् ॥ त्रि॰ सप्तसङ्ख्याविशिष्टे ॥ सप्त भि क्रीतेवस्तुनि ॥ सङ्ख्यायाअ तिशदन्ताया । कन्नित्याहीयेऽर्थे पुकन् ॥

सप्तकी । स्त्री॰ मेखलायाम् । काञ्च्या म् । कटिभूषणे ॥ सपति । षप समवाये । बाहुलकात्तन् । स्वार्थे कन् ॥ यद्वा । सप्तभिरनेकाभि किङ्किणीभिर्वा॰ सप्तस्वरान्वा॰ का यति । कैशब्दे । आतोनुपसर्गे क : । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न॰ तीर्थविशेषे ॥

सप्तगोदावरम् । न॰ सप्तानांगोदावरी णांसमाहारे ॥ तीर्थविशेषे ॥

सप्तच्छद । पु॰ सप्तपर्णवृक्षे ॥ का ण्डेकाण्डेसप्तच्छदायस्य । सङ्ख्याशब्दस्यवृत्तिविषयेवीप्सार्थत्व म् ॥ न॰ तत्पुष्पे ॥

सप्तजिह्व । पु॰ अनले । अग्नौ ॥ सप्त कालयादयोजिह्वाआकृतियस्याथवा यस्य । तायथा । कालीकराली चमनोजवाचसुलोहिताचयासुधूम्र वर्णा । स्फुलिङ्गिनीविश्वरुचीचदे वीलेलायमानेतिचसप्तजिह्वा इति

याम् ॥

सप्तपदः । पु॰ सप्तच्छदे ॥ मुद्गरवृक्षे ॥ सप्तसप्तपदा न्यस्य ॥

सप्तपदार्थवाद । पुं॰ आर्हतानांवादे ॥ यथा । जीवाजीवात्मकं विश्वं॰ चेतनं स्वशरीरवत् । परिणामावयवानजीवं षड्विधं स्मृतं ॥ महीधरादिकं स्यात्पञ्चधा चास्रवादिकं । आस्रवं संवरो निर्जरो बन्धो मोक्ष एव च ॥ इन्द्रियाख्यविवेकादि केशोलुञ्चादिभिस्तपः । जन्मान्यूर्ध्वगतिश्चेति पञ्चानामर्थ उच्यते । स्यादस्तीत्यादि ना सप्तभङ्गीन्यायेन वादिना । सप्तैवक्रमशोऽपाठ्यमतयः साधयेत्सुधीरिति ॥

सप्तपदी । स्त्री॰ विवाहाङ्गसप्तपदीगमने । सप्तानां पदानां समाहारः । द्विगोरिति ङीप् ॥

सप्तपर्ण पु॰ छतवनीतिख्याते वृक्षे । पर्यायास्तु । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इति ॥ सप्तपर्णो व्रणश्लेष्मवातकुष्ठासृजन्तुजित् ॥ दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सर इति गुणाः ॥ काण्डे काण्डे सप्त सप्त पर्णान्यस्य । क्वचित्सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वमिति कैयटादिव्याख्यानात् ॥

न॰ मिष्टान्नविशेषे ॥ यथा । द्राक्षादाडिमखर्जूरमुदितास्य सप्तकं रम् । लाजचूर्णं समध्वाज्यसप्तपर्णमुदाहृतम् ॥

सप्तपर्णी । स्त्री॰ लज्जालौ ॥

सप्तपलाश । पु॰ सप्तपर्णद्रुमे ॥ सप्त सप्त पलाशानि पत्राणि पर्वसु यस्य ॥ न॰ सप्तपर्णपुष्पे ॥

सप्तपातालम् । न॰ सप्तसङ्ख्याकाधोभुवने ॥ यथा । अतलं वितलञ्चैव नितलञ्च गभस्तिमत् । महाख्यं सुतलञ्चाग्र्यं पातालं सप्तमं विदुरिति ॥ नामान्तराण्यपि यथा । आभासं परतालाख्यं वितलं च गभस्तिमत् । महातलं रसाकञ्च पातालं सप्तमं भुवि ॥ इति ॥ एतेषामधिपा यथा । सप्तस्वेतेषु दैत्येन्द्रभुजङ्गमदानवाः । सप्त सप्त समाख्यातास्तानप्यथ निबोध मे ॥ दैत्या शङ्कुश्रुतिः पूर्वं प्रह्लादः शिशुपालकः । कर्म्भुको हिरण्याक्षो दृष्ट्रभीर्वलिस्तथा ॥ काद्रवेयाः कुटिलको वासुकिः कम्बलस्तथा । कर्कोटकोऽथ कालाङ्गो दुर्दर्शस्तक्षकस्तथा ॥ विकटाक्षो हिताक्षश्च यमाख्यो विकटाननः करालो भीमनिह्लादः पिङ्गलश्चेति राक्षसाः इति ॥

सप्तपुत्रसू । स्त्री॰ सप्तवत्सरायाम् । सप्तपुत्रायाम ॥

चैतद्धार्यंतेभुवनत्रयम्॥सख्यांत्रयमुपासोनागायत्रीजपततपरा । तस्मिन्सोकेचसन्ध्येतेब्राह्मणाप्रह्लादिनहृतिपाद्मे ११९ध्याय ॥

सप्तला । स्त्री॰ नवमालिकायाम ॥

सप्तलाति । सा॰ । भातीनुपितिका ॥ चर्मकषायाम । सातलायाम् ॥ गुञ्जायाम् ॥ पाटलायाम् ॥

सप्तवाहन । पु॰ आदित्ये ॥ सप्ताश्वावाहनान्यस्य ॥ सप्तनामकएकोश्वोवाहनमस्यवा ॥ एकोश्वोवहतिसप्तनामेतिश्रुते ॥ वहति॰ आदित्यरथम ॥

सप्तशती । स्त्री॰ सप्तशतिकायाम् ॥ सप्तशतमन्त्रात्मकदेवीमाहात्म्ये ॥ गीतायाम् ॥ सप्तानांशतानांसमाहार । द्विगोरितिङीप् ॥

सप्तशलाका । पु॰ विवाहेपयोगिचक्रविशेषे ॥ यथा । ऊर्ध्वंगा सप्तरेखास्तुतिर्यक्सप्तविलिख्यच क्रत्तिकादिचतु सप्तकक्षाग्निता सुसलिखेत् ॥ चन्द्ररेखास्थनक्षत्र यद्यस्थितिचेसदा । वेध सप्तशलाकाख्योविवाहेतवर्ज्यंयेत् ॥ यद्रेखायांचन्द्रस्तिष्ठतितत्साचन्द्ररेखा ॥ तत्रस्थितनक्षत्रंचतस्मिन्यदिसूर्यादीनामन्यतमोग्रह कश्चिद्यदास्थितस्तदासप्तशलाकाख्योवेध ॥ स्यात् ॥ तत्रविवाहवर्ज्यंयेदिति ॥ यथा । अश्वीसप्तशलाकभिन्न यो पैरपापैरथवाविवाहे । रक्ताम्बरैनेत्रतुरोदमानाश्मशानभूमिप्रमदाप्रयातीतिफल ॥

सप्तशिरा । स्त्री॰ नागवल्ल्याम् ॥ ताम्बूल्याम् ॥

सप्तशृङ्ग । पु॰ हिमाचले ॥ सप्तशृङ्गवति ॥ दक्षिणदेशप्रसिद्धेगिरिविशेषे ॥ तत्रप्रसिद्धेम्बिकास्थाने ॥

सप्तसप्ति । पु॰ दिवाकरे । सूर्ये ॥ सप्तगायत्र्यादीनिछन्दांसि॰ सप्तयोऽश्वा॰ यस्य ॥ यथा । इयासप्तछन्दांसिवैयानामानिमेऽश्वमायत्रीचबृहत्युष्णिग्जगतीत्रिष्टुवेव । अनुष्टुप्पङ्क्तिरेतानिच्छन्दांसिहरयोहरेरितिविष्णुपुराणम् । सप्ताश्वरूपाश्छन्दांसिवहन्तेवातरंहसइतिमत्स्यपुराणम् ॥

सप्तसंस्थ । स्त्री॰ बहुवचनान्त॰ सप्तप्राणानांसप्तसुविषयेषु ॥ विषयेष्विंद्रियभ्यसंप्राणा ॥

सप्तसागर । पु॰ महादानविशेषे ॥

सप्तसारस्वतम् । न॰ तीर्थविशेषे ॥

सप्तसू । स्त्री॰ सुबहुसन्तानायाम् । सप्तपुत्रप्रसूतायाम् ॥

सप्तसोत । न॰ तीर्थप्रभेदे । दक्षिणेनहिमवतकपौवाराश्रमे॥ यथा

समामक्षेतियोगविभागात्• सभा साहूर्तिनिर्दैशात्समासस्यादेश । पद्यालिखण यथा । यस्मिन् देशे निषीदन्तिविप्रावेदविदस्त्रय रा ज्ञश्चाधिकृतोविद्वान् ब्रह्मणस्तांसभां विदुरितिमनु ॥ चत्वारोवेदधर्म ज्ञा · पर्षत् त्रैविद्यमेववा । साब्रूते स सधर्मःस्यादेकोवाध्यात्मवित्तम • इतियाज्ञवल्क्य ॥ विद्वत्सु ह तो • भा प्रकाशस्तथासहवसंती• त्यत्र ॥ ग्रामनगरादीनियत जनसमूहस्थाने ॥ समाजिके । स भ्ये ॥ द्यूते ॥ मन्दिरे । राज्ञोऽमा त्यादिदर्शनगृहे ॥ अनुविधेयस्येय' सभ्यपुरुषवतीजनतासभा । अनु विधेयोराजादि । • स्यैयाम् सभ्य स्य ॥

सभाग । वि• सभाक्ते ॥ अन्ये . पू ज्यमाने ॥ भजन भाग ' • पूजा• सेवा । सहभागेनवर्त्तमान ॥ भागसहिते ॥

सभाजन : । पु • सभ्ये ॥ न• गमना गमनादिसमयेसुहृदादेरालिङ्गनादि व्यमप्रवासागतादिमानन्दोत्पादने । आनन्दने । आप्रच्छने ॥ सभाज प्रीतिसेवनयो । ल्युट् ॥

समाजित . । वि• पूजिते ॥

सभाज्य : । वि• पूज्ये । भजनीये ॥

सभापति : । पुं• सभाधिपतौ ॥ यथा । श्रीमद्राम्पुरेसाधारना मासभापतिरिति ॥

सभारचना । स्त्री• राजमन्दिरनिर्मितौ ॥ यथा । चापाकृति न्यस्तनृपास नोद्दरा सती तिस्रोर्यां नृपगौरवो चिता। निखातवीरैर्विद्धीत म ल्लिका नरैरनूचानरसामरै सभा ॥

सभासत् •द् । पुं• सभास्तारे । सभ्ये । सामाजिके । सभासद्गनोऽह । श्रु ताध्ययनसम्पन्ना कुलीना सत्य वादिन । राज्ञासभासद कार्या शत्रौमित्रेचयेसमा इतियाज्ञवल्क्य ॥ श्रुताध्ययनसम्पन्ना • धर्म शास्त्रज्ञा । कुलीना • साङ्कर्य दोषशून्यमातापितृवंशपरम्पराका ॥ सभायामधिकृतत्वेनलोकानां धर्माधर्मविवेकार्थंसीदन्तिउपवि शन्ति । सद्लृ• । सत्सूद्विषेति क्विप् ॥ सभास्त्रिवाक सामास्य . सन्नास्तणपुरोहित । ससभ्य प्रे क्षकोराजास्वर्गेतिष्ठतिधर्मत : ॥ तत्रतान्यथाचनियुक्ता • सभ्यास्तु नियुक्तादृतिभेद । तत्रनियुक्ता नांयथावस्थितार्थकथनेपियदिराजा न्यथाकरोतितदाऽसौनिवारणीयो ऽन्यथादोष । यथाहकात्यायन । अन्यायेनापितयान्तयेनुयान्तिसभा सद । तेपितद्भागिनस्तस्माद्बोध

ङ्गुरीयकौम्य • पुरुषोङ्गनाच• योजोऽयुग्म विषम' समश्च । च तुरस्त्रदूरात्मकनामधेयानिपादयो मौक्तमस्य प्रदिष्टा ॥ मानस्यप्र कारविशेषे ॥ सतुयद्रागोतवाद्यये स्तालेगानकर्णु ष्वपादादिचाल नस्य• एकद्रासमभावेनपततितदा भवतीतिसङ्गीतशास्त्रम् ॥

समकाक . ' त्रि• तुल्ये ' समे ॥

समकन्या । स्त्री• विवाहोपयुक्तायाम् ॥ इतिधनञ्जय ॥

समकोल । पु॰ अम्भसे । द्विरस ने । सर्पे ॥ ङ्• त्रि• श्लेष ॥

समक्षम् । अ• अक्ष्णो समीपे ॥ अ क्ष्णोसमीप योग्य वा । अव्यय विभ क्तीतिसमीपे• यथार्थे वाऽव्ययीभा व । प्रतिपरेतिटच ॥

समगन्धक : । पुं• कृत्रधूपे ॥

समगन्धिकम् । न• उशीरे ॥

समग्र : । त्रि• समस्तेन । सर्वस्मि न् । विश्वस्मिन् । अशेषे । सम्पू र्णे ॥ सकलमग्रमस्य ॥ सम ग्रसते वा । अन्येभ्योपीतिग्रसेर्ड . ॥ शो भनाग्रके ॥ सहायेणकेनभिद्यतेय तृतव ॥

समङ्ग । पुं• मूषके ॥ सम्यक्प्रका रेणछिद्रादिकरणेन• अङ्गयति• चिङ्गयतिवस्त्रादिकम् । आङ्• । अच ॥

समङ्गा । स्त्री• मञ्जीठड्• प्र• ओषधौ । पथायान्तु । मञ्जिष्ठायांविकसाजि ह्वासमङ्गाकालमेषिका । मण्डूकप र्णीभण्डीरीभण्डीयोजनवल्ल्यपी ति ॥ लज्जालौ । नमस्कार्याम् । गण्डकायाम् ॥ समक्तिराङ्गति । अगि• । पचाद्यच् ॥

समचित्त . । त्रि• रागविषादशून्यम नसि । आत्मजिति ॥ सम चित्त य स्यस . ॥ एकविषयकान्त . करण स्तो

समज . । पुं• पशूनावृन्दे ॥ स मीय तेऽस्मात । अज• । समुदोरज प शुष्विन्यप् ॥ मूर्खसहतौ ॥ न• विपिने ॥

समज्ञा । स्त्री• यशसि । कीर्त्तौ ॥ स म्यक् सर्वैर्ज्ञायते । ज्ञा• । घञर्थे क ॥

समज्या । स्त्री• परिषदि । सभायाम् ॥ समजन्त्यस्याम् । अज• । स मा ज्यासमजेतिक्यप् । अजी . व्यपिवी भावोन ॥

समञ्जसम् । न• उचिते । न्याये ॥ सम्यगञ्जोऽच । अचप्रत्यन्वविश्यवा ऽजितियोगविभागादच् ॥ यथा । स कलसम्नसावत्वमच । कृष्णेनपुंस कोड्डतिङ्गलत्वम् । त्रि• समीचीने ॥ अभ्यस्ते ॥ अविरुद्धे । युक्ते ॥ न्याय्ये । सत्त्ववधाधि ॥

सम्यगन्वय ॥
समन्वारम्भणम् । न॰ समनुगमने ॥
समन्वित । वि॰ सम्यगन्विते । संयुक्ते ॥
समन्वितलय । पुं॰ एकताले ॥ सम्यक् अन्वितो लयो नृत्यगीतवाद्यानां साम्यं यत्र सः ॥ सम्यगन्वितो यो मध्यमलयो वाद्ययस्मिन् ॥
समपद । पुं॰ रतिबन्धविशेषे ॥ यथा । योषित् पादौ स्वदिश्यापृष्ठकारा भ्यां पीडयेत् स्तनौ । यथेष्टं ताडये द्योनिं बन्धः समपदः स्मृतः ॥ न॰ युद्धकाले वन्विनां पादन्यासविशेषे । धन्विनां पादयोस्तुल्यरूपतया धारणे ॥ धन्विनां स्थाने ॥
समपर्य्यासनम् । न॰ परिवर्त्तने ॥
समपादम् । न॰ धन्विनां पादयोस्तुल्यरूपतया धारणे ॥
समबुद्धि । त्रि॰ सर्वत्र रागद्वेषशून्ये ॥ क: कौद्दक् कर्म्म॰ तुल्यव्यापृतबुद्धौ ॥
समभिव्याहार : । पुं॰ सन्निधौ ।
समभिव्याहृत : । त्रि॰ सहोच्चरिते ॥ सन्निधौ ॥
समभिहार . । पुं॰ आभीक्ष्ण्ये । पौनःपुन्ये ॥ भृशार्थे ॥ समभिहरणम् । हृञ्॰ । घञ् ॥ सम्यगभिहारो वा ॥ विप्रकीर्णानां द्रव्याणां आहरणे । श्रीयोगविशेषे ।
सहोच्चारणे ॥
समभूमि । स्त्री॰ समानस्थाने । आजौ ॥
समम । अ॰ सहार्थे । साईम् । सम ॥ समति । अम॰ । अम् ॥
समय । पुं॰ काले । दिष्टे । अनेहसि ॥ सम्यगेति । इण् गतौ । पचाद्यच् ॥ आचार्य्यकाले ॥ समयेऽपि सर्वमुपकारि कृतम् । असमये कृतमुपकार्य्यपि न भवति ॥ शपथे ॥ आचारे ॥ सिद्धान्ते ॥ विधि । संविदि ॥ क्रियाकारे ॥ निर्देशे ॥ सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥ नियमे ॥ अवसरे ॥ समयनम् । समीचीनोऽयनमनेन वा । समेति वा । इण् । इगतौ वा । एरच् । पुंसो लिङ्गो वा । पचाद्यच् वा । सङ्गमे ॥
समयकार । पुं॰ सङ्केते ॥
समयज्ञ । त्रि॰ कालज्ञे ॥ समयं जानाति । ज्ञा॰ । क ॥
समयभेदी । त्रि॰ संविद् १ तिक्रमकारिणि ॥
समया । अ॰ अन्तिके । निकटे । मध्ये ॥ समेति॰ समयनं वा । इण् । आ समिण् निकषिभ्याम् ॥ कालविशेषणे ॥
समयाचार । पुं॰ समयोचिताचरणे ॥ तन्त्रविशेषे ॥

तक्रियायांमिलने । सम्बन्धविशे
षे । यथा । घटादीनांकपालादौ
द्रव्येषुगुणकर्मणो । तेषुजातेश्चस
म्बन्ध समवाय प्रकीर्त्तित ॥
अवयवावयविनो॰ गुणगुणिनो ॰
क्रियाक्रियावतो॰ जातिव्यक्त्यो॰नि
त्यद्रव्यविशेषयोश्च य सम्बन्ध स
समवायइत्यर्थ ॥ यथावा॰श्रोत्रे
णशब्दसाक्षात्कारे॰समवाय स
न्निकर्ष ॰ कर्णविवरवर्त्याकाश
स्यश्रोत्रत्वात्॰ शब्दस्याकाशगुण
त्वात ॰गुणगुणिनोश्चसमवायात् ।
सचनित्यसम्बन्ध । सचएकएव ॥
समवायते । अय॰ । घञ् ॥

समवायिकारणम् । न॰ उपादानका
रणे ॥ यत्समवेत कार्यमुत्पद्यते॰
तत्समवायिकारणम् । यथातन्त
व पटस्य॰ पटश्चस्वगतरूपादे ।
यथावा॰ परमाणुद्व्यणुकस्य॰कपा
लश्चघटस्य । सर्वत्रसमवायिकार
ण द्रव्यमेव । समवायीसत्यत्र । भू
नि । तच्चतत्कारणञ्च ॥

समवेत । त्रि॰ मिलिते । सङ्गते
॥ समवायसम्बन्धेनवृत्तौ । यथा ।
यत्समवेत कार्यंभवतिज्ञेयन्तुसम
वायिजनकंतत् ॥

समवेतसमवाय । पु॰ सन्निकर्षवि
शेषे ॥ यथ । शब्दत्वसाक्षात्का
रेसमवेतसमवाय सन्निकर्ष ॰
श्रोत्रसमवेतेशब्दे॰ शब्दत्वस्यसम
वायात् ॥

समश्नुवान । त्रि॰ सम्यक्प्रकारेण
व्याप्तिविशिष्टे ॥

समष्टि । स्त्री॰ सामान्ये । समस्त
व्याप्तौ । यथा । समस्तत्वेन
स व्याप्ति समष्टिरितिकीर्त्यते ।
अपिच । समष्टिरीश सर्वेषांस्वा
त्मतादात्म्यवेदनात् । तदभावात्
तदन्येतुज्ञायन्तेव्यष्टिसंज्ञयेति ।
सङ्गाते ॥

समष्ठिल । पु॰ क्षुपविशेषे । भण्डी
रे । मद्याक्ते । आस्रगन्धके । कोका
ग्रे । कण्टकिफले । उपदंशे ॥
कोकुआं॰ कू॰ भा॰ ॥

समष्टिला । स्त्री॰ गण्डीरे । गण्ड
रदुवो॰ कू॰ प्र॰ शाकि ॥ सम्यग
ष्टिलाबीज यस्या . ॥

समष्ट्यज्ञानम् । न॰ सकलाज्ञाने

समष्ठिल । पु॰ समष्टिले ॥

समष्ठिला । स्त्री॰ समष्टिलायाम् ॥
समेतिष्ठति । मिथिलादयश्चेति
साधु ॥

समष्ठीला । स्त्री॰ समष्ठिलायाम् ॥

समसनम् । न॰ समासेपादानामैक्य
साधने । अनेकस्यपदस्यएकपदीभव
ने ॥ सङ्क्षेपणे ॥ असुक्षेपणे
। सम्पूर्वात्ल्युट् ॥

समसुप्ति : । स्त्री॰ कल्पान्ते । महा

सङ्गति। वैदिक्यासमाख्यया अ
ध्वर्य्यैस्तत्तत्पदार्थाङ्गत्वलौकिक्या
ध्वर्य्यैर्बाम्नितसमाख्ययेतिसङ्घप
। लक्षणे ॥

समागत । त्रि॰ सम्प्राप्ते । आग
मनाश्रये । सम्यगागमनविशिष्टे ॥

समागम । पु॰ संयोगे ॥ सम्यगा
गमने । सम्प्राप्तौ ॥

समाघात । पु॰ वधे ॥ युद्धे ।
समाहननम् । घञ् । हनलोपि
घत्वे । हिंस्ते रितिघ ।

समाचयनम् । न॰ राशीकरणे ॥

समाचरणम् । न॰ समाचारे । समा
ङ्पूर्व्वाच्चरेर्ल्युट् ॥

समाचार । पु॰ सम्यगाचरणे । व
र्णाश्रमादिधर्म्माणामाचरणे । समाच
रणम् । समाङ्चरैर्भावेघञ् ॥
व्रतचर्य्यै ।

समाज । पु॰ पशुभिन्नानां समूहे
॥ यथा॰ समाजोब्राह्मणानां॰ स
माज क्षत्रियाणाम् ॥ अनेकेषां
प्रामाणिकजनानां वासस्थाने ॥ स
भायाम् । उत्सवे सुसङ्गते । स
मीयन्तेऽत्र । अज॰ घञ् । अघञ
पोरित्युक्तेर्वीभावेन । अजिव्रज्यो
श्चेतिकुत्वनिषेधः ॥ हस्तिनि ॥
तत्त्वनिर्णयार्थं कोष ।

समाज्ञा । स्त्री॰ ख्यातौ । समाज्ञा
यते । समाङ्पूर्व्वात्ज्ञाअवबोधने॰
त्यस्मादातश्चोपसर्गेत्यङ् ॥

समादर । पु॰ सम्माने ॥

समादानम् । न॰ सङ्ग्रहे । सम्य
गीनग्रहणे ॥ सौगताह्निके । सौ
गतानांनित्यकर्म्मणि । समाङ्पा
याम ॥

समाधानम् । न॰ ब्रह्मणिमनः स्थि
रीकरणे । अवधाने । प्रणिधाने
॥ चित्तैकाग्र्यमुत्पाद्य समाधान
मितिसूत्रमिदमुक्तं ॥ निगृहीत
स्यमनसः श्रवणादौ॰ तदनुगुणविषये
च समाधिः समाधानमिति लक्ष
णमुक्तमिति ॥ श्रवणादावित्यादिग्र
हणोमननादिसङ्ग्रहार्थं । तदनुगु
णे च गुरुशुश्रूषापुस्तकसम्पादन
तद्रक्षणादि श्रवणाद्यनुगुणोविषयो
निर्दिश्यते॰ नपुनः सुखवासद्रव्या
र्जनादि तस्य प्रतिबन्धकत्वादनुकूल
त्वात्तदर्थं सठारम्भप्रतिषेधादावपि
चित्तसमाधिः कर्त्तव्य इत्युपदिश्य
ते । दण्डमाच्छादनं कौपीनं परिग्र
हेच्च । वसेदिति सन्यासकाण्डे
जितस्य दण्डकौपीनाद्यतिरिक्तस्य॰
निमाप्रतिप्रसवणात्स सङ्ग्रहानुप
पत्तेरित्यर्थः ॥ योग्ययोगसामर्थ्ये
। तत्परतायाम् । सम्यगाधानम् ॥

समाधि । पु॰ समर्थने ॥ समर्थन
मशक्ये॰ अध्यवसायोदुर्घटस्य
टनं वा ॥ नीवाके । नीवाकोवचना

भावहृतिसमो । धान्यादिसुमुख्यो
त्कर्षपूर्वकोऽसमादरहृतिसभृति
॥ नियमे । अङ्गीकारे ॥ मौनव्रत
दो । सिद्धान्ते ॥ इन्द्रियरोधे । ए
कान्तभक्तियोगे ॥ ध्याने ॥ काव्यगु
णविशेषे । अलङ्कारभेदे ॥ यथा ।
समाधि सुकरकार्यं कारणान्तरयोग
त । साधनान्तरोपकृतिस्तथा • यद्
कोऽपि नकार्यमारभमाणोभवति • ससमा
धिर्नाम । उदाहरणम् मानम
स्यानिराकर्त्तुं पादयोर्मे पतिष्यत
। उपकाराय दिष्ट्या इदमुदीर्णं घनग
र्ज्जितमिति ॥ समाधीयतेऽस्मिन्
मनोऽनेन । डुधाञ् • । उपस
र्गे घोः किरित्यधिकरणे किः ॥
कारणसामग्र्याम् ॥ ध्याने । चित्त
स्यैकतानतानिश्चलावस्थाने ॥ स
च समाधिर्द्विविध । सविकल्पको
निर्विकल्पकश्चेति । तद्विवरण स
विकल्पकनिर्विकल्पकशब्दे द्रष्टव्य
म् । ध्यानमेवार्थमात्रनिर्भासस्वरू
पशून्यमिव समाधि । सर्वथावि
जातीयप्रत्ययानन्तरितः सजातीय
प्रत्ययप्रवाह । स तु चित्तभूमिभेदे
न द्विविध । सम्प्रज्ञातोऽसम्प्रज्ञा
तश्चेति । चित्तस्य हि पञ्चभूमयो भ
वन्ति । क्षिप्त मूढ विक्षिप्तमेकाग्र
निरुद्धमिति । समाधीयतेऽस्मिन्
सर्व्वमिति व्युत्पत्त्या • समाधिरन्तः

करणमपरमात्मा वा ॥ अथ स्थूल
ध्यवस्थान समाधिरिति गीयते ॥ द्वि
विधो हि समाधिर्भवति । जयपूर्व
कोऽपवर्गकश्चेति । तत्र • तदन
न्यत्वमारम्भणशब्दादिभ्यइति •••
न • कारणव्यतिरेकेण कार्यमात्मत्वा
त • पञ्चीकृतपञ्चमहाभूतकार्य
व्यष्टिरूप • समष्टिरूपविराट्कार्यं
त्वात् • तद्व्यतिरेकेण नास्ति । त
थापि • पृथिवी • [illegible]
सगन्धाद्यवगुणा तथा समष्टिरूप
मपि पञ्चीकृतपञ्चभूतात्मकंकार्य
म् • अपञ्चीकृतपञ्चमहाभूतकार्य
त्वात् • सा च पृथिवी • गन्धेतरच
तुर्गुणाकार्यत्वात् • तद्व्यतिरि
केण नास्ति • ताश्चतुर्गुणा आपो •
गन्धरसेतरत्रिगुणात्मकतेजः का
र्यत्वात् • तद्व्यतिरेकेण नसन्ति
तदपि त्रिगुणात्मक तेजो • गन्धरस
रूपेतरद्विगुणवायुकार्यत्वात्तद्व्य
तिरेकेण नास्ति • सोऽपि द्विगुणात्म
को वायु । • शब्दमात्रगुणाकाश
कार्यत्वात् • तद्व्यतिरेकेण नास्ति
• स च शब्दगुणआकाशोऽव्याकृतमिति
परमेश्वरस्वरूपात्मकावरणकार्य
त्वात् • तद्व्यतिरेकेण नास्ति • त
दपीश्वरूपमव्यक्तमायापरिणा
मत्वात् • तद्व्यतिरेकेण नास्ति •
तदपि मायाख्यकारणमजत्वेनचैत

न्योऽध्यस्तत्वात्, तद्व्यतिरेकेणान्यस्तोऽप्यनुसन्धानेन, विद्यमानेति कार्यकारणात्मके प्रपञ्चे, चैतन्यमात्रगोचरोऽयं समाधिः, स तु यथा पूर्वं कथ्यते। तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाऽविद्यातत्कार्यस्याक्षीणत्वात्, एवं चित्तनैर्विकारणसत्त्वेन, पुनः कर्तृत्वप्रपञ्चोत्थानात्, अयं सुषुप्तिवत् सबीजः समाधिर्मुख्यः। मुख्यस्तु, तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेण, अविद्यायां निवृत्तायां सर्गक्रमेण तत्कार्यनिवृत्तिरनाद्यविद्यायाः पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजो वाधपूर्वकः समाधिः। स एव, सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे। आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते। इत्यनेन श्लोकेन प्रदर्शितः। तथाहि। सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि च। इन्द्रियकर्माणि, इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां, वाक्पाणिपादपायूपस्थाऽऽख्यानां वा पञ्चानाम्, अन्तर्गतमनोबुद्ध्योः कर्माणि, शब्दस्पर्शरूपदर्शनरसग्रहणगन्धग्रहणानि, वचनादानगमनविहरणोत्सर्गानन्दाख्यानि च, सङ्कल्पाध्यवसायौ च।

एवं प्राणकर्माणि च, प्राणानां, प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि, बहिर्नयनमधोनयनमाकुञ्चनप्रसारणाद्यशितपीतसमानयनमूर्ध्वनयनमित्यादीनि। अनेन पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणाः, मनोबुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम्, तच्च सूक्ष्मभूतसमष्टिरूपं हिरण्यगर्भाख्यमिति विवक्षितमिति वेदितुं सर्वाणीति विशेषणम्। आत्मसंयमयोगाग्नौ, आत्मविषयकः संयमो धारणाध्यानसम्प्रज्ञातसमाधिरूपस्तत्परिपाके सति योगो, निरोधसमाधिः। यं पतञ्जलिः सूत्रयामास। व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणाम इति। व्युत्थानं, क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयम्, तत्संस्काराः समाधिविरोधिनः, योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते, तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति, ततश्च निरोधमात्रक्षणं चित्तान्वयो निरोधपरिणाम इति। तस्य फलमाह। ततः प्रशान्तवाहिता संस्कारादिति। तमोरजसोः क्षयादक्षेपशून्यत्वेन शुद्धसत्त्वरूपं चित्तं प्रशान्तमित्युच्यते। पूर्व

नामसमाहृतकृति । षड्उक्तलक्षणेषु ।। समानशब्देनपूर्व्वाचार्य्यैर्निर्द्दिष्टाद्वोभिधीयन्ते दृष्टसमानाकृतिवचनादितिकैयटः । वचनादिति । यथा॰ कृर्द्दे उज ऋतङ्ग लृङ् दृष्टसमानाकृतिपूर्व्वव्याकरणवचनादित्यर्थ कृतिविवरणम् । त्रि॰ सतौ । साधौ ॥ समे । तुल्ये । अनातिरिक्तवर्णे ॥ एकस्मिन् ॥ समन्तादनित्यनेन । अन॰ । इलघे तिपत्र ॥ समतिना सम॰ । तान्तौत्ययेषावचनमसिग्रुणानाम् । आगममासनमनित्यमितिसुमन ॥ सहमानेनवर्त्तते कृतिना । वाप सर्व्वनर्झे तिसभाव ॥ समानमान्मस्येतिवा । समानछन्द सीतिस॰ ।

समानकालीनः । त्रि॰ समकालोत्पत्तिके ॥ यथा । गोधुग्दुग्धमानाखागते॰ दुग्धाखागतकालादी समानकालीनत्व भावदै । तैनगो विचयकवस्तमानदोहनकालीनग मनानुकूलक्रतिमान् । एव गोविषयकातीतदोहनसमानकालीनातीतगमनानुकूलक्रतिमानितिवोध ॥

समानयानकर्म्मा । पुं॰ सन्धेः प्रभेदे ॥ यथा । तात्कालिकफललाभार्थं सुसरकालीनफललाभार्थं वायवराजान्तरेणसहान्यं प्रतियानादिक र्म्मक्रियते॰ ससमानयानकर्म्मासन्धिर्वोच्य ॥

समानाधिकरण । पुं॰ समानविषये ॥

समानाभिहार । पुं॰ समानगुणानामिश्रणे ॥ यथा॰ तोयदमुक्तजलबिन्दूनां॰ जलाशयेसमाभिहार यथागोमहिष्यादिदुग्धपतितानांग व्यदुग्धानाम् ॥

समानालङ्कृति । स्त्री॰ अलङ्कारभेदे ॥ यथा । समानालङ्कृतिर्यो गोवसुनोरनुरूपयोरिति ॥

समानिका । स्त्री॰ वर्णवृत्ताकरे ॥ हारमेकवाधदासञ्ज्ञाभवेत्तदा । सप्तवर्णनिर्म्मितासासमानिकार्मता ॥ यथा । पद्मचारुचक्षुषानीलनीर अस्विषा ॥ आलिमम्मनोङ्कता॰ भवाद्मोद्दितम् ॥ अनुष्टुब्भेदेपि । ग्लौरजौसमानिकातु । यथा । यशःकृपापादपद्मसक्तिहृतड़ागस द्म । श्री समानिकापरेषणी चिताश्रमत्सरेण ॥

समानोदक । पु॰ चतुर्द्दशपुरुषपर्य्यन्तजन्मनामस्मृतिपर्य्यन्तेच ॥ गोत्रजमात्रे ॥

समानोदर्य्य । पुं॰ सहोदरे । सोदर्य्ये ॥ समानेउदरेशयित स्थित । समानोदरेशयितमोवोदा सङ्कृतियत् । विभाषोदरइतिपा

स्थिते ॥ सम्यक् आरोपित ॥
समारोह । पु॰ सम्यगारोहणे । नीचादूर्ध्वगमने ॥ सोपाने । समारुह्यतेऽनेन॰ समारोहणम् । समारोहतिवा । रुहे कर्मणि॰ भावेवाघञ् । पचाद्यच्वा ॥
समालम्बी । पु॰ भूतृणे ॥
समालम्भ . । पु॰ विलेपने । कुङ्कुमादिविलेपे ॥ समालम्भनम् । डुलभष् प्राप्तौ । घञ् । उपसर्गात्खल घञोरितिनुम् । घातने ॥
समालम्भनम् । न॰ विलेपे । घातने ॥ सम्यक् स्पर्शने ॥
समालिङ्ग । पु॰ समालिङ्गने ॥
समाली । पुं॰ कुसुमाकरे ॥
समावर्त । पु॰ विष्णौ । स सारचक्रस्य सम्यगावर्तकत्वात्तथा । जननमरणादिरूप स सारचक्रमस्जीवान प्रतिसम्यगावर्तयन् समावर्त इत्यर्थः । समाङ्पूर्वात् वृतेर्ण्यन्तात् पचाद्यच् । समावर्तनम् । वृतु॰ । भावेघञ् ॥
समावर्तनम् । न॰ साङ्गाधीतवेदस्य गुरोरनुज्ञयागृहागमे । वेदाध्ययनानन्तरगार्हस्थ्याधिकारप्रयोजककर्मणि ॥ सम्पूर्वाद्वर्तेर्ल्युट् ॥
समावाय । पु॰ समुदाये । समूहे ।
समावास । पु॰ स्थाने ॥

समाविष्ट . । त्रि॰ आक्रान्ते ॥
समावृत्त । पुं॰ लब्धानुज्ञे । साङ्गवेदाध्ययनानन्तरत्वमिदानीगृहस्थोभवेतिगार्हस्थ्यायगुरोः प्राप्तानुज्ञे ॥ समावर्ततेस्म । वृतु॰ । गत्यर्थेतिक्त ॥
समावेदनम् । न॰ निवेदने ॥
समावेश । पु॰ विन्यासे ॥ एकत्रसद्भावस्थाने ॥
समावेशित . । त्रि॰ सद्भावस्थिते ॥ प्रविष्टे ॥
समाश । पु॰ सहभोजने ॥
समाश्रय । पु॰ वासस्थाने ॥ सम्यक्॰ आश्रय । सम्यगाधारे । सहाये ॥
समाश्रित . । त्रि॰ सम्यक् शरणागते ॥ सम्यक् प्रकारेणाश्रित ॥
समाश्वस्त । त्रि॰ सञ्जातविश्वासे ॥
समाश्वास . पुं॰ सम्यगाश्वासे ॥
समास । पुं॰ सङ्क्षेपे । समर्थने ॥ ऐकपद्ये । पदयोः पदानांवाएकीकृतौ । समसने ॥ समसनम्॰ पदयोः पदानांवा॰ एकपदीकरणम् समासः सङ्क्षेप । भावेघञ् । सचानेकपदैक्यम् । सच तुर्द्धा॰ प्रधानार्थस्यचातुर्विध्यात् । तथाचोक्तं महाभाष्ये । इहकश्चित्समासः पूर्वपदार्थप्रधान॰ कश्चिदुत्तरपदार्थप्रधान॰ कश्चि

दन्यपदार्थप्रधान ' । कश्चिदुभय पदार्थप्रधानइति ॥ पुनश्चद्विविधो नित्याऽनित्यभेदात् । अविग्रहोनि त्यसमास : । अस्वपदविग्रहोवा । समासमानवाक्यपदप्रदर्शितविग्रहइ तियावत । । तद्भिन्नोऽनित्य ॥ अपिच । कृत्तद्धितसमासैकशे षसनाद्यन्तधातुरूपा पञ्चवृत्तय ' । परार्थाभिधानवृत्ति । परार्थस्य बोधकत्वाभिधानमितियावत् । समुदायबोधकवाक्यंविग्रह । सद्वि धा । लौकिकोऽलौकिकश्च । परि निष्ठितत्वात्साधुर्लौकिक । प्र योगानर्होऽसाधुरलौकिक । य थाराज्ञ : पुरुष : । राजन्ङस् । पुरुषसु । इति । अविग्रहोनित्य समासोऽस्वपदविग्रहोवा । समा सस्चतुर्धेतिप्रायोवाद । अव्ययी भावतत्पुरुषबहुव्रीहिद्वन्द्वाधिका रश्विभूतानामपिसहसुपेतिविधा नात् । पूर्वपदार्थप्रधानोऽव्ययी भाव : । उत्तरपदार्थप्रधानस्तत् पुरुष : । अन्यपदार्थप्रधानोबहुव्री हि ' । उभयपदार्थप्रधानोद्वन्द्व इत्यपिप्रायोवाद प्रायोभिप्राय. । सूपप्रति । उन्मत्तगङ्गमित्याद्य व्ययीभावे । अतिमालादौतत्पुरु षे । द्वित्रा : सपुत्रइत्यादिबहुव्री हौ । दन्तोष्ठमित्यादिद्वन्द्वे चाभा

वात् । तत्पुरुषविशेष : कर्मधा रय । तद्विशेषोद्विगु । अनेकपद त्वं द्वन्द्वबहुव्रीह्योरेव । तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किञ्च । सुपां सुपातिङानाम्नाधातुनाऽथतिङांति ङा । सुबन्तेनेतिविज्ञेय समास षड्विधो बुधै ॥ सुपा । राजपु रुष ' । तिङा । पर्यभूषत । ना म्ना । कुम्भकार : । धातुना । क टप्रू : अजस्रम् । तिङां । तिङा । पिबतखादत । तिङांसुपा । कृन्त विचक्षणेतियस्यांक्रियायांसाकृन्त विचक्षणा । एहीडादयोऽन्यपदा र्थे इति । मयूरव्यंसकादौपाठात् समास : ॥ समूहे । समाहे ॥

समासक ' । त्रि । सम्यगासक्तिे । संयुक्ते ॥

समासञ्जनम् । न । समासङ्गे । मेलनि संयोगे ।

समासक्ति : । स्त्री । सन्निकर्षे ॥

समासन्न : । त्रि । प्रत्यासन्ने । निक टवर्त्तिनि ॥ समासीदतिस्म । स कृत । गत्यर्थेतिक्त : । समासा द्यतेस्मवा ॥

समासदाम् । पुं । तुल्ये । सन्निक र्षे ॥ त्रि । समासाश्रये । समा सविशिष्टे ॥

समासादित । त्रि । आहृते । प्राप्ते ॥

समासाद्य : । त्रि । प्राप्ये । गम्ये ।

आप्तुं शक्यं । समासाद्यते । षद् ल० । कर्म्मणि यत्

समासार्था । स्त्री० समस्यायाम् । पूरणाक्षरपदाकाङ्क्षायाम् । कविशक्तिपरीक्षार्थमपूर्णतया पठ्यमानायाम् । यथा । शतचन्द्रं नभस्तलमिति । तत्र० दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेनेत्यादिना० सा० पूर्यते ॥ समासोर्थोयस्याः ॥

समासोक्ति । स्त्री० अर्थालङ्कारभेदे ॥ यथा । परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः । प्रकृतार्थप्रतिपादकवाक्येन० श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि० यदप्रकृतस्यार्थस्याभिधानं सा समासोक्ति ॥ उदाहरणम् । लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो । जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ अत्र जयलक्ष्मीशब्दस्य केवलकान्तावाचकत्वं नास्ति । प्राकृतस्य संस्कृतन्तु । लब्ध्वा तव बाहुस्पर्शं यस्याः स कोप्युल्लासः । जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सेति ॥ अत्र बाहुस्पर्शलाभप्रयुक्तोल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मीवृत्तान्तो नायिकावृत्तान्तरूपतया गम्यत इति समासोक्तिरलङ्कारः ॥

समाहरणम् । न० समाहारे ॥

समाहार । पु० । समुच्चये । ससमुदायकरणे । एकत्रकरणे । बहूनाभिन्नानावाच्यव्यापारेणबुद्ध्यावापन्नमूर्त्तीनां त्रिभुवननवद्धाग्रीकरणे ॥ सङ्क्षेपे । समूहे । संहतिप्रधानेयार्थविशेषे ॥ यथा छत्रोपानहम् शाकत्वचम् । शमीदृषदमिति ॥ अत्र संहतेरेकत्वादेकवचननित्यक्लीबतावभवतो ॥ समाहरणम् । हृञ० । घञ् । सम्यगाहारे ॥

समाहित । त्रि० यतात्मनि । अनन्यमनसि । समाहितत्वमेकाग्रमनस्त्वं श्रवणादिषु ॥ समाधिस्थे ॥ उक्तसिद्धान्ते ॥ आहिते ॥ निर्विवादीकृते । प्रतिज्ञाते । संश्रुते । अङ्गीकृते ॥ समाधीयते स्म । क्त । दधातेर्हिः ॥ सम्यगाहितः स्थितो वा ॥ सावधाने ॥ अलङ्कारान्तरे ॥

समाहृत । त्रि० सङ्कलिते ॥

समाहृति । स्त्री० सङ्ग्रहे ॥ समाहरणम् । भावे क्तिन् ॥ एककर्तृकाणामनेककर्तृकाणां वा एकाभिप्रायाणां वाक्यानां समाहरणे ॥ संक्रियते० सङ्क्षेपेण प्रतिपद्यतेऽनया । क्तिन् ॥

समाह्वय । पुं० आहवे । सङ्गरे ॥ आह्वाने ॥ प्राणिद्यूते । पशुभिः

कल्पयेत्प्राज्ञ सर्वकर्मसुसर्वदे तिमत्स्यपुराणम् ॥ छन्दोगपरिशि ष्टेपि । नाङ्गुष्ठादधिकान्यूनासमि त्स्थूलतयाक्वचित् । नानिर्मुक्ता त्वचाचैवनसकीटानपाटिता ॥ प्रा देशान्नाधिकानोनानतथास्याद्विशा खिका । नसपर्णानर्निर्वीर्याहोमे षुचविजानतेति ॥ निषिद्धलक्षणय था । विशीर्णाविदलाह्रस्वावक्रा स्थूलाद्विधाकृता । कृमिदष्टाच दीर्घाश्चसमिधोनैवकारयेत् ॥ अथ दोषोयथा । विशीर्णायु क्षयक् र्याद्विदलापुत्रनाशिनी । ह्रस्वाना शयतेपत्नींवक्रावन्धुविनाशिनी ॥ कृमिदष्टारोगकरीविद्वेषणकरीद्वि- धा । पशून्मारयतेदीर्घास्थूलावा र्थविनाशिनीतितन्त्रम् ॥ नवय ज्ञार्थसमिधोयथा । अर्क · पला श : खदिरस्त्वपामार्गोथपिप्पल . उदुम्बर : शमीदूर्वा, कुशाश्चसमि ध : क्रमादिति ॥

समिध । पु॰ असिताचिंषि । अग्नौ ॥

समिन्धनम् । न॰ समिधि ॥

समिर · । पु॰ वायौ ॥ इ॰ हे॰ च न्द्र ॥

समी । स्त्री॰ शम्याम् । बीजगुप्त्या म् ॥ समति । समः । अच् । गौ रादि · ॥

समीकम् । न॰ साम्परायिके । युद्धे ॥ समनम् । समः । अनीकादय स्रेतिकन् ॥ सम्यगयनवा । ईमत्या द्दौ । बाहुलकात्क ।

समीक्षम् । न॰ साङ्ख्यशास्त्रे ॥

समीक्षणम् । न॰ सम्यङ्निरूपणे ॥ प्रेक्षणे ॥ सम्यक्प्रकारेणईक्षणं दर्शनम् ॥

समीक्षा । स्त्री॰ तत्त्वे ॥ बुद्धौ ॥ नि भालने । समीक्षणे । दर्शने ॥ मीमांसाशास्त्रे ॥ सम्यगीक्षणमन याबा । ईक्ष॰ । गुरोश्चेत्य । टा प् ॥ यत्ने ॥

समीक्ष्य । त्रि॰ समीक्षणीये । दर्श नीये ॥

समीक्ष्यमाण । त्रि॰ प्रेक्ष्यमाणे ॥

समीच । पु॰ समुद्रे । अकूपारे ॥ सं अञ्चितियस्मिन् । क्विन् । समी पाङ्गतिषट्दीर्घत्वञ्चधातो · ॥

समीची । स्त्री॰ मृग्याम् । एण्याम् ॥ बन्दनायाम् ॥ टित्वान्ङीप् ॥

समीचीनम् । न॰ सत्ये । ऋते । त थ्ये ॥ त्रि॰ तद्वति ॥ सम्यगेव । विभाषाञ्चेरदिक्स्त्रियामितिख । समः समि ॥ शोभने ॥

समीन । त्रि॰ समाम् · अधीष्टे · भृते· भूते॰ भाविनि । समाया . ख : ॥ मीनसहिते ॥

समीप : । त्रि॰ अव्यवहिते । निकटे

॥ सङ्गताभावीयस्मिन । चतक पूरिभ्य समासान्त । दृश्यन्तर पसर्गभ्योपइत् ॥

समीपकाम । न॰ निकटे ॥

समीपता । स्त्री॰ समीपत्वे । सामीप्ये । नैकट्ये ॥

समीर । पु॰ मारुते । श्वसने । स्पर्शने । वायौ ॥ सम्यगीरयतिगच्छति । ईरयतिप्रेरयतिवा । ईरगतौ कम्पनेच । अच् । स्वातिनक्षत्रे ॥ समीरणे ॥

समीरण । पुं॰ श्वसने । नभस्वति । वाते । पवने ॥ सम्यगीरयति॰ गच्छति॰ सम्यगीरयतिप्रेरयतिवा । ईर॰ । युच् ॰ ल्युर्वा ॥ पथिके । पान्थे ॥ फणिज्झके । मरुवके । मरुवा॰ क्ली॰ प्र॰ पुष्पवृक्षे ॥

समीरसार । पु॰ बिल्वे ॥

समीरित । त्रि॰ उद्दीपिते । क्षिप्ते ॥ समीर्यतेस्म । ईर॰ । क्त ॥

समीहन । पुं॰ विष्णौ ॥ सृष्ट्यार्थं समीहते । ईह॰ । नन्द्यादित्वा ल्ल्यु ॥

समीहा । स्त्री॰ वाञ्छायाम् । सम्यगी हनमनया । ईह॰ । गुरोश्चेत्य. ॥

समीहित । त्रि॰ वाञ्छिते ॥ सम्यगीहित ॥

समुख । त्रि॰ वाग्मिनि । वावदूके ।

समुचित । त्रि॰ यथार्थे यर्थ । स म्यगुचित ॥

समुच्चय । पु॰ सहावस्थानलक्षणे॰ एकाधिकरणे ॥ समाहारे । राशीकरणे । यथा । राशीकृतोवस्तूनामसमाहार समुच्चय । चार्थविशेषे । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वये ॥ यथागामश्वंचा लयघपचतिपठतिचमैत्र ॥ सम् च्चयनम् । चिञ् । एरच् । ॥ अर्थालङ्कारभेदे । यथा । तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करभवेत्॰ समुच्चयोऽसौ ॥ तथा प्रस्तुतस्यकार्यस्य॰ एकस्मिन्साधकेस्थिते॰ साधकान्तरोपादानसमुच्चय उदाहरणम् । दुर्वारा स्मरमार्गणाः . प्रियतमोदूरेमनोप्युत्सुकं गाढं प्रेमनवं वयोऽतिकठिनाः प्राणाः . कुलंनिर्मलम् । स्त्रीत्वं धैर्यविरोधिमन्मथसुहृत्कालःकृतान्तोक्षमो नोसख्यश्चतुराः कथंनुविरहः सोढव्यइत्थंशठः ॥ अत्रविरहासहत्वं स्मरमार्गणाएवकुर्वन्ति॰तदुप्रियतमदूरस्थित्याद्युपात्तम् । एवमेवसमुच्चय॰ सद्योगे॰ऽसद्योगे॰ सदसद्योगेचपर्यवसानीतिनपृथग्लक्ष्यते । तथाहि । कुलममलिनंभद्रामूर्तिर्मतिः श्रुतशालिनीभुजबलमलंस्फीतालक्ष्मी . प्रभुत्वमखण्डितम् । प्र

क्षतिसुभगाङ्गी तेभावाऽमीभिरयज नोवजतिस्, तरादर्पं राज सएवतवा हुया ॥ अवसतायोग • उक्तोदा हरणं स्वसतायोग ' यथोदितसधू सरो• गलितयौवनाकामिनी• सरोविगतवारिज • सुखमनचर स्वाकृती । प्रभुर्धनपरायणः० सत तदुर्गत सज्जनोन्, पाक्ष्णगत ' खलो• मनसिसप्तशल्यानिमे ॥ अवशमिनिधू सरेशल्ये शल्यान्तरा णीतिशोभनशोभायोग ॥ द्वितीय समु्च्चये यथा । सत्वन्यायुग पद्यागुणक्रिया । गुणैचक्रियेगुण क्रिया ' । क्रमेणोदाहरणम् । विदलितसकलारिकुलतवबलमिदम भवदाशुविमलश्च । प्रखलमुखा निनराधिपमलिनानिचतानिजाता नि ॥ अथमेकपदेतयावियोग प्रियया चोपगत सुदृ सहोम । न ववारिधरोदयादहोभिर्भवितव्यञ्च निरातपत्वरम्यं कालुषस्ततवाह्नि तेष्वकस्मात्सितपक्षवकोदरश्रि- षश्, । पतितञ्चमचीपतेन्द्रतेषा वपुषिप्रसभ्, टमापदाकटाक्षै ' ॥ बहूनासमाहारे ॥ खलिकपोतन्या येनबहूनाकार्यसाधने । कारणाना समुद्योग । सद्वितीय समुच्चयः ॥

समुच्छेद । पु० विनाशे ॥

समुच्छ्रय । पुं० विरोधे । वैरे ॥ उ त्सेधे । उन्नती ॥ सञ्उत्श्रय अम् । श्रिञ् • । एरच् ॥

समुच्छ्राय ' । पु० समुच्छ्रये ॥ सम्य गुच्छ्राय ॥

समुच्छ्रित । त्रि० उच्चे ॥

समुज्झित । त्रि० त्यक्ते ॥ समुज्झा तेस्म । उज्झउत्सर्गे । क्त ॥

समुत्कीर्ण । त्रि० सम्यगुल्लेखिते । विद्धे ॥

समुत्क्रम ' । पु० ऊर्द्ध्वगमने ॥ स म्यगुत्क्रमे ॥

समुत्क्रोश । पुं० कुररपक्षिणि ॥ सम्यगुत्क्रोशति । क्रुश० । अच ॥

समुत्त । त्रि० क्लिन्ने ॥ समुनत्ति । उन्दीक्लेदने । अकर्मकत्वात् कर्त्तरिक्त ः । नुद्विदेतिपक्षे नत्वा ऽभाव ' ॥

समुत्थ । त्रि० समुद्भवे ॥ समु त्थिते ॥

समुत्थनम् । न० समुद्योगे ॥ व्याधीनांनिर्णये ॥ ऊर्द्ध्वगमने ॥ सम्यक्प्रकारेणोत्थाने । उठावना० उभाकर्ना० इ० भा० ॥ यथा । कुन्दध्वजसमुत्थान प्रमादाञ्ज्ञात य दि । तदाद्वादशमेवर्षं कार्त्त व्यना त्रापुन ' ॥

समुत्थित ' । त्रि० सम्यगुत्थिते ॥

समुत्पतनम् । न० कूर्दने ॥

समुत्पन्न : । त्रि० समुद्भूते ॥

समुत्पिञ्ज । वि॰ अत्यन्तव्याकुले ॥ समुत्पिञ्जति । पिजिहिंसायाम् । अच् ॥ पु॰ भृशमाकुलसैन्ये । पिञ्जले ॥

समुत्सुक । वि॰ अनुरक्ते । सम्यगुत्कण्ठते ॥ सम्यगिष्टार्थोद्युक्ते ॥

समुद् । वि॰ सानन्दे ॥ मुदासह वर्त्तते॰ ॥

समुदक्त । वि॰ कूपादेरुद्धृतजलादौ । उद्धृते । समुदच्यते स्म । अञ्चु॰ । क्त ॥

समुदय । पु॰ सङ्घे । गणे । समूहे ॥ संयुगे । रणे । युद्धे ॥ समुद्गमे ॥ समुदीयते॰ समुदयन्ते वा । इण॰ । अयगतौ वा । एरच्॰ । पचाद्यच् वा ॥ ज्योतिषोक्ते उदये ॥ राज्ञांधान्यहिरण्यादीनुत्पत्तिस्थाने ॥ समुदयन्ति॰ उत्पद्यन्ते॰ अस्मादर्थाः । एरच् ॥ दिने । न॰ लग्ने ॥

समुदागम । पु॰ समन्ताज्ज्ञाने ॥

समुदाचार । पु॰ अभिप्राये । आश्रये ॥

समुदाय । पु॰ समूहे ॥ युद्धे ॥ समुदायते । अयगतौ । आङ्पूर्वः । अच् । समुदयगम । अप्रदानादौ अञ् वा ॥ पृष्ठस्थायिवले ॥ उद्गमे ॥

समुदित । वि॰ समुत्पतिते समुद्गते ॥ सम्यक्प्रकारेणव्यवस्थिते ॥

समुद्रीपयम् । न॰ पश्चिमापरस्य रस्यईयागमने

समुद्ग । पु॰ समुद्गके ॥ समुद्गच्छति । गम्लृ॰ । अन्येष्वपीतिडः ॥ यमकभेदे ॥ अर्धाभ्यासः समुद्गः स्यादस्यभेदास्त्रयोमताः ॥ वि॰ मुद्गसहिते ॥

समुद्गक । पु॰ सम्पुटके । भूषणाद्याधारपात्रे ॥ समुद्गच्छति । गम्लृ॰ । अन्येष्वपीतिडः । स्वार्थे कन् ॥

समुद्गत । वि॰ उत्पतिष्णौ ॥

समुद्गम । पु॰ ऊर्ध्वगतौ ॥ उत्पत्तौ ॥

समुद्गयमकम् । न॰ चित्रकाव्यप्रभेदे ॥ यथा । अयशोभिदुराशीलोलोपधामरणाहते ॥ अयशोभिदुरा॰ लोली॰ लोपधा॰ मरणाहते ॥ अस्यार्थः । अय शुभावहोविधिः॰ अयशोभो॰ भाग्यवान् । सचासौ दुराशीश्च॰ तेजस्वित्वाद्दुर्धर्ष इतिविशेषणसमासः॰ तस्मिन् । लोपधामलोपाश्रयः कुपितस्त्वर्थः । अतएवरणाहत॰ रणार्थीत्यर्थः । लोपधामचासौ॰ रणाहतश्चतस्मिन्॰ एवंविधेवीरेलोके । अयशोभिदुरा॰ स्वाम्यनादरनिमित्ता

पकीर्त्तिनिर्वर्त्तिक्षा॰ उपधा॰ उपाय॰ मरणाहृते॰ प्राणत्यागविशेष्यर्थ॰।का॰ नक्षापीत्यर्थ॥
समुद्गीतम्। त्रि॰ उच्चैर्गीते॥
समुद्गीर्ण। त्रि॰ वमिते॥ उत्तोलिते॥ कथिते॥
समुद्धत। त्रि॰ अविनीते॥ समुद्गीर्णे॥ समुद्धन्तिस्म॰ समुद्धन्यतेस्मवा। हन्गत्यर्थत्वात्कर्त्तरिक्त कर्मणिवा॥
समुद्धरणम्। न॰ उद्धरणे॥ सम्यगुद्ध्रियते। उद्धरतेर्ल्युट्॰ भावेवा॥ वान्तान्ने॥ उन्नये॥ भुक्तोज्झितेन्मूलितयो॥ स्यादुद्धरणमुन्नयेद्गृतिरभस॥
समुद्धर्त्ता। त्रि॰ उद्धारकर्त्तरि॥ ऋणशोधके॥ सम्यगनायासेन॰ उत्॰ ऊर्ध्वे सर्वबाधाबधिभूतेभ्यो ॥ विभर्त्ति॰ धारयिता॥ उन्मूलयितरि॥ यथा॥ पनस्वानांसमुद्धर्त्तारितिरघु॥
समुद्धृतः। त्रि॰ समुत्क्षीर्णे॥ अपनीते॥ उत्थापिते॥ यथा। जलौघमग्नासचराचराधराविषाणकोव्याखिलविश्वमूर्त्तिना। समुद्धृतायेनवराहरूपिणासमेस्वयम्भूर्भगवान्प्रसीदतु॥ सम्यक्प्रकारेणउद्धृत॥
समुद्भव। पुं॰ उत्पत्तौ॥ आरब्धे सम्यगुद्भव॥ समुद्भवत्यस्मादा॥ अपादानार्थ॥ भुवोऽच्छ्देरप्॥
समुद्भूत। त्रि॰ समुत्पन्ने॥
समुद्र। पुं॰ अम्भोधौ। तत्पर्याया। समुद्रो॰ अब्धिरकूपार॰ पारावार॰ सरित्पति॰ उदन्वानुदधि॰ सिन्धु॰ सरस्वान्॰ सागरो॰ र्णव॰। रत्नाकरो॰ जलनिधि॰ र्यादः पति॰ रपाम्पतिरिति॥ समुनत्ति॰ उन्दी॰। स्फायीतिरक्॥ चन्द्रोदयेसम्यकउन्दन्तिक्लिद्यन्तिआपोयत्रवा। अपाञ्चैवसमुन्दनससमुद्रइतिस्मृतः॥ वायुपुराणम्॥ समीचीना॰ उद्रा॰ जलचरविशेषायस्मिन्निति॥ सहमुद्रयामर्यादयावर्त्तते॰ कृतिवा॥ परमात्मनि॥ समुत्पद्यभूतानिद्रवन्तिलयगच्छन्त्यस्मिन्नित्व्याख्यानात्॥ सङ्ख्याविशेषे॥ अन्त्यादिमतिमुक्तसमुद्रइतिरामायणटीकायांमाहेश्वरीव्याख्यानात्॥ ठगणस्यद्वितीयपर्याये। आदिगुरुत्रिकले॰ऽ।॥। त्रि॰ मुद्रयासहितेपत्रादौ॥
समुद्रकफः। पुं॰ समुद्रफेने॥ समुद्रस्यकफइव॥
समुद्रकान्ता। स्त्री॰ नद्याम्॥ समुद्रस्यकान्ता। समुद्रःकान्तोयस्यावा॥ पृक्कायाम्॥

समुद्रगा । स्त्री॰ नद्याम् ॥
समुद्रगृहम् । न॰ जलयन्त्रालये । फाहारेका घर॰ इ॰ भा॰ चि॰ शेष ।
समुद्रचुलुक । पु॰ अगस्त्यमुनौ ॥ समुद्रश्चुलुकोगण्डूषोस्य ॥
समुद्रदयिता । स्त्री॰ नद्याम ॥
समुद्रनवनीतम । न॰ पीयूषे । चन्द्रे ॥ समुद्रस्यनवनीतमिव ॥
समुद्रनेमि । स्त्री॰ समुद्रमेखलायाम् । भूमौ ॥ समुद्रोनेमिरिवनेमिरस्या ॥
समुद्रफलम् । न॰ अभिफले । औषधविशेषे ॥ तद्गुणायथा । फल समुद्रस्य कटूष्णकारि॰ वातापह भूतनिरोधकारि । त्रिदोष दावानलदोषहारिक्षामयभ्रान्तिनिरोधकारीसिरा॰ नि॰ षट्.॰ ॥
समुद्रफेन । पु॰ फेने । अब्धिकफे । डिण्डीरे ॥ समुद्रफेनश्चक्षुष्योलेखन शीतलं सर । कषायोविषपित्तघ्न, कर्णरुक्कफहृल्लघु ॥
समुद्रमेखला । स्त्री॰ भुवि । पृथ्व्याम् । विश्वम्भरायाम् ॥ स्थिरायाम् ॥ समुद्रोमेखलायस्याः ॥
समुद्रयात्रा । स्त्री॰ पोतैःसमुद्रगमने ॥ समुद्रयात्राद्य ' कलौ निषिद्धायथा । समुद्रयात्रास्वीकार कमण्डलुविधारणम् । द्विजानामसवर्णासुकन्यासूपयमस्तथा । देवरेणसुतोत्पत्तिर्मधुपर्केपशोर्वधः । मासादनं तथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैव कन्यायापुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोमेधश्चतथा मख । इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ ... एतानिलोकगुप्त्यर्थं कलेरादौमहात्मभि । निवर्तितानिकर्माणिव्यवस्थापूर्वकं बुधैरिति ॥
समुद्रयानम् । न॰ पोते । वहित्रे ॥ यथा । समुद्रयानेरत्नानिमहासूल्यानिसाधुभि ' । रत्नपरीक्षकै : सार्द्धमानयिष्येबहूनिचेतिमत्स्यपुराणम् ॥
समुद्रयायी । त्रि॰ समुद्रेणद्वीपान्तरगामिनिजने ॥ समुद्रयायीवन्दीचतोलिककूटकारक, इतिमनु ' । समुद्रयायिभि, सार्द्धं स विट्सुख्यैर्गतइतिवराहपुराणं ॥
समुद्ररसना । स्त्री॰ पृथ्व्याम् ॥ समुद्रोरसनाकाञ्चीयस्याः ॥
समुद्रलवणम् । न॰ कर्कचे । सिन्धु

टे । सामुद्रे ॥ समुद्रस्यलवणम् । समुद्रजलजात लवण वा ॥
समुद्रवह्नि । पु॰ वाडवे । वडवानले ॥
समुद्रविजय । पु॰ कृष्णार्हत्पितरि ॥
समुद्रसिन्धुसङ्गमः । पु॰ । तीर्थविशेषे ॥
समुद्रसुभगा । स्त्री॰ गङ्गायाम् ॥
समुद्रा । स्त्री॰ शट्यां ॥ शम्या ॥
समुद्रान्तम् । न॰ जातीफले ॥ अव्यावसाने ॥
समुद्रान्ता । स्त्री॰ तुण्डिकेरयाम् कार्पास्याम् ॥ समुद्रोन्तोयस्या ॥ यद्वा । मुद्रयासहवर्त्तमानोन्त समीपोयस्या । आच्छादकत्वात् ॥ दुरालभायाम् । यासे । यवासे ॥ समुद्रोन्तोऽस्यस्या । अर्शआद्यच् ॥ समुद्रोन्तोऽस्यावा ॥ मरुन्मालायाम् ॥ पृक्कायाम् ॥ समुद्रोतोऽस्या ॥
समुद्राम्बरा । स्त्री॰ पृथिव्याम् । अवन्यायाम् ॥ समुद्रोम्बर वसनं यस्याः ॥
समुद्रायणा । स्त्री॰ नद्याम् । सरिति ॥ समुद्रोऽयन गतिर्यस्या ॥
समुद्रार । पु॰ ग्राहविशेषे ॥ सेतुबन्धे ॥ तिमिङ्गिले ॥
समुद्रेक । पु॰ प्रादुर्भावे ॥
समुन्दनम् । न॰ आर्द्रीभावे । क्लेदे । क्लेमे । उनदी॰ ल्युट् ॥
समुन्न । त्रि॰ आर्द्रे । समुनत्ति । उन्दी॰ अकर्मकत्वात् कर्त्तरि क्त । नुदविदेतिपक्षे नत्वम् । सम्यगुन्न क्लिन्नं वा ॥
समुन्नत । त्रि॰ समुन्नद्धे ॥ सम्भविशेषे । पु॰ धरणि ॥
समुन्नति । स्त्री॰ समुच्छ्रये । उत्सेधे ॥ अतिशयै ॥
समुन्नद्ध । त्रि॰ समुद्धूते ॥ पण्डितम्मन्ये ॥ गर्विते । दृप्ते ॥ ऊर्ध्वबद्धे ॥ प्रभौ ॥
समुन्नय । पु॰ समुच्छ्रये
समुन्नाह । पु॰ उच्छ्राये ॥
समुपक्रम । पु॰ आरम्भे ॥ समुपक्रमणम् । क्रमु॰ । घञ् ॥
समुपजोषम । अ॰ आनन्दे । काल्यार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयो । अम्प्रत्यय ॥
समुपस्थित । त्रि॰ प्राप्ते ॥
समुपेत । त्रि॰ सम्प्राप्ते ॥
समुपेयिवान । त्रि॰ सम्यगुपगते ॥
समुल्लसत् । त्रि॰ सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसद्वदनकान्तिपूरामृतैर्भवानलविभक्तितानमून्यवतोनरान् । चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वतीतनोतु ममशन्तनो - सर्वदेशन्तनोरञ्जना ।
समुल्लिखन् । त्रि॰ पादादिनाभूमि

सम्पत्॰ द्र॰ । स्त्री॰ भूतौ ॥ गुणोत्कर्षे ॥ हारभेदे ॥ सम्पद्यतेऽनया वा । पद॰ । सम्पदादित्वात् क्विप् ॥ अथ सम्पद्वृद्ध्यर्थे स्वल्पे कर्मणि कर्मथ । महतश्चिन्तन सम्पत्तया प्राप्य महाफलम् ॥ इतीयतारायाम् ॥ वासनासन्ततौ शरीरारम्भकादृष्टादिकर्मभिरभिव्यक्तायाम् ॥ सा द्विधा । दैवी॰ आसुरीति भेदात् । अनयोर्विस्तारस्तु भगवद्गीतायां षोडशाध्याये यथा । श्रीभगवानुवाच । अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् । अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् । दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानञ्चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता । मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः ॥ आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः । यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥

क्षिते ॥
सम्पीड । पुं॰ मोदने ॥
सम्पीडनम् । न॰ सम्यक् प्रकारेणव्यथने ॥
सम्पुट । पु॰ कुक्कुरके ॥ समुद्गके ॥ पेटके ॥ एकजातीयोभयमध्यवर्त्तिनि ॥ रतिबन्धविशेषे ॥ यथा । सम्प्रसार्यीभयोपादौ ग्रथ्यागतकटि नक । भगलिङ्गक्षसयोगाद्रमते सम्पुटोह्यिस ॥
सम्पुटक । पु॰ समुद्गके । भूषणाद्यावपने । उब्जा॰ सू॰ भा॰ प्र॰ ॥ सम्पुट्यते । पुटसंश्लेषणे । कुन् ॥
सम्पूर्ण । पु॰ रागजातिविशेषे ॥ यथा । षौडव पञ्चभि प्रोक्त. स्वरै षड्भिस्तुषाडव । सम्पूर्ण सप्तभि प्रोक्तोरागजातिस्त्रिधामते ति ॥ त्रि॰ न्यूनत्वदोषरहिते । कृत्स्ने । परिपूर्णे ॥ साङ्गे ॥ सम्पूर्यतेस्म । पूरी॰ । आप्य । कर्त्तरि॰ कर्म्मणिवाक्तः ॥
सम्पृक्त । त्रि॰ खचिते । मिश्रिते । आरब्धे । कवरे । मिश्रे ॥ सयुक्ते ॥ ससृष्टे । सम्पृच्यतेस्म । पृची॰ । क्त ॥
सम्प्रचाल । पु॰ तपोविशेषलब्धसप्तकेवानप्रस्थविशेषे ॥
सम्प्रज्ञात । पु॰ समाधिप्रभेदे ॥ त्रि॰ सम्यक्प्रकर्षेणज्ञाते ॥
सम्प्रज्ञातसमाधि । पु॰ सविकल्पकसमाधौ ॥ ब्रह्माहमस्मीतिचिन्तयतो॰ यावच्चेतोव्यापृतिस्तावत्सम्प्रज्ञातसमाधि ॥
सम्प्रतापन । पु॰ कुम्भीपाके ॥
सम्प्रति । अ॰ अधुनार्थे ॥ सम्॰ प्रति॰ एतयो समाहारद्वन्द्व ॥ न्याय्ये ॥
सम्प्रति । पु॰ पूर्वकल्पस्थार्हद्भेदे ॥
सम्प्रतिपत्ति । स्त्री॰ उत्तरविशेषे । साध्यस्यसत्यकथ॰ ॥ शुद्धाभियोग प्रत्यर्थीयदित प्रतिपद्यते । स्यात्सम्प्रतिपत्ति आख्याकर्विभिस्तदाहृता ॥ निश्चये ॥ उत्पत्तौ ॥
सम्प्रतिपन्न । त्रि॰ सम्यग्ज्ञाते ॥
सम्प्रतिष्ठा । स्त्री॰ स्थितौ ॥
सम्प्रतीति । स्त्री॰ सम्यक्ख्यातौ ॥ सम्यक्ज्ञाने ॥
सम्प्रत्यय । पु॰ आदरे । अङ्गीकारे ॥ ज्ञाने । निश्चये ॥ यथासङ्ख्या सम्प्रत्ययायसङ्ख्यानिश्चयायेतितदर्थ ॥
सम्प्रदाता । त्रि॰ दातरि । सम्प्रदानकर्त्तरि ॥
सम्प्रदानम् । न॰ दानपात्रे । चतुर्थीकारके । त्यागोद्देश्ये ॥ सम्यक्प्रकर्षेणदीयतेऽस्मै तत् । सम्यक्प्रकृष्टदान वा ॥

प्रसन्नधी ॥ स्यातंमर्शान्वितौदेवि तद्न्याचारतत्पर । चार्यपञ्चान्वितौदेवितथास्वरूपवेशधृक् ॥ शैवश्चो तद्यसज्ञातपुन : ज्ञानपरायण । केवलविष्णुतत्त्वज्ञ प्रोक्तोभागवत मिति ॥ इतिश्रीमत्तिसङ्गमतन्त्रे १ खण्डे ८ पटल : ॥ चत्वारोवैष्णवसम्प्रदायभेदा यथा । श्रीमन्नारायणोब्रह्मानारदोव्यासएवच । श्रीमन्मध्वपद्मनाभोनृहरिर्माधवस्तथा ॥ अक्षोभ्यजयतीर्थश्चज्ञानसिन्धुर्महानिधि । विद्यानिधिस्तथाराजेन्द्रोजयधर्ममुनिस्तथा । पुरुषोत्तमोब्रह्मण्योव्यासतीर्थमुनिस्तथा । श्रीमांल्लक्ष्मीपति श्रीमान्माधवेन्द्र पुरिस्तथा ॥ सम्प्रदायविहीनायेमन्त्रास्तेनिष्फलामता : । अत : कलौभविष्यन्तिचत्वार : सम्प्रदायिन : ॥ श्रीमाध्विरुद्रसनकावैष्णवा : क्षितिपावनाइति ॥ सम्प्रदानम् । हुदाञ् • । धञ • भावइतियुक ॥

सम्प्रधारणम् । न• विचारे॥ सम्भ्रमे ॥

सम्प्रधारणा । स्त्री• उचितानुचितनिर्णये । समर्थने । इदमुचितमेवेति निश्चये ॥ सम्प्रधारणम् । धृञ् • । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष : । पु• विस्मरणे ॥

सम्प्रयोग : । पु• रते ॥ निधुवने ॥ ॥ अन्विती । सम्बन्धे ॥ कार्मणे । वशीकरणादिकर्मणि ॥ त्रि• प्रार्थिते ॥

सम्प्रयोगी । पु• कामकेली । कामी । कामुके । सम्प्रयोजके ॥

सम्प्रश्न । पु• सम्प्रधारणे ॥

सम्प्रसाद : । पु• सुषुप्तिस्थाने ॥ सम्यक्प्रसीदत्यस्मिन । षद्लृ• । घञ ॥ विदुषि ॥ प्राज्ञे ॥

सम्प्रसाधनम् । न• पवित्रीकरणे ॥ शोभाजनके ॥

सम्प्रहार : । पुं• गती ॥ युद्धे । रणे सम्प्रहरणम् । हृञ् • । घञ् ॥ हननेऽ इतिधरणि ॥

सम्प्रहृष्ट : । त्रि• पुलकिते । पुलकितगात्रे ॥

सम्प्राप्त : । त्रि• समागते ॥ सम्यक् प्रकारेणप्राप्त : ॥

सम्प्राप्ति : । स्त्री• सम्यक्प्रापणे ॥

सम्प्रैष । पुं• नियोगे । विधौ ॥

सम्प्लव : । पु• एकीभावेनेतरेतरघनीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये ॥ सङ्क्षोभे । उद्भूती ॥ यथा । मेघ सम्प्लवती ॥ सम्प्लवनम् । प्लुङ् • । ऋदोरप् ॥ सम्प्लवतेवा । पचाद्यच् ॥

सम्प्लवोपल : । पुं• चन्द्रकान्ते ॥

सम्फाल : । पुं• मेषे ॥

सम्फुल्ल : । त्रि• विकचे । विकसिते । प्रफुल्ले ॥ सम्फलति । निपा

सम्बल '। पु॰ न॰ पाथेये ॥ जले ॥

सम्बाक्लतम् । त्रि॰ सम्बाक्लते । द्वितीयाक्लते ॥ सम्ब्यते । सम्वसम्बध्वे । व्यक्त । अच । सम्बक्लतम् । डाजितिकश्चित् ॥

सम्बाध । पुं॰ सङ्कटे ॥ भगे । योनौ ॥ भवे ॥ सम्यकबाधतेऽत्र । बाधृलोडने । हलश्चेतिघञ् ॥ अन्योन्यपीडायाम् ॥ सम्बाधनम् । भावेघञ् वा । सम्बाध्यतेवा । अन्तस्थादिविशेषनिम्नत्वम॰सम्बाधमनुवर्त्तन्तइतिभाष्यप्रयोगादिष्यते । सम्बाधं वदद्पितरभूवबतुर्म्मेतिमाघः ॥

सम्बाधनम् । न॰ द्वा'सदने ॥ शूलाग्रे ॥ द्वारपाले ॥ कृतिर्मर्द्दनकर ॥

सम्बुद्ध '। त्रि॰ सम्बुद्ध्यति ॥ अर्थबोधजन्त '। यथा । ज्ञानेनाकाशकल्पेनधर्मान्योगगनोपमा । न् । ज्ञेयोऽभिन्नेनसम्बुद्धस्त॰ वन्देद्विपदांवरम् ॥ सम्बुद्धे । पु॰ बुद्धे । समन्तभद्रे । सुगते ॥

सम्बुद्धि '। स्त्री॰ सम्यग्बुद्धौ ॥ सम्बोधनप्रथमायाएकवचने ॥

सम्बोध '। पुं॰ सम्यग्बोधे ॥ सम्बोधने ॥

सम्बोधनम् । न॰ आमन्त्रणे । अभिमुखीकरणे । अन्यत्रव्यासक्तस्य॰ कार्यान्तरेनियोजनाय वाभिमुख्यविधाने ॥ यथा॰ हेदेवदत्त॰ हेघटोद्भूतिव्याकरणम् ॥ हेउच॰ हेलते॰ हे फल॰ इत्यादावचेतनेतूपचार ॥

सम्भक्ति । स्त्री॰ सभजने भज॰ क्तिन ॥

सभली । स्त्री॰ कुट्टन्याम् ; सम्यक् भार्य्यांन्यपतिसङ्गभलते । भजपरिभाषणे । पचाद्यच् । गौरादि ॥

सम्भव । पु॰ हेतौ । कारणे ॥ सम्भवत्यस्मात् । अन्तर्भावकारकाद्धिकारादपादानार्थे॰अप्रदोरप्॥ उत्पत्तौ ॥ मेलके ॥ आधेयस्याधारानतिरिक्तत्वे । आधार धेयैकत्वे । भूय सत्तक र्ाधीन स्थाने ॥ यथ सम्भवतिन्यास्य॰ विद्यासम्भ त॰सहस्र शतम् । यथा खाथीं द्रोणाढकप्रस्थ द्यागम ॥ विद्यौ ॥ स प्राया समीचीन अनन्भव । समीचीनोभवोजन्माप्तेति वा । धर्मस्थापनोथायसम्भवामीतिवचनात् ॥ उत्पन्ने ॥ सम्भवति । भू॰ । पचाद्यच ॥ सङ्गते ॥ अपाये । भरतमुख्यार्हदन्तरे ॥

सम्भार । पुं॰ समभृतौ ॥ सङ्ग्रहे । सम्भ्रियते । भृञ्॰ । अकर्त्तरिचेतिघञ् । साधने । उपकरणे ॥ सर्वपूर्णत्वे ॥

रणे ॥

सम्भेद । पु॰ सिन्धुसङ्गमे । सरितो मिथ सङ्गमे । नद्योर्नद्योर्नद्योः समुद्रयोश्च मेलने ॥ सम्भिद्यन्तेऽस्मिन् । भिदिर्॰ । इत्यधिकरणे घञ् ॥ स्फुटने । सङ्गे । मेलने ॥

सम्भोग । पु॰ भोगे । रतौ । निधुवने । सुरते ॥ स्त्रीणां सम्भोगएवमण्डनम्॰ तदभावे सर्वमण्डनस्याप्यमण्डनत्वम् । जिनशासने । भुण्डायाम् ॥ हर्षे ॥ शृङ्गारविशेषे ॥ तल्लक्षणं यथा । दर्शनस्पर्शनादीनि निषेवेते विलासिनौ । यत्रानुरक्ता अन्योन्य सम्भोग समुदाहृतः इति साहित्यदर्पणम् ॥

सम्भोगी । पु॰ कामिनागरे ॥ त्रि॰ सम्भोगवति ॥ सम्भोगोविद्यतेऽस्य । इनि ॥

सम्भोजनी । स्त्री॰ बहुपुरुषभोजनार्थिक्यार्थामेळाम् ॥ यथाश्मनु । सम्भोजनीसाऽभिहितापैशाचीदक्षिणाद्विजैः । इहैवास्तेतुसालोके गौरन्धे वैकवेश्मनीति ॥ सम्भुज्यतेयया । भुज॰ । ल्युट् । ङीप् । दक्षिणादानक्रियेत्यर्थः ॥

सम्भोज्य । त्रि॰ सम्भोजयितव्ये ॥

सम्भ्रम । पु॰ भयादिजनितत्वरायाम् । संवेगे । साध्वसे । भये ॥ आदरे ॥ अप्राप्तप्राप्तौहिसम्भ्रमोमगध्यनास्तकामस्य ॥ सम्भ्रमणम् । भ्रमुचलनइत्यस्मिन् । भावे॰घञ् । नोदात्तोपदेशस्यइतिवृद्धिः ॥ सम्भ्रमे । मूर्च्छे ॥ इत्यजयपाल ॥

सम्भ्रान्त । त्रि॰ सविभ्रमे ॥

सम्मत । त्रि॰ निर्णीते ॥ अनुमते । सम्मानभाजि । महाजनाङ्गीकृते ॥

सम्मति । स्त्री॰ अभिलाषे ॥ अनुज्ञायाम् ॥ अभिप्रायस्यैक्ये ॥ पूजने ॥ यथा॰देवदेवबन्धोऽसि । अतएवाज्यादेराधिक्यसम्मतौ हितम् ॥

सम्मद । पु॰ हर्षे ॥ त्रि॰ तद्वति ॥ मदोदर्पसम्मदौ हर्षइत्यमरः ॥

सम्मर्द । पु॰ सम्बाधे । परस्परपीडायाम् । भीड॰ इ॰ भ॰ प्र॰ ॥

सम्मर्दन । पु॰ गन्धर्वभेदे ॥ यथा । सगन्धर्वोवित्वगन्धर्वोतिलकस्तथा । प्रभृतीनांरसेयोऽसौनिष्पीडयपरिगृह्यते । ससम्मर्दोदृगतोगन्धसम्मर्दनइतीष्यतइति ॥

सम्माद । पु॰ मत्स्यविशेषे ।

सम्मानम् । न॰ समादरे । गौरवे ॥ यथा । सम्मानाद्ब्राह्मणोनित्यमुद्विजेतविषादिव । अमृतस्येवचाकाङ्क्षेदवमानस्यसर्वदा ॥ इति ॥

सम्मानित । त्रि॰ समादृते । गौरविते ॥

सम्मांख्य । त्रि॰ सम्यङ्मार्जन

कर्त्तरि ॥

सम्मार्ज्जनम् । न॰ संशुद्धौ । स शोधने । मलापनयने ॥ सम्यङ्-मार्ज्जनम् ॥

सम्मार्ज्जनी । स्त्री॰ शोधन्याम् । बहु न्याम । सोहनी॰बढनी॰इ॰भा॰॥ सम्मार्ज्ज्यतेऽनया । मृज् शुद्धौ । करणे ल्युट् । ङीप्ठद्धि ॥

सम्मार्ज्जित । त्रि॰ विरजस्के । मा र्जा॰इ॰भा॰॥ सम्यङ् मार्ज्जित ॥

सम्मित । त्रि॰ सदृशे । परिच्छिन्ने । मिते । मिया॰मिन॰इ॰भा॰॥ सम्यङ् मित ॥

सम्मिश्र : । त्रि॰ संयुक्ते ॥

सम्मुख : । त्रि॰ अभिमुखे । अग्र पृष्ठे ॥

सम्मुखीन : । पु॰ दर्पणे । समस र्वमुख॰ सम्मुखम् । समसर्व्वस्मा त्खीतिनिपातसिद्धम् । सर्वस्य मुखस्यदर्शन । यथामुखसम्मुख स्यदर्शन खड्गतिख ॥

सम्मूढ । त्रि॰ सम्यङ्मोहयुक्ते । मुग्धे ॥

सम्मूर्च्छन : । पुं॰ लपादौ ॥

सम्मूर्च्छनम् । न॰ अभिव्याप्तौ । उ च्छ्राये । मोहे ॥ मूर्च्छामोहसमुच्छ्रा ययो । ल्युट् । उपधायाश्चेति दीर्घ ॥

सम्मूर्च्छमोहक । पुं॰ मत्स्यादौ ॥

सम्मूर्च्छा । स्त्री॰ सकलेन्द्रियमनसां स्वविषयग्रहणायोग्यतावस्थाविशेषे ॥

सम्मूर्च्छित । त्रि॰ सम्यिगिङते ॥ संहतकरणे । विज्ञानशून्ये ॥ प्रतिफलिते ॥

सम्मृष्ट । त्रि॰ सशोधिते । शुद्धान्ने ॥ संमृज्यतेस्म । मृज् शुद्धौ । कर्म णिक्त ॥ मक्षिकाद्यपनयनेनशोधितेव्यञ्जनादौ ॥

सम्मोद । पु॰ प्रीतौ ॥

सम्मोह । पु॰ विवेकाद्यभावे । कार्य्याकार्य्यविवेकाभावे ॥ निश्चात मतित्वे ॥ सम्मोह्यतेऽनेन । सम् पूर्व्वान्मुहर्वैचित्त्ये ॥

सम्मोहनम् । न॰ अस्त्रविशेषे । स म्मोह्यतेऽनेन । मुह्वैचित्त्ये । ल्युट् ।

सम्मोहा । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । शोकार्त्तिहार : सम्मोहासार : । वर्णा . पश्चवंनागाधोशोऽस्म् ॥ य था । दूरयाताशौचेराबन्धानौ । शापोमायावौनिर्वेदाभावो ॥

सम्मोहित . । त्रि॰ जातसम्मोहे । स म्यङ्मोहविषयोकृते ॥ स्वरूपावर णेनविक्षिप्ते ॥

सम्यग्ज्ञानम् । न॰ एकरूपेज्ञाने । औपनिषदेज्ञाने । यथानिरूपणावृ त्तिज्ञानवस्तुतत्त्वादेकरूपम॰ प र्व्वनिर्विशेषचैतन्यात्मकोऽस्मिति

ज्ञानम् सम्यग्ज्ञानम् ॥
सम्यग्दर्शनम् । न॰ अज्ञयात्मदर्शने । शास्त्रोपपत्तिभ्यामवधारितेऽद्वयात्मदर्शने ॥ क्वोशान स्यदत्वादात्म्यैकत्वबुद्धिरेवसम्यग्दर्शनमित्याहुर्भाष्यकाराः ॥
सम्यक् । अ॰ दृढे ॥ प्रशस्तायाम् ॥
सम्यक् । त्रि॰ मनोज्ञे ॥ सङ्गते ॥ सत्यवचने । ऋते ॥ समयादिषु च ॥ अर्थेनसहसम्यगञ्चतिसङ्गच्छतयितिसम्यक् । अञ्चु॰ चट स्विगादिना॰ क्विन् । सम समीतिसम्यादेश ॥
सम्यगव्यय । पुं॰ आयतुरोयाश्वव्यये ॥
सम्राट् । पु॰ राजसूययागकर्त्तरि । राजसूयिनि । चतुरब्धिसीमावच्छिन्नायाभूमेरीश्वरे । चक्रवर्त्तिनि । सार्वभौमेनृपवरे ॥ द्वादशराजमण्डलस्येश्वरे ॥ क्षियत्परिमाणायाभूमेराज्ञोनृपान्येऽभ्यत्ववद्राज्ञयाशास्ति॰ तस्मिन्नपि । राज्ञभाज्ञयाशासके ॥ यथाह येनेष्टराजसूयेन॰ मण्डलस्येश्वरश्च य ! शास्तियश्चाज्ञयाराज्ञ स सम्राडित्यमर ॥ सम्यक्॰ राजति ॥ राज्॰ । क्विप् । मोराजि समः क्वौ ।
सयावसानम् । न॰ तीर्थविशेषे ॥

सयोनि । पु॰ इन्द्रे ॥ त्रि॰ समानयोनौ ॥
सर । पु॰ काट्टरे । दध्यग्रे । दध्युत्तरे । दध्नउपरिस्थमण्डे ॥ गतौ ॥ वोधे ॥ लवणे ॥ निर्झरे ॥ नीरे । जले ॥ सरावरे ॥ त्रि॰ सारके । भेदके ॥ सरति । सृ॰ । अच् । दध्नस्तूपरियेभागः घन॰ स्नेहसमन्वित । सनोक्तोसरइत्युक्तोदधनोमण्डस्तुमस्तिवति ॥ सरस्वादुगुरुवृष्योवातवह्निप्रणाशन सोऽल्पोवस्तिप्रधमन पित्तश्लेष्मविवर्द्धन ॥
सरकाक । पु॰ हंसे ॥
सरकाकी । स्त्री॰ वरटायाम् । हंस्याम् ।
सरक । पु॰ न॰ शीधुपाने । शीधुपाने ॥ इक्षुशीधुनि ॥ अच्छिन्नाध्वगपङ्क्तौ । अच्छिन्नाध्वगानापङ्क्तिर्यस्मिन । सरक॰ सडक॰ इ॰ भा॰ प्र॰ वर्त्मनि ॥ न॰ गगने । आकाशे ॥ तीर्थविशेषे ॥ सरसि ॥ त्रि॰ गन्तरि । गतिशीले ॥ स्थिरतौ । स्वङ्गतौ । क्ला आदिभ्य॰ सञ्ज्ञायांवुन् ॥ सरति । स्रगतौ । प्रसृत्य ' समभिहारेवुन्॰ वृत्तिवाबुन ॥
सरघा । स्त्री॰ मधुमक्षिकायाम् ॥ रङ्घणम् । रघिगतौ । स्वनोघचे

तिचित्करणाद्न्यं भ्योपीतिष आगमशास्त्रस्यानित्यत्वान्नुम् । सद रविशगत्यावर्त्तते ॥

सरलम् । न० नवनीते ॥

सरजा । स्त्री० मलिनायाम् । रज स्वलायाम् ॥ वृ० चि० शेष ॥

सरट् । पु० वायौ ॥ वारिदे ॥ सर घायाम् ॥ सरति । सृ० । सर्त्तेरटि ॥

सरट । पु० कृकलासे । सरति । सृ० । शकादिभ्योऽटन् ॥

सरटि । पु० वायौ । मेघे ॥

सरटु । पु० सरटे ॥

सरणम् । न० गमने । लोहमले ॥ सर्तेतच्छील । सृ० । युचञ्चस्येत्यादिना युच् ॥ धावने । भा वेल्युट् वा ॥

सरणा । स्त्री० गन्धालिकायाम् । प्रसारण्याम् ॥ चिन्ताथाम् ॥ स र्त्त । सृ० । बाहुलकात्० युच् । टाप् ॥

सरणि । स्त्री० पङ्क्तौ । मार्गे । पद्धतौ । श्रयणे ॥ सरत्यनया । सगतौ । अर्त्तिसृधृधमीत्यनि ॥

सरणी । स्त्री० कटभरायाम् ॥ प थि । पङ्क्तौ ॥ ङीष् ॥ सर णाद्वि० कृतिद्विमगिरिप्रसिद्धे निष्पद्यानविशेषे ॥

सरण्ड । पुं० धूर्त्ते ॥ सरटे ॥ भ पक्षिविशेषे ॥ सरति । सृ० । भाण्डमण्डेत्याण्डन् ॥ का मुके ॥ खगे ॥

सरण्यु । पु० वारिवाहे ॥ मात रिश्वनि ॥ सरति । ससर्त्ति वा । सृ० । यजुवर्णिभ्योऽन्युजागूनकुच कृत्यन्युच् ॥ सरण्युः शीघ्रगामी तिवेदभाष्यम् ॥ जले ॥

सरत् । पु० तन्तौ ॥ सूत्रे ॥

सरथ । वि० रथेनसहवर्त्तमाने ॥

सरद्वान् । पुं० गौतमसुतौ ॥

सरपत्रिका । स्त्री० पद्मावर्ते ॥

सरभसम् । त्रि० ससत्त्वरे ॥

सरमा । स्त्री० कुक्कुर्याम् ॥ देवशुन्या म् ॥ राक्षसीभेदे । विभीषणस्वप त्न्याम् ॥ सरति सृ० । बाहुल काद्मः ॥ माध्यपद्यस्त्रीविशेषे । अमरादौनामात्‌र ॥ त्रि० शी घ्रे ।

सरयु । पु० पवने । वायौ ॥

सरयु । स्त्री० नदीविशेषे । सरति । सृ० । सर्त्तेरयु ॥

सरयू । स्त्री० नदीप्रभेदे । सरति । सृ० । सर्त्तेरयूरित्येके ॥ सरयू सलिलंलघुस्वादुपुष्टिप्रदायकम् ॥

सरल । पु० पीतद्रौ । पूतिकाष्ठे ॥ अस्यगुणाः । सरलोमधुरस्ति क्तः कटुपाकरसोलघुः । स्निग्धो ष्णः कर्णकण्ठाक्षिरोगरक्षोहरः ॥

सृत । कफानिलखेदयकाक्का सालच्चीवशापहः ॥ इति ॥ देव दारुविशेषे ॥ बुद्धौ ॥ अग्नौ ॥ सरति । स० बाहुलकादलच् । यथा दित्वादाकल । बाहुलकाङ्गुण । ॥ त्रि० उदारे ॥ ऋजौ । अवक्रे ॥ यथा । सरलाविरलायन्ते घनाय कोकिलद्रुमाः ॥ नगमीनघपुन्नागाघ्निन्स सारकानने ॥

सरलद्रव । पु० हकधूपे । श्रीवेष्टे ॥ सरलस्यदेवदारो द्रव ॥

सरला । स्त्री० सर्वानुभूतौ । त्रिपुटायाम । त्रिवृति । श्वेतत्रिधारेति ख्यातौषधौ ॥ सरति । स० । बाहुलकात्कलन् । टाप् ॥

सरलाङ्ग । पु० श्रीवेष्टे ॥

सरलाधिका । स्त्री० सोनेय्याम् ॥

सर । न० नीरे ॥ तडागे । स ज्ञानजोभयजलाश्रये ॥ अस्वजलगुणा । सारस लघुत्वाग्रवत्व स्वादुकषायवदिति ॥ देवखातजलाशये ॥ स्त्रियते । सगतौ । कर्मण्यसुन् ॥

सरसम् । न० सरसि ॥ रसवतिमासे ॥ त्रि० रसस युक्ते ॥

सरसम्प्रतम् । न० कुष्ठाम् । त्रि कराटे ॥

सरसा । स्त्री० द्राक्षायाम् ॥ रसविशिष्टायाम् ॥

सरसिजम् । न० पद्मे ॥ सरसिजातं म् । जनजनने० जनीप्रादुर्भावेवा । सप्तम्यांजनेर्ड । तत्पुरुषइति० ङेरलुक् ॥

सरसी । स्त्री० कासारे । सरसि ॥ स्त्रियते । स० । कर्मण्यसुन् । गौरादित्वान्ङीष् ॥ प्रकृतिच्छन्द । २१ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा । नजभजजाजरौयदिति द्रागदितासरसीकवीश्वरै ॥ विकुरकलापपर्थैवलकृतप्रमदासुलसद्रसोर्मिषु० स्फुटवदनाम्बुजासुविलसद्गुणवालमृणालवल्लिषु । कुचयुगचक्रवाकमिथुनानुगतासुकलाकुतूहली० व्यरचयदच्युतोव्रजमृगीनयनासरसीषुविभ्रम ॥

सरसीक । पु० सारसपक्षिणि ॥

सरसीरुहम् । न० पद्मे । नलिने । सारसे ॥ सरस्यारोहति । रुह० । इगुपधेतिक । तत्पुरुषेकृतीत्यलुक ॥

सरस्वान् । पु० सागरे । अर्णवे ॥ नदे । सरोनीर० गतिर्वाऽस्त्यस्मिन् । भूम्निमतुप् । तसौमत्वर्थइतिभत्वान्नपदकार्यम् ॥ त्रि० रसिके ॥

सरस्वती । स्त्री० वाण्याम् । वाचि ॥ वाग्देव्याम् । पर्यायास्तु । ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वतीति ॥ अध्याध्यान यथा । वाणीम्

पूर्णं निशाकररोज्वलसुखीकर्पूर कुन्दप्रभाचन्द्रार्धाङ्कितमस्तकानिज करे सबिभ्रतीसादरात् । वीणामक्षगुणं सुधाढ्यकलशं विद्यांश्च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषित तनुर्हंसाधिरूढाभजे ॥ नदीवि शेषे । ब्रह्मसमुद्गमायाम् ॥ वाक्प्रदायाम् । ब्रह्मसुतायाम् ॥ अ स्याजलगुणायथा । सरस्वत्याजल स्वादुपूरा सर्वरुजापहम् । रुच्यञ्च दीपन पथ्य देवजान्तिकर लघु ॥ सातुदेशभेदेनसप्तनामीयथा । पुष्करेपितामहयज्ञे समाहूता सुप्रभा १ नैमिषेसत्रयाजिभिस्तैर्विभिराहूता कांचनाक्षी २ गयदेशेगयराजयज्ञआहूता विशाला ३ उत्तरकोशलायामौद्दालकमुनियज्ञे समाहूता मनोरमा ४ । कुरुक्षेत्रेकुरुणा यज्ञे समाहूता ओघवती ५ । गङ्गाद्वारे दक्षप्रजापतियज्ञे समाहूता सुरेणु ६ । हिमालयेब्रह्मणः पुनर्यज्ञे समाहूता विमलोदा ७ तत्सप्तसरस्वत्य समागता । अतस्तत्तीर्थंसप्तसारस्वतनाम्नाप्रसिद्धमितिमहाभारतेशल्यपर्वं ॥ स्त्रीरत्ने ॥ गवि ॥ नदीषु ॥ मनुपत्न्याम् ॥ ज्योतिष्मत्याम् ॥ ब्राह्म्याम्ओषधौ ॥ सोमवल्ल्याम् ॥ दुर्गायाम् ।

कुरुक्षेत्रे विशेषे । सरोऽस्त्यस्या । सरांसिसन्त्यस्यावा । मतुप् । ङीप् ॥ तीर्थविशेषे ॥

सरस्वतीसङ्गम । पु॰ तीर्थविशेषे ॥

सरस्वतीसागरसङ्गम । पु॰ तीर्थविशेषे ॥

सरस्वत्यरुणासङ्गम । पु॰ तीर्थविशेषे ॥

सरहस्य । त्रि॰ मन्त्रदेवताज्ञानसहिते

सरा । स्त्री॰ विस्तृतायाम् ॥ गन्धालिकायाम् । प्रसारण्याम् ॥ झरे ॥

सराग । त्रि॰ रागसहिते ॥

सराव । पु॰ शरावार्थे । सेर॰ हि॰ भा॰ प्र॰ कुडवद्वयपरिमाणे । मानिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके ॥ यथा । वरसरावचक्रसम्पुटताजागारकौषिषु । भिक्षार्थमटनकाश्चारोत्यं नान्यकर्मोचितेषु ॥ सरणम् । क॰ । कटोरप् । सरतिवा । अच् । सरसा राद्यऽवति । अव । अण्॰ अच्वा ॥

सरि । पु॰ स्त्री॰ निर्झरे । उत्से ॥ सरणम् । गृ॰ । अच् ॥

सरिका । स्त्री॰ हिङ्गुपत्र्याम् ॥

सरित् । स्त्री॰ नद्याम् । तरङ्गिण्याम् ॥ सरति । सृ॰ । हरत्सृविदिभ्यो इतिसूत्रेरिति ॥ सूत्रे ॥

सरितांनाथ । ( पु॰ समुद्रे ॥
सरितांपति । (

सरितांवरा । स्त्री॰ गङ्गायाम् ॥ यथा । त्वदेवसरितानाथ त्वदेवि सरितांवरे । उभयोः सङ्गमेजा त्याम् स्नामिदुरितानिव ॥ इतिगङ्गासागरसङ्गमस्नानमन्त्र ॥

सरित्पति । पु॰ समुद्रे । पारावारे । सरितांपति ॥

सरिद्वरा । स्त्री॰ गङ्गायाम् । विष्णुपद्याम् ॥ सरित्सुवरा ॥

सरिन्नाथ । पु॰ समुद्रे ॥

सरिमा । पु॰ अनिले । वायौ ॥ सरति । सृ॰ । हृभृधृसृस्तृशृभ्य इमनिच ॥

सरिलम् । न॰ सलिले । जले ॥ रलयोरैक्यम् ॥

सरिषप । पु॰ सर्षपे । कटुस्नेहे ।

सरी । स्त्री॰ निर्झरे ॥

सरीसृप । पु॰ सर्पे । पृदाकौ । आशीविषे ॥ कुटिलं सर्पति । सृप॰ । नित्यकौटिल्ये गताविति यङ् । पचाद्यच् यङोचिचेतियङोलुक् ॥ वृश्चिकराशौ ।

सरीसृपन् । त्रि॰ अतिशयेनसर्पति ॥

सरूप । त्रि॰ सदृशे ॥ समानरूपमस्य । ज्योतिर्जनपदेतिसमानस्यस ॥

सरोजम् । न॰ अब्जे । पद्मे ॥ सरसिजातम् । जनी॰ सप्तम्यांजनेर्डः । तत्पुरुषकृत्यबहुलमितिलुक् ॥

सरोजखण्ड । पु॰ पद्मवने ॥ सरोजानांसमूहः । कमलादिभ्यः खण्डः ॥

सरोजन्म । न॰ पद्मे ॥

सरोजी । पु॰ ब्रह्मणि । सुरज्येष्ठे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री॰ कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे ॥ सरोजानिसन्त्यस्याम् । पुष्करादिभ्योदेशे इनिः ॥

सरोत्सव । पु॰ सारसखगे ॥

सरोध । त्रि॰ रुद्धे ॥ रोधेनसहवर्त्तमानः ॥

सरोरुट् । ) पु॰
सरोरुहम् । ) न॰ अम्बुजे ॥

सरोरुहासन । पु॰ ब्रह्मणि । कमलासने ॥

सरोवर । पु॰ पद्माकरे । तडागे ॥

सर्ग । पु॰ स्वभावे ॥ निर्मोचे ॥ निर्मोचस्त्यागोमोचाभावोवा । मोचाभावेयथा । इहैवतैर्जितः सर्गोयेषांसाम्येस्थितंमनः ॥ निश्चये ॥ यथा । एषव्यवसायः यदि सर्ग एषतेः इति ॥ अध्याये ॥ मोहे ॥ उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणिघञ् ॥ सृष्टौ ॥ यथा । सर्गश्चप्रतिसर्गश्चेति ॥ कौमारब्राह्मप्राजापत्यमानवादिभेदे पुराणेषुविस्तरेणोक्तः ॥ द्वैतप्रपञ्चे । स्थूलदेहोत्पत्तौ । अचे

सर्पशोदन्दशूकोविलेशय ॥ उरग पन्नगीभोगीजिह्मग पवनाशनइति ॥ सर्पति । सृपस्लगतौ । पचाद्यच् ॥ नागकेशरे ॥ अश्वगन्धायाम् छिन्ने जातिविशेषे ॥ अश्लेषानक्षत्रे द्वितीय भेदे ॥ ८० ॥ अश्लेषानक्षत्रप्रभेदे ॥ ८८० ॥ सर्पणे । गमने ॥

सर्प्पकङ्कालिका । स्त्री० वृक्षभेदे ॥ सर्प्पकङ्कालिका० तीक्ष्णा० विषदंष्ट्रा० विषापहेतिपर्याया ॥

सर्प्पकङ्काली । स्त्री० सहायाम । सर्प्पकङ्कालिकायाम ।

सर्प्पगन्धा । स्त्री० अहिभुजि । रक्तापचिकायाम ॥ वृक्षविशेषे । ककाकी० सर्प्पगन्धाचरसनाचपलङ्कषेति पर्याया ॥

सर्प्पघ्न । पु० सर्पघ्नगुञ्जौ ॥

सर्प्पघातिनी । स्त्री० सर्पकङ्कालो भेदे । सर्प्पसहायाम् । सर्पाङ्ग्या ॥

सर्प्पन् । त्रि० गच्छति ॥

सर्प्पत्वच । पु० नकुले ॥ द्रु० हे० न्द्र० ॥

सर्प्पदंष्ट्र । पु० दन्तोवृक्षे ॥

सर्पदंष्ट्रा । स्त्री० वृश्चिकाल्याम् ॥

सर्प्पदंष्ट्रिका । स्त्री० अजशृङ्ग्याम् ॥

सर्प्पदण्ड । स्त्री० सैंहल्याम ॥

सर्प्पदण्डी । स्त्री० गोरक्ष्यां ॥

सर्प्पदन्ती । स्त्री० नागदन्त्यां ॥

सर्प्पदमनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

सर्प्पनाशा । स्त्री० सर्पघातिन्याम् ॥

सर्प्पनिर्मोचन । पु० धूपविशेषे ॥ यथा। कार्पासास्थिभुजङ्गस्तथानिर्मोचन भवेत् । सर्प्पनिर्मोचनोधूप प्रशस्त सततगृहे ॥

सर्प्पपुष्पी । स्त्री० नागदन्त्याम ॥

सर्पफणज । पु० सर्पफणजात मणौ ॥

सर्पभुज् । पु० मयूरे ॥ सर्पान्भुङ्क्ते । भुज० । क्विप् ॥ हिमुखाहौ ॥ त्रि० सर्पभक्षके ॥

सर्पराज । पु० अहिराजे । वासुकौ ॥ सर्पाणाराजा । राजाहः सखिभ्यष्टच ॥

सर्पलता । स्त्री० नागवल्ल्याम् ॥

सर्पविद्या । स्त्री० गारुडे ॥ सर्पाणाविद्या ॥

सर्पसत्रम् । न० जनमेजयारब्धे सर्पनाशकेयज्ञविशेषे ॥

सर्पसत्री । पु० जनमेजये ॥

सर्पसहा । स्त्री० सर्पघातिन्याम ॥

सर्पसुगन्धा । स्त्री० रास्नायाम् ॥

सर्पहा । पु० नकुले ॥ द्रु० हे० न्द्र० ॥

सर्पाक्षम । न० रुद्राक्षे ॥

सर्पाक्षी । स्त्री० कन्दविशेषे । गन्ध

सर्वकर्त्ता । पुं॰ स्रष्टरि । ब्रह्मणि ॥

सर्वकर्म्मसन्न्यास । पु॰ देहादिव्यापाराणामविद्ययात्मन्यध्यारोपितानांविद्ययाबाधे ॥ सर्वकर्मणां सम्यङ्न्यासः ॥

सर्व्वकर्म्मीण । त्रि॰ पुरुषे ॥ सर्वकर्माणिव्याप्नोति । ततसर्वादेरिति ख ॥

सर्वकेशी । पु॰ नटे ॥ सर्वकेशोऽस्यास्ति । सर्वादेश्चेति॰ इनि ॥

सर्वचार । पु॰ बहुचारे । महाचारे । सावन्तु॰ भा॰ प्र॰ । मलवस्त्रविशेधर्मे ॥

सर्व्वग । पु॰ शङ्करे ॥ ब्रह्मणि । विभौ ॥ आत्मनि ॥ सर्वं गच्छति । गमृल॰ । अन्तात्यन्तेतिड ॥ न॰ सलिले ॥ त्रि॰ सर्वत्रगामिनि ॥

सर्व्वगत । त्रि॰ विभौ ॥ सर्वानुस्यूतसम्बन्धे ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अन्तर्बहिश्चतत्सर्वं व्याप्यनारायणः स्थितः ॥ सर्वगतत्व सर्वाव्यवधानमात्रमितिव्याख्यातारः । व्यापित्वमितियावत् ॥

सर्वगन्धम् । न॰ कुङ्कुमादिगन्धद्रव्यवृन्दे ॥ यथा । कुङ्कुमागुरकर्पूरकस्तूरीचन्दनेषु ॥ चतुर्जातकादौ । यथा ॥ चतुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैवसर्वगन्धविनिर्दिष्टमिति ॥

सार्व्वगा । स्त्री॰ प्रियङ्गौ ॥

सर्व्वग्रन्थ । पु॰ )
सर्व्वग्रन्थिकम् । न॰ ) पिप्पलीमूले ॥

सर्व्वङ्कष । त्रि॰ खले ॥ सर्वङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रेतिखच् अरुर्द्विषदितिमुम् ।

सर्वजनीन । )
सर्व्वजनीय । ) त्रि॰ सार्वजनिके ॥ सर्वस्यासौजनश्च । पूर्वकालैकेतितत्पुरुष । सर्वजनायहित । सर्वजनाट्ठञ्खञ्च । षष्ठीतत्पुरुषात्तु॰ छ ॥

सर्व्वजित् । पु॰ वत्सरविशेषे ॥ तत्फल यथा । उद्यतोऽब्दं यमेवो जन नैवोपजायते । महार्घं सर्वजिद्वर्षे सर्वमेवविराजते ॥ त्रि॰ सर्वजयकर्त्तरि ॥

सर्व्वजीव । पु॰ ईश्वरे ॥ सर्वान्जीवयति । जीव॰ । अच् ॥

सर्व्वज्ञ । पु॰ शिवे । ईश्वरे ॥ सर्वं जानाति । सर्वविषयावच्छिन्नं नित्यज्ञानवानिति । ज्ञा॰ । आतोनुपसर्गेक ॥ यथा । सर्वज्ञायस्त्वात्मन सर्वस्यापरोक्षत्वात् ॥ यथा । सर्वज्ञायस्मात॰ सर्वज्ञायेनवा ॥ सर्वज्ञासौज्ञश्चेतिवा ॥ आनन्दमये ॥ यथा । अशेषप्राणिबुद्धीनांवासनास्तत्र संस्थिता । ता

सर्व्वदमन । पु॰ शकुन्तलात्मज॰ भरते ॥ कार्त्तवीर्य्ये ॥

सर्व्वदर्शन । पु॰ विष्णौ ॥ सर्व्वाणिदर्शनानि आत्मनान्यत्वेनाभिमतानि यस्य सर्व्वात्मकत्वात् ॥

सर्व्वदर्शी । पु॰ विष्णौ ॥ सर्व्वथा प्राणिनां कृताकृतं सर्व्वं पश्यतिस्वाभाविकेनबोधेनेतितथा ॥ बुद्धे ॥ त्रि॰ सर्व्वज्ञ ॥ सर्व्वं द्रष्टुं शीलमस्य सुप्यजातौणिनिस्ताच्छील्ये ॥

सर्व्वदा । अ॰ सर्व्वस्मिन्काले ॥ सर्व्वस्माद्व्ययात् कालेदा ॥

सर्व्वदुःखक्षय । पु॰ मोक्षे ॥ सर्व्वदुःखानांक्षयोविनाशोऽस्मिन्निति तथा ॥ सर्व्वपीडानाशे ॥

सर्व्वदृक् । त्रि॰ सर्व्वज्ञे ॥ अखिलसत्यपदार्थस्यावलोकयितरि ॥ सर्व्वंपश्यति । दृशिर॰ । क्विप् ॥ ईश्वरे ॥ सर्व्वमतीतानागतादि॰ पश्यतिस्वरूपबोधेनेतितथा । क्विन्प्रत्ययश्चेत्यनवप्लुतोऽश्रयणात् कुत्वम् ॥

सर्व्वदेवमुख । पुं॰ अग्नौ । अग्नौ ।

सर्व्वधर्त्तम । त्रि॰ सर्व्वस्यधारयितृतम ।

सर्व्वधारी । पुं॰ वत्सरविशेषे ॥ तत्फलं यथा । कीदृशा शालिमुद्गाश्चकार्पासास्थैवच । सुलभंजायते सर्व्वं जगत्सर्व्वधारिणि ॥ त्रि॰ सर्व्व [illegible] रत्नपालि ॥

सर्व्वधावक । पु॰ सर्व्वधुरीणे ॥ सर्व्वाचासौधुर्व्वह॰ सर्व्वधुरा । पूर्व्वकालैकसर्व्वेतिसमास [illegible] परिस्थ । वहतीति॰ [illegible] च् । सर्व्वधुराया वह [illegible]

सर्व्वधुरीण । पु॰ [illegible] सर्व्वभाराणांवाहकेगवादौ । सर्व्वधुरावहे ॥ सर्व्वधुरांवहति [illegible] सर्व्वधुरादि तत्व

सर्व्वनाम । न॰ सर्व्वादिपञ्चत्रिंशत् ॥ तानियथा । सर्व्व॰ विश्व॰ उभ॰ उभय॰ डतर॰ डतम॰ अन्य॰ अन्यतर॰ इतर॰ त्वत्॰ त्व॰ नेम॰ सम॰ सिम॰ पूर्व्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरंबहिर्योगोपसंव्यानयोः । त्यद्॰ तद्॰ यद्॰ एतद्॰ इदम्॰ अदस्॰ एक॰ द्वि॰ युष्मद्॰ अस्मद्॰ भवतु॰ किम्॰ इति ॥

सर्व्वनियन्ता । त्रि॰ परमेश्वरे । चिदात्मनि ॥ परमार्थतोऽसङ्गत्वाऽपिचैतन्यस्य॰ आध्यासिकसम्बन्धसम्बन्धाध्यानद्वारासर्व्वजीवप्रवर्त्तकत्वेन॰ सर्व्वनियन्तृत्वमितिज्ञेयम् ॥

सर्व्वन्दम । पु॰ शाकुन्तलेये॰ भ

रति ॥

सर्व्वपथीण । पु॰ सारथौ । सर्व्वपथान् व्याप्नोति । तत्सर्वादे पथ्य ङ्गकर्म्मपात्रपात्र व्याप्नोतीति ख ॥

सर्व्वपथीन । पु॰ रथे ॥ सर्व्वपथान् व्याप्नोति । तत्सर्वादेरिति ख ।

सर्व्वपात्रीण । पु॰ ओदने ॥ सर्व्वपात्र व्याप्नोति । तत्सर्वादेरिति ख. ॥

सर्व्वपूर्णत्वम् । न॰ सम्भारे ।

सर्व्वभक्ष । त्रि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा । ) स्त्री॰ गलस्तन्याम् ।
सर्व्वभक्ष्या । ) छाग्याम् । अजा याम् ॥ इ॰ है॰ न्द्र ॥

सर्व्वभूतगुहाशय । पु॰ चिदात्मनि॰ परमेश्वरे ॥ सर्वभूतानांस्थावरजङ्ग मानां॰गुहासुबुद्धिषुशेते । शीङो धिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पु॰ लोकात्मनिपर मेश्वरे ॥ यथाहु । द्यांमूर्द्धानंयस्य विप्रावदन्ति॰ खंवैनाभिचन्द्रसूर्य्यौ चनेत्रे । दिश श्रोत्रे विद्धिपादौ क्षितिञ्चसोचिन्त्यात्मासर्वभूतप्रणे ता । इति ॥

सर्व्वभूतात्मक । त्रि॰ प्रत्यगभिन्ने पर मात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्म ज्ञानिनि ॥ यथा । जडाजडात्मकं सर्व्वमात्ममात्र प्रपश्यति । सएवस र्व्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति



सर्वभूतस्यात्मभूतश्च॰ आत्मास्वरू पम्यस्य ॥

सर्वभूताशयस्थित । त्रि॰ आत्मनि॰ चैतन्यानन्दघनेचिन्मात्रे ॥ सर्व्व भूतानामाशयेहृद्येन्तर्य्यामिरूपे ण॰ प्रत्यगात्मरूपेणचस्थितोय॰ सएवस ॥

सर्वभृत् । त्रि॰ नामरूपात्मकस्यजगतो धारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सदात्मना॰ सर्वङ्कल्पि त॰ धारयति॰ पोषयतिच॰ निर धिष्ठानभ्रमायोगात् । डुभृञ्धारण पोषणयो । क्विप । तुक् ॥

सर्व्वमङ्गला । स्त्री॰ दुर्गायाम् ॥ सर्वे भ्य सर्व्वेषांवामङ्गला ॥ सर्वाणिम ङ्गलानियस्यास्तिवा ॥ सर्वाणिहृद यस्थानिमङ्गलानिशुभानिच । ददा तिचेप्सितांलोकेतेनसासर्वमङ्गले तिदेवीपुराणम् ॥ अपिच । मङ्गलं मोक्षवचनमाङ्शब्दोदातृवाचकः । स र्व्वान्मोक्षान्याददातिसासर्वमङ्ग ला ॥ हर्षेसम्पदिकल्याणेमङ्गलपरि कीर्त्तितम् । तान्ददातियादेवी साएवसर्व्वमङ्गला ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ अन्यच्च । सर्व्वमङ्गलशब्दश्च सम्पूर्णैश्वर्य्यवाचक । आकारो दातृवचनस्तस्मात्सासर्व्वमङ्गला ॥ ॥ इ॰ ब्र॰ वै॰ पु॰ श्रीकृष्णजन्म खण्डे २७ ऽध्याय ॥

सर्व्ववेशी । पु० नर्त्तके । नटे । सर्वे
षांवेश सौस्यस्य । इनि० । स
कलवेशधारिणि । बहुरूपी० इ०
भा० ॥

सर्व्वव्यापी । त्रि० आकाशवत्सकल
पदार्थव्यापनशीले ॥ यथा । सर्व
व्यापिनमात्मान क्षीरेसर्पिरिवार्पि
तमिति ॥

सर्व्वश । अ० सर्वप्रकारेणेत्यर्थे ॥

सर्व्वशाखामतम । न० नक्षत्रविशे
षेषु ॥ यथा । भरणीकृत्तिकापित्र्य
विशाखाश्लेषाभानिच । सर्वशाखा
मत प्रोक्त व्रत तत्रविवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । त्रि० महानिर्वाणाग
मज्ञे ॥

सर्व्वशान्तिकृत् । पुं० हौ ध्यन्तौ ।
शाकुन्तलेयै ॥ त्रि० सर्वशांतिवि
धायिनि ॥

सर्व्वससर्गसरणम् । न० पौष
रके ॥

सर्व्वसङ्गत । पुं० षष्टिकाधाम ॥
त्रि० सर्व्वप्रिये । सकलसङ्गति
युक्ते ।

सर्व्वसत्त्वसमुद्भवा । स्त्री० प्रावृषि ॥
सर्वेषांप्राणिनांसमुद्भवउत्पत्तिर्यस्यां
वनतस्ययस्याम् ॥

सर्व्वसन्नहनार्थक । पुं० सर्व्वसै
न्यसन्नहने । सर्व्वाभिसारे ॥ सर्वे
षांसन्नहनम्० सर्वसन्नहनम् । स
र्वसन्नहनमर्थोयस्य० ॥

सर्व्वसन्नाह । पु० सर्वात्मनि ॥

सर्व्वसह । पु० गुग्गुलौ ॥ त्रि० स
कलसहिष्णौ ॥

सर्व्वसाक्षी । पु० परमात्मनि ॥ सर्वे
षांशुभाशुभकर्म्मणां०साक्षी० सा
क्षाद्द्रष्टा ॥ त्रि० सर्व्वविषयद्र-
ष्टरि ॥

सर्व्वसिद्धि । पुं० श्रीफले बिल्वे ॥
त्रि० सिद्धियुक्ते ॥

सर्व्वसुखप्रद । पु० परमात्मनि ॥
भगवति ॥

सर्व्वस्वम् । न० समस्तधने ॥

सर्व्वस्वी । पु० गोपकन्यायानापिता
ज्जातेसङ्करजातौ ॥ त्रि० सर्व्वस्व
विशिष्टे ॥

सर्व्वहर । त्रि० सर्व्वसंहारकारिणि॥

सर्व्वहितम् । न० मरिचे ॥ त्रि० स
र्वेषांहितकारिणि ॥

सर्व्वाकार । त्रि० समस्तदेशाद्याका
रविशिष्टे० भगवति ॥ यथाहुरा
चार्यो । सर्वाकारोभगवानुपास्य
तेयेनयेनभावेन । ततस्तावन्भ
क्त्वा चिन्तामणिवत्समर्थ्यतीति ॥
सर्वोपादानकारणत्वात्सर्वाकार
त्वम् ॥

सर्व्वाङ्गम् । न० सकलावयवे ॥

सर्व्वाङ्गसुन्दर । पु० औषधविशेषे
॥ यथा । रसगन्धकतुल्यांशौशोभा

म ॥ अभिषवे ॥ अध्वरे ॥ सोमनि
र्द्दलने ॥ पुन्ज् अभिषवे । ल्युट ॥
प्रसवे ॥ प॰ काले । समये ॥ च
न्द्रमा'स ॥ सवति॰ सुनोति॰ सुव
तिवा । मयुकक्वोयुच् ॥

सवया । पुं॰ वयस्ये । स्निग्धे ॥
समानवयोऽस्य । ज्योतिर्जनपदेति
समानस्यस ॥

सवर । पु॰ सलिले ॥ शिवे ॥

सवर्ण । त्रि॰ सदृशे । तुल्यवर्णे ।
समानजातौ ॥ यथा । पार्थिव
श्च सम्स्कार सवर्णास्पृद्ध्यसि॰
इति ॥ समानोवर्णोऽस्य । ज्यो
तिर्जनपदेतिस ॥ तुल्याख्यप्रय
त्ने वर्णे ॥

सवर्णा । स्त्री॰ मनिमातरि । छा
यायाम् ॥

सवर्णाख्यम् । न॰ तीर्थविशेषे ॥

सवसा । स्त्री॰ पिङ्गले ॥

सवासक । पुं॰ वर्णवृत्तान्तरे ॥
द्विजगणमास्वरभगणसुपाश्वर । भण
तिसवासकमितिशुभनायक ॥ य
था । गिरिवरनन्दिनिदुरितनिक्ष
न्तनि । विदितमतीर्मयिका दकरु
णामपि ॥

सविकल्पक । पुं॰ सम्प्रज्ञातसमा
धौ ॥ तथाहि । सविकल्पकोनाम
ज्ञातृज्ञानादिविकल्पमेदलयानपे
क्षयाऽद्वितीयवस्तुनितदाकाराका-
रितायाश्चित्तवृत्तेरवस्थानम् । त
थोदाहरणम् तदामृण्मयगजादि
भानेपिमृद्भानवत्॰ द्वैतभानेप्यद्वै
तवस्तुभासते॰ इति । तदुक्तम् ।
दृशिस्वरूपगगनोपमंपरमक्रद्विभात
त्वजमेकमक्षरम् । अलेपकंसर्वगत
यदद्वयंतदेवचाहंसततविमुक्तइति
॥ त्रि॰ मविकल्पमङ्गिते ॥

सविकार । त्रि॰ विकारसहिते म
हाभूतादिभूतवर्गे ॥ विकारैःस
हित ॥ कार्यमात्रेपादानतया
सर्वकार्यतादात्म्यापन्ने ब्रह्मणि ॥

सविकाश । त्रि॰ सप्रकाशे ॥

सविकाश: । त्रि॰ विकसितमव
र्त्तमाने ॥

सविग्रह । त्रि॰ मूर्त्तिमति ॥

सविता । पुं॰ सूर्य्ये । सर्वभावानांप्र
सवितरि ॥ यथाच मरन्ज्ञ्न ।
सवितासर्वभूतानांसर्वभावान्प्रसू
यते । सवनात्पावनाच्चैवसविता
तेनकीर्त्यतइति ॥ अग्निपुराणम'प
॰ यथा । धोमाद्द्रशाच्चोमग्रा'ाण प्रति उ
यतिसर्वदा। एतार्थंभगवान्विष्णु,
सवितासतुकोर्त्तित ॥ सर्वलोका
प्रसवनात्सवितासतुकोर्त्तित । ।
यतस्तद्देवतादेवसाविलोत्युच्यतेत
तइति ॥ विष्णुधर्मोत्तरेपि । र
साना'लतथाहानाद्रविरित्यभिधीय-
ते । प्रजानाञ्चप्रसवनात्सवितेत्य-

भिधीयतइति ॥ सवति ॥ सुष ति० कर्माणिलीकप्रेरयति । सूप्रे रणे । तृच् । यक्कर्त्त ॥

सवितृदैवत । पु० हस्तनक्षत्रे ॥ स वितादैवतयस्य ॥

सवित्रम् । न० प्रसवसाधने ॥ सूय तेभेन । षू० । अर्त्तिलूधूसूख नेतीत्र : ॥

सवित्रिय । सूर्यसम्बन्धीये ॥

सवित्री । स्त्री० जनन्याम् । तृजन्ता त०ङीप् ॥

सविध । त्रि० अन्तिके । निकटे ॥ समानाविधाऽस्य० सहविधयेतिवा ॥ सप्रकारे ॥

सविस्मय . । त्रि० आश्चर्ययुक्ते । वी चापन्ने ॥ विस्मयेनसहवर्त्ततइति तथा ॥

सवेश । त्रि० निकटे ॥ वेशान्विते समानोवेशोऽस्य०सहदेशेनेतिवा ॥

सव्य । पुं० विष्णौ ॥ त्रि०वामे । प्र तीपे प्रतिकूले । दक्षिणे ॥ सूयते । षू० । अचोयत् ॥ यद्वा । सुनो ति । बाहुलकाद्य . ॥

सव्यभिचार । पु० हेत्वाभासान्त रे ॥ यथा । अनैकान्तिक ' स व्यभिचार .। सत्रिविध. । साधा रणाऽसाधारणानुपस ंहारिभेदात् ॥

सव्यलीक : । त्रि० सापराधे ॥

सव्यसाची । पुं० अर्जुने । पार्थे ॥

सव्येनवामेनहस्तेनापि०शरान्० सचितु सन्धातु शीलं यस्य । णि नि ॥

सव्येष्ठ . । पु० सारथौ ॥ सव्येतिष्ठ ति । सुपिस्थइतिक । स्थास्थिन् स्थूणामितिष . । हलदन्तादित्य लुक् ॥

सव्येष्ठा । पुं० सूते ॥ सारथौ ॥ सव्येवामेतिष्ठति । ष्ठा० । सव्ये स्थश्छन्दसीति० क्ट ० डिच्च । अम्बाम्बेत्यत्र०स्थास्थिन्स्थूणामुपस ङ्ख्यानात्षत्वम्० सुपामादित्वाद्वा । हलदन्ता दित्यलुक्। सव्येष्ठरो० सव्येष्ठरइत्यादिरूपाणि ॥

सशस्त्र । त्रि० शस्त्रयुक्तेभट्यादौ ॥

सशस्त्रा । स्त्री० नागदन्त्याम् ॥

सश्मश्रु : । स्त्री० श्मश्रुयुक्तस्त्रियाम् । नरमानिन्याम् ॥

ससत्त्व । त्रि० प्राणियुक्ते ॥

ससत्त्वा । स्त्री० गर्भिण्याम् ॥

ससन्देह . । पुं० अर्थालङ्कारप्रभेदे ॥ यथा । ससन्देहस्तुभेदोक्तौ० तदनु क्तौचसंशय । भेदोक्तौयथा । अ य मार्त्तण्ड : किं सखलुतुरगै स प्तभिरित कृशानु किंसर्वा प्रसरति दिशोनैवनियतम् कृतान्त किं सान्ममहिषवहनोसाविति चिर स मालोक्याजौत्वांविदधतिविकल्पा नृपतिभटा ॥ भेदोक्ताविष्णुमेननके

र्म्यांमिणुरुषयमहिनरात्रिसन्ध्याध र्मायमसाक्षिणोभवत•ज्वलच्चितारो हणेनपतिदेहेनसहगमनमहकरो मोथनुगमनेसङ्कल्प ' ॥

सहचर । पुं• नीलझिण्ट्याम् ॥ पीतझिण्ट्याम् । पीयावांसाइ० भा• प्र• ॥ त्रि• अनुचरे ॥ सहचरति । चर• । पचाद्यच् ॥ वयस्ये ॥ प्रतिबन्धकी ॥

सहचरित '। त्रि• सहानुष्ठिते ॥ सहेचारिते ॥

सहचरी । स्त्री• नीलझिण्ट्याम ॥ पीतझिण्ट्याम् ॥ झिण्टीमात्रे ॥ भार्यायाम् । पत्न्याम् । वयस्यायाम् ॥ सहचरति । चर• । पचादौ चरडितिटित्वनिपातनात्•ङीप् ।

सहज । पुं• निसर्गे । स्वभावे ॥ तृतीयभवने ॥ त्रि• सहोत्थे । सहस्वभावे । सहोदरे ॥ सहतुल्ये • उदरे• जात• । अमी• । अन्येष्व पीतिड ' ॥

सहजन्मा । पुं• सोदरे ॥ सहसमाने उदरेजन्मयस्य स : ॥

सहजमित्रम् । न• स्वाभाविकेसुहृदि । यथा । अरिर्मित्रमुदासीनोऽनन्तरस्तत्पर पर '। क्रमेणमण्डलं चिन्त्य सामादिभिरुपक्रमे । ॥ अरि : • शत्रु । मित्रम्• सुहृद्• । उभयविलक्षण . • उदासीन :। तेचत्रयस्त्रिविधा : । सहजा ' • कृत्रिमा • प्राकृताश्चेति ॥ सहजमित्रम्• भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादिरितिमिताक्षरा ॥

सहजा । स्त्री• भगिन्याम् । सहोदरायाम् ॥ प्रकृतिप्रभेदे । आत्मनासहैवजातायाम् ॥ यथापक्ष्यादीनामाकाशगमनादिलक्षणाप्रकृति सहजा ॥ टाप् ॥

सहजात । त्रि• सहोदरे ॥ यमजे ॥

सहजारि . । पुं• स्वाभाविकेशत्रौ ॥ यथा । सहजारि सापत्न्यपितृव्यतत्पुत्रादिरितिमिताक्षरायामाचाराध्याय . ॥

सहडकम् । न• अस्थिसहितेपक्वमांसे । सास्थिपक्वमांसे । हडमासइति प्रसिद्धे ॥ यथा । छागादेर्मांसमस्थ्यादि कुट्टितखण्डितंपुन । शुष्कमांसविधानेनपचेदेतत्सहडकम् ॥ सहडकगुणयन्थे शुष्कमांसगुणस्मृतमितिभावप्रकाश . ॥

सहदेव '। पुं• पञ्चमपाण्डवे । माद्रीतनये । नकुलानुजे ॥ जरासंधसुते ॥ त्रि• देवेनसहिते ।

सहदेवा । स्त्री• बलायाम् ॥ दण्डोत्पले । शारिवौषधौ ॥ महदेवायाम् । अर्हन्मातरि ।

सहदेवी । स्त्री• महाबलायाम् । पीतपुष्पायाम ॥ यथा । ज्वरंहति

हिमन्तर्तौ । सहते । षह० । अ सुन् ॥

सह । न० बले ॥ मानसपाटवे ॥ ज्योतिषि ॥ सहते० सह्यतेऽनेनाऽनया । षह० । असुन् ॥

सहस० । त्रि० सहासि ॥ हसेन सह वर्तत इति ॥

सहसा । अ० हठादर्थे ॥ अविमर्शे ॥ यथा । सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ अतर्किते । आकस्मिके । अकस्मादर्थे । सहसा निसृतो भावो योऽनिच्छ हृदिस्थित । नाकारोगूहितुं शक्यो वृहस्पतिसमैरपि ॥ तत्क्षणादर्थे ॥ दिव प्रसूनसहसापपातेति यथा ॥ सहते । षह० । असाप्रत्ययः ॥

सहसान । पुं० मयूरे ॥ यज्ञे ॥ त्रि० क्षमायुक्ते ॥ सहते । षह० । ऋञ्ज्यवृधिमन्दिसहिभ्य कित् इत्यसानच् ॥

सहस्य । पुं० पौषमासे । सहसि बले साधुः । तत्र साधुरिति यत् ॥

सहस्रम् । न० दशशते० १००० । अनन्ते ॥ क्षिप्र अत सहस्रसत्रम अयशाच्यमिति महाभारतम् ॥

सहस्रकाण्डा । स्त्री० श्वेतदूर्वायाम् ॥

सहस्रकिरण० । पुं० सूर्ये ॥ सहस्रं किरणा यस्य ।

सहस्रगु । पुं० आदित्ये । भानौ । स सहस्रं गावो रश्मयो यस्य सः ॥ अत्र याज्ञ । तासामयतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रय हिमोत्सर्गे ताबद्धर्म्मस्य सर्जने ॥ आनन्दाश्च हिमेध्याश्च नूतना पूतनाश्च ते । चतु शतवृष्टिवाहस्ता . सर्वामृत स्त्रियइनि ॥

सहस्रजित् । पुं० हरौ ॥ सहस्राण्यसुराणां जयति । जि० । क्विप् ॥

सहस्रणी० । पुं० भीष्मे । गङ्गेये ॥ सहस्ररथिनो नयति० पालयति । णीञ्० । सत्सूद्विषेति क्विप् ॥

सहस्रतम । त्रि० सहस्रस्य पूरणे ॥ नित्यं शत दौ निङ्ढ्तमङागमः ॥

सहस्रदंष्ट्र । पुं० पाठीनमत्स्ये ॥ सहस्रं दंष्ट्रा यस्य ॥

सहस्रदंष्ट्री । स्त्री० पाठीने । बोदालमत्स्ये ॥

सहस्रद । त्रि० बहुप्रदे ॥ सहस्रं ददाति । डुदाञ्० । कः ॥

सहस्रदोः । पुं० कार्त्तवीर्यार्जुने ॥ सहस्रं दोषो बाहवो यस्य सः । पत्वस्यासिद्धत्वाद्रुत्वविसर्गौ ॥

सहस्रधारः । पुं० विष्णुचक्रे ॥

सहस्रधारा । स्त्री० देवतास्नानार्थं सहस्रच्छिद्रयुतपात्रगलितजलधारायाम् । यथा । सहस्रधारया देवी०

स्नापयामि सुरेश्वरीमिति ॥

सहस्रनयन । पुं॰ इन्द्रे ॥ सहस्र नयनान्यस्य ॥

सहस्रनेत्रः । पुं॰ इन्द्रे ॥ विष्णौ । सहस्रनेत्राण्यस्य ॥

सहस्रपत्रम् । न॰ कमले । पद्मे । नलिने ॥ सहस्रम् बहूनि पत्राण्यस्य ॥

सहस्रपात् । पुं॰ विष्णौ ॥ सहस्र पादा यस्य । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोपः ॥

सहस्रपादः । पुं॰ कारण्डे ॥ मार्त्तण्डे ॥ यज्ञपुरुषे । विष्णौ ॥

सहस्रभित् । न॰ कस्तूर्याम् ॥ अम्लवेतसे ॥

सहस्रभुजः । पुं॰ विष्णौ ॥ कार्त्तवीर्यार्जुने ॥

सहस्रभुजा । स्त्री॰ दुर्गायाम् ॥ महालक्ष्याम् ॥

सहस्रमरीचिः । पुं॰ सूर्ये ॥

सहस्रमूर्द्धा । पुं॰ शङ्करे ॥ विष्णौ ॥ सहस्राण्यपरिमितानि मूर्द्धानोऽस्य ॥

सहस्रमूली । स्त्री॰ द्रवन्त्यामोषधौ ॥

सहस्रमौलिः । पुं॰ विष्णौ ॥ कल्कौ ॥

सहस्ररश्मिः । पुं॰ सूर्ये ॥

सहस्रवदन । पुं॰ शेषे ॥ विष्णौ ॥

सहस्रबाहुः । पुं॰ कार्त्तवीर्यार्जुने ॥ बाणासुरे ॥

सहस्रवीर्य्या । स्त्री॰ दूर्वायाम् ॥ सहस्रवीर्याण्यस्याः ॥ महाशतावर्याम् ॥

सहस्रवेधम् । न॰ काञ्जिकविशेषे । चुक्रे ॥

सहस्रवेधी । पुं॰ अम्लवेतसे । चुक्रे ॥ कस्तूर्य्याम् । न॰ रामठे । हिङ्गुनि । त्रि॰ सहस्रवेधकर्त्तरि ॥ सहस्रं वेधितुमोकमस्य । विध विधाने । सुपीति णिनिः ॥

सहस्रशिखरः । पुं॰ विन्ध्याचले ॥

सहस्रा । स्त्री॰ अम्बष्ठायाम् ॥

सहस्रांशः । पुं॰ सहस्रतमभागे ॥

सहस्रांशुः । पुं॰ भानौ । रवौ । तपने ॥ सहस्रं अंशवो यस्य ॥

सहस्राक्षः । पुं॰ पाकशत्रौ । इन्द्रे ॥ विष्णौ सर्व्वसाक्षिणि ॥ सहस्रमक्षीण्यस्य । सहस्राण्यपरिमितान्यक्षीण्यस्य वा । बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥

सहस्रारः । पुं॰ न॰ शिरोवस्थिते सुखसहस्रदलकमले ॥

सहस्रार्चिः । पुं॰ विष्णौ । सूर्ये ॥ सहस्राण्यर्चींषि किरणाः । सहस्राण्यनन्तान्यर्चींषि भासो यस्य विश्वव्यापकस्य विष्णोरिति ॥

सहस्री । पुं॰ सहस्रसङ्ख्यसैन्ययुक्ते ।

साहस्रे ॥ सहस्र बलमस्यास्य । तप
सहस्राभ्यां विनीतौ । इतीति ॥
बलिनो । यैसहस्रं यसाहस्रास्तेसहस्रि
णः ॥
सहा । स्त्री॰ नखभेदनी ॥ दण्डोत्प
लायाम् । सहदेवायाम् ॥ मुद्गप
र्ण्याम् ।। घृतकुमार्याम् ॥ उर्व्या
म् । भूमौ ॥ सहते । षह॰ । प
च् । टाप् ॥ सेवन्त्याम् ॥ शुक्ल
झिण्टयाम ॥ स्वर्णक्षुद्राख्याम् ॥
रास्नायाम् ॥ स्वर्णक्षीर्याम् ॥ त
रणीपुष्पे ॥ पीतदण्डोत्पलाया
म् ॥
सहाचर । पु॰ पीतझिण्ट्याम् । क
टसारिका॰ कटसरैय्या॰ इ॰ भा॰
प्र॰ । सहचरे ॥ सहभ्याचरति ।
चर॰ । अच् ॥
सहाय । पु॰ चक्रवाके ॥ त्रि॰ सह
चारिणि । अनुचरे । अभिसरे ॥
सहअयते॰ अयतिवा । अय॰ । इ
णतौवा । पचाद्यच् ॥ राज्ञ सहा
यायथा । सह्यास्तथापुष्टा सत
तप्रतिमानिता । राज्ञासहाया.
कर्त्तव्याः पृथिवींजेतुमिच्छतेति
मात्स्ये १८८ अध्याय . ॥ यथोक्तं
देवीभागवतेव्यासेन । शक्ताघेत्थ म
तिर्दत्ताहरिणाब्जचातिने । प्रविष्टो
यदावि विष्णुः सहाय ॰ प्रयत्नपद्यत
॥ यथापरदिसहायोभूद्वासुदेव क

यथ्वन । समयेस्वजन . सर्वं . स्वं
सारेक्षिन्नराधिप . ॥ देवैविसु
खताप्राप्तेनकोप्यस्तिसहायवान् ।
पितामातातथाभार्याभ्राताबाथसहो
दर ॥ सेवकोवापिमित्रं वापुत्रश्चै
वतथौरस : । प्रतिकूलेगतेदेवेनको
प्येतिसहायतामिति ॥
सहायता । स्त्री॰ सहायौघे ॥ सहाया
नासमूहः । गजसहायाभ्यामिति
तल् । साहाय्ये ॥ सहायस्यकर्म
भावोवा । तल ॥
सहायत्वम् । न॰ साहाय्ये ॥
सहार । पु॰ आम्रवृक्षे । रसाले ॥
महाप्रलये ॥ इतिहलायुध ॥
सहारी । पुं॰ यथाहिसाम्रो ॥ आद्य
न्तकार्यो पद्मानवर्यो । तद्ध्वैक
धारीवाच्य सहारी ॥ यथो । क
सादिकेतु धर्मंकर्तुम् । वदेव्ज
नाभम्॰ इन्दीवराभम् ॥
सहारोग्य . । त्रि॰ नीरुजि ॥
सहित . । त्रि॰ सहिते । सयुक्ते ॥
सम्भीयतेस्म । डुधाञ् क्त. । दधा
तेर्हि . । समोहितततयोर्वालोप
॥ सम्यग्भिते ॥ हितेनसहवर्त्त
माने ॥
सहिता । त्रि॰ सोढरि । सहनशीले
॥ सहते । षह॰ । तच् । तीषस
हेतिवेट् ॥
सहिष्णु . । त्रि॰ सहने । क्षमरि ।

रिणीयते । अट्टायादेशायम् ॥ स
हिष्णुतेश्च । बहु० । स्त संप्रसा
रणम् । गुण ॥ त्रि० अर्जनसह
वर्त्तमाने ॥

सहोत्थः । प० तृतीयभङ्गे ॥

सहोदरः । पुं० सहजे । सोदरेभ्रा
तरि ॥ सहउदरेणवर्त्तते । बोप
सर्जनस्य ॥ सह० समानम्० उ
दरयस्येतिवा ॥

सहोर । त्रि० साधुनि ॥ सहते ।
षह० । किशोरादयश्चेतिओरन् ॥

सह्य । पु० मलयाद्रिसमीपवर्त्ति
निशैलविशेषे ॥ न० आरोग्ये ॥
साम्ये । त्रि० सहनीये । सोढ
व्ये । सुमधुरे ॥ सह्यते० सोढु
शक्योवा । षह० । शकिसहोश्चे
तियत् ॥ गोदावरीभीमरथीकृष्णा
वेण्यादिकास्तथा । सह्यपादोद्भवा
नद्य स्मृता पापभयापहा ॥

सा । स्त्री० लक्ष्म्याम् ॥ दुर्गायाम् ॥

सांयात्रिक । पुं० पोतवणिजि । व
हित्रगामिनिवणिग्जने ॥ संयात्रा
द्वीपान्तरगमनायसम्भूयायात्रासाप्र
योजनमस्य । तदस्यप्रयोजनमिति
ठञ् ॥

सांयुगीन । त्रि० रणोत्सुके । युद्ध
कुशले ॥ संयुगेरणेसाधु । प्रति
जनादिभ्यः खञ् ॥

सांराविणम् । अ० न० समन्तादुच्चै

। रुद्रशब्दध्वनौ ॥ सहूतौ ॥

सांवत्सर । पु० गणके ॥ अस्यलक्ष
णमाहवराहमिहिर । तत्रसांवत्स
रोऽभिजात प्रियदर्शनो० विनी
तवेश ० सत्यवागनसूयक ० स
म ०सुसंहितोपचितगात्रसन्धिरवि
कलचार० वारुचरणनखनयनचिबु
कदशनश्रवणललाटभ्रूत्तमाङ्गोवपु
ष्मान्गम्भीरोदात्तघोष ०प्राय शरी
राकारानुवर्त्तिनोहिगुणास्तदोषा
श्चभवन्ति ॥ १ ॥ तत्रगुणा शुचि
र्दक्ष प्रगल्भोवाग्मीप्रतिभानवा
न्देशकालवित्सात्त्विकोनपरिषद्भी
रु : सहाध्यायिभिरनभिभवनीय .
कुशलोऽव्यसनीशान्तिकपौष्टिका-
भिचारस्नानविद्याभिज्ञोविबुधार्च्च
नव्रतोपवासनिरत : स्वतन्त्राश्चर्य्यो
त्पादितप्रभाव पृष्टाऽभिधाव्यन्यत्र
दैवात्ययाद्ग्रहगणितसंहिताहोरा
ग्रन्थ र्थवेत्ता ॥ २ विशेषायाराद्धां
सांवत्सरसूत्रं द्रष्टव्य ॥ संवत्सर
वेत्ति । तदधीतेतद्वेदेत्यण् ॥ न०
फले ॥ पर्व्वणि ॥ सन्धिवेलादिषु०
संवत्सरान्फलपर्व्वणोरितिशेषिको
ऽण् ॥

सांवत्सरिक । त्रि० संवत्सरसम्बन्धि
नि ॥ कालाट्ठञितिशैषिकेऽर्थे
ठञ् ॥ संवत्सरव्याप्यभूते ॥ प्रतिसं
वत्सरं कर्त्तव्ये श्राद्धादिकर्म्मणि ॥

क्ष्मी 'तुल्यार्थैसाक्षाच्छब्दयोगे॰ तुल्यार्थैरतुलोपमाभ्यामिति॰ तृतीयाप्रयोगश्चित '। साक्षाल्लक्ष्मीरित्यादिप्रथमान्तप्रयोगेतु॰ प्रत्यक्षार्थैकएवप्रतिभाति। ॰ लक्ष्म्यासाक्षादिति॰ लक्ष्म्यातुल्येतिवत्॰ लक्ष्मीसाक्षादितिभवतिच

साक्षात्कार। पु॰ इदानीमित्यमेवित्थपरोक्षज्ञाने ॥ प्रत्यक्षकरणे ॥ साक्षात्करणम्। कृञ्घञ्।।

साक्षी। त्रि॰ प्रत्यक्षद्रष्टरि। हप्तर्षै ॥ साक्षादिन्द्रियार्थसन्निकर्षविनैवेक्षतेपश्यतिप्रकाशयतीति॰ निर्विकारे॰ आत्मनि ।। स्वप्रकाशज्ञानमात्रस्वरूपोप्यात्माऽविद्योपहित. सन्॰ साक्षीत्युच्यते। यथा हुवार्त्तिककारा। नर्त्तशालस्थितोदीपःप्रभुंसभ्यांश्चनर्त्तकीम्। दीपयेदविशेषेणतदभावेऽपिदीप्यते॥ इति ॥ यथा। नेनस्वरूपबोधेनपश्यतिसर्वमितिसाक्षी। इत्यव्यवधानमन्तरेणसाध्यस्तसर्वस्वरूपचैतन्येनपश्यतीत्यर्थः। साक्षाद्द्रष्टरिसंज्ञायामिति॰इनि ॥ शून्यवादिभिरपिशून्यसिद्धयेसाक्ष्यभ्युपेय॰ किमुवक्तव्यमितरैरित्याह। प्रत्यक्षसाक्ष्यतिरेकेणनाभावोऽपिप्रसिद्ध्यति। किमुभावोजगत्यस्मिन्सा क्षीचानन्यसिद्धिकः। अभावोपि॰ शून्यमपीत्यर्थः ॥ पुरैपौरानृपश्यन्नरयुवतिनामाकृतिमयानृसुवेशान्स्वर्णालङ्करणकलितांश्चित्रसदृशान्। स्वयसाक्षीद्रष्टेत्यपिचकलयंस्ते ' सहरमन् मुनिर्व्यामोह भजति गुरुदीक्षाक्षततम ॥ साक्षाद्द्रष्टरि। सर्वप्राणिनांसाक्षाच्छुभाशुभद्रष्टरि ॥ चेतनत्वेनाविषयत्वेनचसाक्षित्वद्रष्टृत्वम्। चेतनोहिद्रष्टाभवति। यस्मैप्रदर्श्यतेविषय. ससाक्षी ॥ तथालोके॰ अर्थिप्रत्यर्थिनौ॰ विवादविषयसाक्षिणेदर्शयत। एवप्रकृतिरपिस्वचरितविषयंपुरुषायदर्शयतीतिपुरुष साक्षी। नचाचेतनोवा॰ विषयोवा॰ शक्योविषयदर्शयितुमिति॰ चैतन्यादविषयत्वाच्चभवति साक्षी। अतएवद्रष्टापिभवतीति साङ्ख्यविद्॥

साक्ष्यम्। न॰ साक्षिकर्मणि ॥ यथा। समक्षदर्शनात्साक्ष्यंश्रवणाच्चैवसिद्ध्यतीतिमनु ॥

साख्यम्। न॰ सख्ये।

सागर '। पु॰ समुद्रे। अब्धौ। सगरपुत्रैः खातोजलाशयः ॥ सगरस्य इदम्॰ सगरेणखनितत्वात् । तस्येदमित्यण ॥ क्षीरोदादिष्वप्युपमयासागरव्यपदेशइतिबद्ध्वा ॥ मृगविशेषे ॥ दशपद्मस

ङ्ख्यायाम् ॥

सागरगा । स्त्री॰ नद्याम् ॥

सागरगामी । त्रि॰ सिन्धुगे । समुद्रयायिनि ॥

सागरगामिनी । स्त्री॰ नद्याम् ॥ सूक्ष्मैलायां ॥

सागरनेमिः । ) पुं॰
सागरमेखला । ) स्त्री॰ पृथिव्याम् ॥

सागरो नेमिर्मेखला वा यस्याः ॥

सागरानूप । पु॰ समुद्रतीरप्रदेशे ॥ सागरस्यानूपः ॥

सागराम्बरा । स्त्री॰ धरायाम् । पृथिव्याम् ॥ सागरोऽम्बरं वसनम् यस्याः ॥

सागरालयः पुं॰ अप्पतौ । वरुणे ॥

सागरोत्थम् न॰ समुद्रलवणे । त्रि॰ सिन्धुजे ॥

साग्निकः । पुं॰ अग्निपायाँ ॥

साग्र । त्रि॰ अग्रेणसहिते ॥

साङ्कर्य्यम् । न॰ सङ्करतायाम् ॥ जातिसाङ्कर्य्यम्॰ पङ्क्तिसाङ्कर्य्यमिति । तत्र पङ्क्तिसाङ्कर्य्यदोषा यथा । नसंवसेत्पतितैर्न चाण्डालैर्न पुक्कसैः । न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥ एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् । याजनाध्यापने योनिस्तथैव सहभोजनम् ॥ सहाध्यायस्तु दशमः सहयाजनमेव च । एकादश समुद्दिष्टा- दोषाः साङ्कर्य्यसंज्ञिताः ॥ समीपेनाप्यवस्थानात्पापं संक्रमते नृणाम् । तस्मात्सर्वप्रयत्नेन साङ्कर्य्यं परिवर्जयेत् ॥ पङ्क्तिसाङ्कर्य्यदोषवारणोपायो यथा । एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् । भस्मना कृतमर्यादा न तेषां सङ्करो भवेत् ॥ अग्निना भस्मना चैव हि पङ्क्तिर्विभिद्यत इति कूर्मे १५ अध्यायः ॥

साङ्काश्यम् । न॰ नगरविशेषे ॥ सङ्काशेन निर्वृत्तं नगरम् । सङ्काशादिभ्यो ण्यः ॥

साङ्कृतिः । पुं॰ मुनिविशेषे । वैयाघ्रपद्यगोत्रप्रवरे ।

साङ्ख्य । पु॰ कपिलमुनिकृतदर्शनविद्याविशेषे ॥ सङ्ख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । तत्त्वानि च चतुर्विंशत्तेन साङ्ख्याः प्रकीर्त्तिताः ॥ औपनिषदे पुरुषे ॥ सम्यक् ख्यायते॰ सर्वोपाधिशून्यतया प्रतिपाद्यते॰ परमात्मतत्त्वमनयेति॰ सङ्ख्या॰ उपनिषत्॰ तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते य, साङ्ख्यः । स औपनिषदः पुरुषः ॥ सन्यासे ॥ सङ्ख्या सम्यगात्मबुद्धिः॰ तां वहतीति॰ ज्ञानान्तरङ्गसाधनतया स साङ्ख्यः॰ सन्न्यासः ॥ न॰ वेदान्तशास्त्रे ॥ निरतिशयपुरुषार्थं प्राप्त्यर्थं सर्वा

नयं विवक्ष्यं संख्यातव्या जीवो०
ब्रह्म० तयोरैक्य० तद्बोधोपयोगि
नस्रवणादय पदार्था . ० तेस
ङ्ख्यायन्ते ०व्युत्पाद्यन्तेऽस्मिन् ॥
आत्मज्ञाने ॥ शुद्धात्मतत्त्वविज्ञान
साङ्ख्यमित्यभिधीयते इति व्यासस्मृ
ति ' ॥ ज्ञानशास्त्रे षड्दर्शनान्त
र्गतदर्शनविशेषे । कापिले ॥ यथा
म ' कपिलोनामसिद्धेश्व 'कालवि
प्लुतम् । प्रोवाचासुरयेसाङ्ख्यत
त्त्वज्ञानविनिर्णयम् ॥ इति श्रीभा
गवतम् ॥ साङ्ख्य सङ्ख्यात्मक
त्वाच्च कपिलादिभिरुच्यते० इ० म
त्स्यपुराणम् ॥ सम्यक्ख्यायते प्रका
श्यते वस्तुतत्त्वमनयेति० सङ्ख्या स
म्यग्ज्ञानम्० तस्यां प्रकाशमानमा
त्मतत्त्वं साङ्ख्यमिमितिश्रीधरस्वा
मी ॥ अपिचाहु । साङ्ख्यद्विका
पिलमुनिनासंसारविमुक्तिकारण
प्रोक्तम् । एताः सप्ततिरार्याभाष्य
ञ्चाप्यत्र गौडपादकृतम् ॥ एतत्प
वित्रमग्र्यंमुनिरासुरयेऽनुकम्पया
प्रददौ । आसुरिरपिपञ्चशिखायते
नचबहुधाकृत तन्त्रम् । शिष्यपरम्प
रयागतमीश्वरकृष्णेनचैतदार्या-
भि । सङ्क्षिप्तमार्यमतिनासम्य
ग्विज्ञायसिद्धान्तम् ॥ सप्तत्यांकि
लयेऽर्थास्तेऽर्था . कृत्स्नस्य षष्टितन्त्रस्य
। आख्यायिकाविरहिताः परवाद
विवर्जिताश्चापि ॥ इति साङ्ख्य
प्रवचनभाष्यम् । अस्याध्ययने प्रार
ब्धमुक्तिमाह कालिदासोयथा । त्रि
गुण्मोत्रयी युग्मभे सदृषदाणां समा
रम्भित साङ्ख्यशास्त्रादिशास्त्रम् ।
मृदुविप्रशम्भूङ शम्भूङ युक्ते द्विजे
ध्वेवतद्बोधसिद्धि तनोतीति ॥

साङ्ख्यमतम् । न० षष्टितन्त्रादौ ॥
साङ्ख्यानांमतम् ॥ यथा । त्रिगु
णं यत्प्रधानं तत्पुरुषार्थेन हेतुना
। प्रवर्त्तते वासनात्वक्तृप्ति० स्वच्छे
तिकापिला ॥ नान्त 'कारणमेवा
त्मा० किन्त्वन्य सर्वगत स्वप्र
काश० स्तस्यभोगापवर्गानुगुण्ये न
हेतुनायत्प्रधानमस्तितदात्मनैव
स्थितमन्त ' करणं तत्सधर्मकं प्र
वर्त्तते० तदेवश्रुत्यावासनात्वेनो
च्यतइतिवदन्तीत्यर्थं ' ॥

साङ्ख्ययोगः । पुं० चिन्तनविशेषे ।
निदिध्यासनपूर्वभाविनाश्रवणम
ननरूपेण० नित्यानित्यविवेकादि
पूर्वकेण० इमेगुणत्रयपरिणामाश्च
नात्मन . सर्वे मिथ्याभूता ' ० त
त्साक्षीभूतोनित्योविमुक्तो निर्विका
र सत्य समस्तजडसम्बन्धशून्य आ
मा त्वहमेव वेदान्तवाक्यविचारज
न्ये चिन्तने ॥

साङ्गः । त्रि० अङ्गसहिते ॥ अङ्गेन
अङ्गैर्वासहित ॥

र्व्ये । यथा । प्रजनार्थंस्त्रिय : सृष्टा : सन्तानार्थंचमानवा : । तस्मात्साधारणोधर्म्मः श्रुतौपत्न्या सहोदित . ॥ अपिच । अहिंसा सत्यमस्तेयशौचमिन्द्रियसंयम. । दम . क्षमार्जवन्दानसर्वेषांधर्मसाधनमिति ॥ आत्मज्ञानतितिक्षा चधर्म्मः साधारणोनृपेतिच ॥

साधारणस्त्री० । स्त्री०वेश्यायाम् ॥

साधारणानैकान्तिक । पुं० हेत्वाभासान्तरे । साध्याभाववद्वृत्तौ ॥ यथापर्वतोऽग्निमान्० प्रमेयत्वादिति । प्रमेयत्वस्यवह्न्यभाववतिह्रदे विद्यमानत्वात् ॥ साध्यवदन्यवृत्तौ । यथा । शब्दोनित्य० नि स्पर्शत्वात् नचविरुद्धसङ्कीर्णदोष : ० उपधेयसङ्करेऽप्युपाधेरसङ्करात् ॥

साधारणी । स्त्री० सदृशायाम् । समानायाम् ॥ कुञ्चिकायामितिहेमचन्द्र : ॥

साधारण्यम् । न० साम्ये ॥ कुञ्चिकायाम् । इतिहेमचन्द्र ॥

साधारिका । स्त्री० घटिकायाम् । नाडिकायां ॥

साधिका । स्त्री० साधनकर्त्र्याम् ॥ सुषुप्तौ ॥ सुप्तसुसाधकेतिहेम : ॥

साधित । त्रि० दापिते । धनादिना वशीकृते । धनादिप्रदापिते ॥ प्रदापितधने ॥ साध्यतेस्म । साध० । क्त ॥ सिद्ध ॥

साधिमा । पु० साधुत्वे ॥ साधोर्भाव : । इमनिच् ॥

साधिष्ठ .। त्रि० अतिशयेनबाढे अतिदृढे । चार्व्ये ॥ न्याय्ये । शोभनतमे । अयमेषामतिशयेनबाढ : । अतिशायिनेतमविष्ठनाविति इष्ठन् । अन्तिकबाढयोर्नेदसाधौ ॥

साधिष्ठान । त्रि० जीवे । अधिष्ठानेन कूटस्थचैतन्येनसहिते ।

साधीयान् । त्रि० अतिबाढे ॥ अति शोभने । अतिसाधौ ॥ अयमनयो रतिशयितोबाढ साधुर्वा । द्विवचनेतीयसुन्० अतिकबाढयोरिति बाढशब्दस्यसाधादेश : । टेरिति साधोष्टिलोप : ॥

साधु । त्रि० उत्तमकुलोत्पन्ने । अस्य पर्यायायथा । महाकुलकुलीनार्य्य सभ्यसज्जनसाधवइति । वार्द्धुषिके ॥ चारौ । शोभने । मनोज्ञे । स्वभावसुन्दरे ॥ प्रवीणे । योग्ये ॥ स्वधर्मवर्त्तिनि ॥ अपकारिष्वप्युपकारशीले ॥ पद्मोलिनि ॥ दुष्यकारिणि ॥ वेदमार्गस्थे ॥ शास्त्रविहितकारिणि ॥ सर्वहिते ॥ नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पन्नमुमुक्षौ ॥ कुलधर्माश्रिते ॥

यणीयाम् ॥ आतपत्रे ॥ कृष्णव चपाल . । पाठान्तरे॰ साधुतम पि ॥

साध्य : । पुं॰ गणदेवताविशेषे ॥ साध्य सिद्धि । साध॰ । कर्त्ता र्य्यंत्॰ इतिभाविष्यत् । सा॒ऽस्य ञ । अर्श्आद्यच् । साध्याद्वाद्श विख्याता . पुराणेषुपुरातनैः . । तेयथा । मनोमन्त्रप्राणनरोऽपा नोऽथवसवा । नारायणोनरश्चैव सविष्णुस्तथाविभुः ॥ प्रभुश्चादृ शैतेसाध्या . प्रोक्ता पुरातनैरिति ॥ विष्कम्भादान्तर्गतेयोगविशेषे ॥ तत्रोत्पन्नस्यफलं यथा । असाध्यसा ध्य : किलसाध्यजात : शूरोतिधी रोविजितारिपक्ष । बुद्ध्याशुपा र्भे परिसाधितार्थ . परकृतार्थं सुतरांविनीत . ॥ स्मरे । कामे ॥ देवे । सुरे ॥ त्रि॰ साधनीये ॥ ज्ञेक्योपाय : सुखोपायोद्विविध . साध्यउच्यते ॥ साधनाभिमते ॥ साध्यतेऽत्र । क्ततुपच । यथा । प्रतिज्ञादोषनिर्मुक्तं साध्यंसत्कार णान्वितम् । निश्चित लोकसिद्धश्च पक्ष पक्षविदोविदु . ॥ साध्यंसाध नाभिमत पक्ष विदु : । यत्साध्यन्य नसाध्य व्याप्यम्॰ तद्विशिष्टधर्मी पक्षइतिभेद : । तथाप्यनवाक्प्रत्या प्यर्थादिधर्मविशेषविशिष्टस्यपक्षत

याधर्मिणोऽधर्मपदैरेवसाध्यत्वात् साध्यपक्षयोरभेदाभिधानमितिव्यव हारतस्त्वम् ॥ व्याप्ये ॥ साध्यते ऽनेनेतिव्युत्पत्त्यापक्षे ॥ यथा ॰प र्वतोवह्निमानित्यत्रपर्वत ॥ सा धवितुंयोग्ये ॥ यथापर्वतोवह्निमा नित्यत्रवह्नि . साध्य ॥ साध्यस्य वस्तुनोऽभावेसाधनं विप्रयोजनम् ॥

साध्यतावच्छेदकम् । न॰ अनुमिति विधेयांशेभासमानधर्मे ॥

साध्यव्यापकत्त्वम् । न॰ साध्यसमा नाधिकरणात्यन्ताभावाप्रतियोगि त्वे ॥

साध्यसम । पुं॰ हेत्वाभासान्तरे ॥ यथाहगोतम । साध्याविशिष्टस्य साध्यत्वात्साध्यसम . ॥ ४८ ॥ साध्येनवह्न्यादिना॰ अविशिष्ट॰ तुल्यइत्यतआह॰ साध्यत्वादिति॰ साधनीयत्वादित्यर्थ । यथाहि॰ साध्य साधनीय॰ तथाहेतुरपिचेत् ॰ साध्यसमइत्युच्यते । अतएवश्चा सिद्धइतिव्यवह्रियते । अयञ्चाश्र यासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्‍ धिभेदात्॰ त्रिविध । आश्रयासि द्धिश्च॰ पक्षेपक्षताच्छेदकाभाव . । यथाकाञ्चनमय पर्वतोवह्निमा नित्यादौ । स्वरूपासिद्धि ॰ प क्षे हेतुतावच्छेदकावच्छिन्नस्याभा व । यथाह्रदोद्रव्यधूमादित्यादौ

यु तीर्थविशेषप्रदेशभूच । चस्कन्द
सन्नकीतासेसानन्दोवीरवीरसे ॥
त्रि० आह्लादयुक्ते ॥

सानन्दूर । पुं० तीर्थविशेषे ॥

सानसि । पुं० काञ्चने ॥ सनोति
षणुदाने । सानसिवर्णसीत्यादि
नाऽसिप्रत्ययउपधादीर्घश्च ॥ त्रि०
सम्भजनीये ॥

सानिका । स्त्री० वाद्यविशेषे । सना
ई० वंशीति लोकप्रसिद्धे ॥ वंशी
वाद्ये ॥

सानु । पुं० न० स्त्री० । प्रस्थे । पर्व
तस्यसमभूभागे ॥ वने ॥ वात्या
याम ॥ मार्गे ॥ अग्रे ॥ कोविदे
॥ सनोति । षणु० । दूसनिजनी
तिञुण् ॥ अर्के ॥ पल्लवे ॥

सानुक्रोश । त्रि० सदये ॥

सानुज । पुं० तुम्बुरुवृक्षे । तीक्ष्ण
पत्रे ॥ न० प्रपौण्डरीके ॥ त्रि० अ
नुजेनसहवर्त्तमाने ॥ सानुज रा
ममौर्ङ ॥

सानुबन्ध । त्रि० सपरिवारे ॥ अवि
च्छिन्ने । सानुसृते ॥

सानुमान् । पुं० पर्वते ॥ सानवोवि
द्यन्तेऽस्य । मतुप् ॥

सानेयिका । स्त्री० सानेय्याम् ॥

सानेयी । स्त्री० वंश्याम् ॥ इ० श०
र० मा० ॥

सान्तपनम् । न० कृच्छ्रसान्तपनाभिधे
व्रतविशेषे ॥ यथा । गोमूत्रगोमय
क्षीरदधिसर्पिः कुशोदकम् । ए
कराचोपवासश्च कृच्छ्रं सान्तपनं स्मृ-
तम् ॥ गोमूत्रादिषड्द्रव्याण्येको
क्त्यैकस्मिन्नहनि भक्षयेत्, नान्यत्
किञ्चिद्द्यात् । अपरदिने चोपवास
इत्येतत्, सान्तपनकृच्छ्रं स्मृतमित्य
र्थः ॥ सन्तपति, तप० । ण्यु, ।
तस्येदं कर्म । अण् ॥

सान्तर । त्रि० विरले ॥ अन्तरेणस
हित ॥

सान्त्व । न० अत्यर्थमधुरेवाक्ये ।
कर्णमन प्रीतिजनके ॥ साम
नि । प्रियवादार्थप्रदानसम्बन्धादि
भि क्रोधोपशमने । द्रव्यदास्ता
मितुभ्य सामभेदौरित्यादिसमाधा
नोक्तौ ॥ साम्नयति । षान्त्व सामप्र
योगे । चुरादिरदन्तः । एरच्, घञ
वा ॥ दाक्षिण्ये ॥

सान्त्वनम् । न० प्रणये ॥ सान्त्वते
षान्त्व० । ल्युट् ॥

सान्त्वना । स्त्री० प्रणये ॥ प्रणय सा
न्त्वनानमेति कोषान्तरम् ॥ सामनि

सान्त्वनावाद । पुं० प्रियवचने ।

सान्दीपनि । पुं० मुनिविशेषे ॥ श
स्त्रादिविद्याभिज्ञे, अवन्तिपुरवासि
निकाश्चैवरामकृष्णयोर्गुरौ । सन्दी
पनस्यापत्यम् । अतइञ् ॥

सान्दृष्टिकम् । पुं० व्यापारानन्तरं

जायमाने॰सद्य॰ फले । सन्दृष्टौप्र
त्यक्षे भवम् । अध्यात्मादित्वाट्ठञ्
॥ समानदृष्टिविषये ॥

सान्द्रम् । न॰ वने ॥ त्रि॰ घने । नि
विडे ॥ मृदौ ॥ सह॰ चन्द्रते । च
दि बन्धने । बाहुलकाद्रक् ॥

सान्द्रपुष्प॰ । पुं॰ विभीतकवृक्षे ।

सान्द्रस्निग्ध । त्रि॰ घनस्निग्धे ।
मेदुरे ॥

सान्धिक । पुं॰ शौण्डिके । त्रि॰
सन्धिकारि ॥

सान्धिवेलम् । न॰ संधिवेलायाम्भ
वे ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योण् ॥

सान्ध्य॰ । पुं॰ स्वप्ने ॥ सन्धिभवे ॥ स
न्ध्याधाम्नव : । सन्धिवेलादित्वा
दण् ॥

सान्ध्यकुसुमा । स्त्री॰ त्रिसन्धिपुष्पवृ
क्षे ॥

सान्नहनिक॰ । त्रि॰ योधानांरथसन्ना
हप्रवर्तके ॥ सन्नहनंप्रयोजनमस्य ।
तदस्यप्रयोजनमितिठञ् ॥

सान्नाय्यम् । न॰ हातव्यद्रव्ये । हवि
षिसम्यङ्नीयतेहोमार्थमग्निम्प्रति
। णीञ् । पाय्यसान्नाय्येतिण्यदा
यादेश समोदीर्घ सन्निपात्यते ॥

सान्निध्यम् । न॰ नैकट्ये ॥ निकटे ॥
सन्निधिरेव । चतुर्वर्णादित्वात्
स्वार्थेष्यञ् ॥

सान्निपातिक : । त्रि॰ सन्निपातकारि
णि । सन्निपातप्रशमनञ्चौपनवा
। सन्निपातार्थ ठिठञ् ॥

साम्यासिक । पु॰ भिक्षौ । पाराव्र
जिके ॥

सान्वय । त्रि॰ सम्बन्धिनि ॥ कुलस
हिते ॥ पुत्रपौत्रादिसहिते ॥ यथा
। योमधोत्पद्विजोवेदमन्यत्रकुरुतेश्र
मम् । सजीवन्नेवशूद्रत्वमाशुगच्छ
तिसान्वय ॥

सापत्न । पु॰ सपत्नीतनये । सपत्न्या
अपत्यम् । शिवादिभ्योण् । ततस
पत्नेतिपाठेपिलिङ्गविशिष्टपरिभाष
या॰ सपत्नीशब्दादपिसामान्यवि
न्तया॰ढकाधिस्व'ऽपितिवोध्यम
॥ वैरिपक्षतनये ॥ तस्यापत्यमित्यण्
॰ शिवादित्वाद्द ॥

सापत्नेय॰ । त्रि॰ सपत्न्यास्तनये ॥
सपत्न्याअपत्यम् ॥ स्त्रीभ्योढक्

सापत्नी । स्त्री॰ सपत्न्यादुहितरि ॥

सापत्रपा । स्त्री॰ लज्जायाम् ॥

सापराध : । त्रि॰ कृतापराधे ॥

सापिण्ड : । पुं॰ सपिण्डे ॥ प्रज्ञा
दिभ्यश्चेतिस्वार्थेऽण् ॥

सापिण्ड्यम् । न॰ सपिण्डतायाम् ॥

साप्तपदीनम् । सख्ये । मित्रत्वे ॥
सप्तभि : पदैरवाप्यते । साप्तप
दीनंसख्यमितिसाधु ॥

साफल्यम् । न॰ सफलतायाम् ॥

सामान्यापत्ति: । स्त्री॰ साम्यप्राप्तौ ॥

सामक । पु॰ तर्कुशाणे ॥ सामाभिज्ञे ॥ सामअधीते॰ वेदवा । क्रमादिभ्योवुन् ॥ न॰ मूलद्रव्ये ॥

सामग । त्रि॰ ब्राह्मणविशेषे । छान्दोगे ॥ सामगायति । गैशब्दे । गापोष्टगितिटक् । टिड्ढाणञ् । तेनस्त्रियांसामगी ॥

सामगर्भ॰ । पु॰ विष्णौ ॥

सामग्री । स्त्री॰ कारणसमूहे ॥ यथा । सामग्रीचैत्रफलविरहेव्याप्तिरेवेति तत्त्वमुक्त॰ पद्धाङ्कदूत ॥ द्रव्ये ॥

सामग्र्यम् । न॰ समुदायत्वे ॥

सामज । पु॰ गजे ॥ कुञ्जरे ॥ त्रि॰ सामोत्थे । सामार्थे ॥

सामञ्जस्यम् । न॰ औचित्ये । युक्तियुक्ते ॥

साम । न॰ सहस्रशाखिपितृदेवताकेवेदविशेषे ॥ गीतिविशिष्टायामृचि ॥ ऋच्यध्यूढ सामोच्यते ॥ वाक्यविशेषस्यार्थागीतौ ॥ सामपदन्तुगीतिमात्रस्याभिधायकमित्यन्यत् । चतुर्णांवेदानांमध्येगानमाधुर्येणातिरमणीयत्त्वाद्विष्णोर्विभूति सामेत्युच्यते । राज्ञांशत्रुवशीकरणोपायविशेषे । सान्त्वे । प्रियवाद॰ र्थप्रदानसत्त्वख्यादिभि शत्रौ क्रोधोपशमने ॥ यथा । परस्परोपकाराणादर्शनगुणकीर्त्तनम् । सत्त्वस्यसमाख्यानमायत्या । सम्प्रकाशनम् ॥ वाचापेशलयासाधुतवाहमितिचार्पणम् इतिसामविधानज्ञै सामपञ्चविधस्मृतम् ॥ स्यतिपाप॰ षोऽन्तकर्म्मणि । सातिभ्यामनिन्मनिणाविति मनिन् ॥ सानम् । सामसान्त्वप्रयोगे । बाहुलकात्मनिन्वा ॥ त्रि॰ शोभने । चनवद्ये ॥

सामन । पुं॰ सामवति ॥ सामास्यास्ति । पामादित्वन्न ॥

सामनी । स्त्री॰ पशुबन्धनरज्जौ ॥

सामन्त । पु॰ प्रतिवासिनि । समन्तोन्तएकदेशोस्य । प्रादिभ्योधातुजस्येतिसमास । समन्ताया ख्देशाव्यवहितभूमेरयम् । तस्येद मित्यण् ॥ माण्डलिके ॥ चतुर्दिक्षि ॥ त्रि॰ सहाये ॥

सामन्य : । पु॰ सामविदि ॥ सामसुसाधु॰ प्रवीणे॰ योग्योवा । तत्रसाधुरितियत् । येचाभावकर्म्मणोरितिप्रकृतिभाव ॥

सामयिक । त्रि॰ समयोचिते । समयेकार्य्यकर्त्तरि ॥ समय प्राप्तः । समयस्तदस्यप्राप्तमितिठञ् ॥ विनयादित्वात्स्वार्थेठग्वा । समयोत्थे ॥

सामयोनि । पुं॰ ब्रह्मणि । हस्तिनि । कुञ्जरे । गजे । त्रि॰ सा

सामान्यम्

ब्राह्मण क्षत्रियो वैश्य . शूद्र ' सामान्यएवचेति ॥

सामान्यम् । न० जाती ॥ तद्द्विविध म् । यथा । सामान्यंद्विविधम्प्रो क्तम् परञ्चापरमेवच । द्रव्यादित्रि कवृत्तिस्तुसत्तापरतयोच्यते । पर भिन्नाचयाजाति सैवापरतयोच्य ते । व्यापकत्वात्पराचिस्याद्व्याप्य त्वादपरापिच । द्रव्यत्वादिकजा तिस्तुपरापरतयोच्यते । इतिभ षा परिच्छेद ॥ तल्लक्षण यथा । नि त्यत्वे सत्यनेकसमवेतत्वमिति । अ नेकसमवेतत्व सयोगादीनामप्य स्ति० अत ' सत्यन्तम् । नित्यत्वे सतिसमवेतत्व गगनपरिमाणादी नामप्यस्ति० अतउक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तिसामान्यमु पेक्ष्यसमवेतत्वमुक्तम । एकव्यक्ति वृत्तिस्तुनजाति । यतउक्तम् । व्य क्तेरभेदस्तुल्यत्व सङ्करोऽथ नवस्थि ति ' । रूपहानिरसम्बन्धोजातिबा धकसङ्ग्रह . ॥ एकव्यक्तिकत्वा दाकाशत्व नजाति . । तुल्यवृत्ति कत्वाद्घटत्व कलसत्वनजातिद्वय म् । सङ्कीर्णत्वाद्भूतत्व मूर्त्तत्वं न जाति । अनवस्थाभयात्सामान्य त्व नजाति . । विशेषत्व्यावृत्त स्वभावरूपहानि ' आदतोविशे षत्व नजाति ' । समवायसम्बन्धा

सामन्याम्

भावात्समवायोनजाति । द्रव्या दित्रिकवृत्तिरिति । परत्वमधिक देशवृत्तित्वम् • अपरत्वमल्पदेश वृत्तित्वम् । सकलजात्यपेक्षया ऽधिकदेशवृत्तित्वात्सत्ताया पर त्वम् । एतद्बोधन यद्द्रव्यादीति । तदपेक्षयाचान्यासांजातीनामपर त्वम् । परभिन्नासत्ताभिन्ना । व्या पकत्वात्परापिस्याद्व्याप्यत्वादप- रापिच । पृथिवीत्वाद्यपेक्षयाव्या पकत्वात् • अधिकदेशवृत्तित्वा त्• द्रव्यत्वपरत्वम् । सत्तापेक्ष याऽल्पदेशवृत्तितत्वात्• द्रव्यत्व• अपरत्वञ्च । तथाचधर्मद्वयस मावेशादुभयमविरुद्वम् । इतमुक्ता वलौ ॥ नित्यमेकमनेकानुगत सा मान्यम् । तच्चद्रव्यगुणकर्मवर्त्ती- ति•तर्कसङ्ग्रह ॥ सामान्यंगुण साम्येनयत्रवस्त्वन्तरैकतेतिलक्षण लक्षितेकाव्यालङ्कारविशेषे ॥ य थाथा । प्रस्तुतस्य यदन्यगुणसाम्य विवक्षया । ऐकात्म्यवध्यतेयोगात् तत्सामान्यमितिस्मृतम् । अताह अर्पितावयतया विवक्षितु यदप्रस्तु तार्थेनसम्पृक्तमपरित्यक्तनिजगुणमे वतदेकात्मतयानिबध्यते•तत्समा नगुणनिबन्धनात्•सामान्यम । उ दाहरणम् । मलयजरसविलिप्तत नवोनवहारलताविभूषिता सितत

समासमभूहे ॥

सामि । अ॰ अर्द्धे ॥ निन्दायाम ॥ सामयति । षामसान्त्वप्रयोगे । अवङ्ग ॥

सामिधेनी । स्त्री॰ धाय्यायाम् । अग्निज्वालनार्थमृचि । ऋक्सामिधेनीधाय्याचयास्यादग्निसमिन्धने ॥ समिधामाधानी । समिधामधानेषिग्व्यण । षित्वान्ङीष् । यस्येत्ताद्धितलोप ॥ समिन्धि ॥

सामिधेनय । पु॰ मन्त्रविशेषे ॥ समिधामाधान । समिधामाधानेषिग्व्यण् ॥

सामीची । स्त्री॰ वन्दनायाम् ।

सामीप्यम् । न॰ सान्निध्ये । देशकालाभ्याक्रतायाम् प्रत्यासत्तौ । अव्यवहितत्वे ॥ समीपमेव । चतुर्वर्णादित्वात्॰ ष्यञ् ॥

सामुद्रम् । न॰ देहलक्षणे ॥ लवणविशेषे । कण्के । वक्षिरे ॥ अस्यगुणा यथा । सामुद्र मधुरपाकेसलिलं मधुरगुरु । नात्युष्णा दीपनमेदिसद्याः रमविदाहिच ॥ श्लेष्मलवातनुत्तिक्तमरूक्ष नातिशीतलम् ॥ समुद्रोदके सामुद्रमुदकंक्षारं सर्वदोषप्रकोपणम् ॥ समुद्रफेने ॥ धाराजलप्रभेदे ॥ तत्तु सक्षारलवण मुक्ताहृष्टिवलापहम् । विस्नस्रदोषल तीक्ष्णा सर्वकामसुगर्हितम् ॥ सामुद्रन्त्वाश्विनेमासिगुणर्गाङ्गवदादिशेत् । यतोऽगस्त्यस्यदिव्यर्षेरुदयात्सकलजलम् ॥ निर्मल निर्विष स्वादुशुक्ल स्यादृदोषजम ॥ तत्सामुद्रजलम । आहच । फूत्कारविषवातेननागानांव्योमचारिणाम् । वर्षासुसविष तोय दिव्यमप्याश्विन विना ॥ त्रि॰ समुद्रोत्पन्नवस्तुनि ॥ समुद्रेभवम् । तत्रभवइत्यण् ॥

सामुद्रकम् । न॰ समुद्रलवणे ॥ समुद्रोक्तस्त्रीपुलक्षणग्रन्थे ॥ तीर्थविशेषे ॥ त्रि॰ । स्त्रीपुसयोश्चिह्नवेत्तरि ॥

सामुद्रिक । त्रि॰ स्त्रीपुंसयोश्चिह्ने ॥ वेत्तास्त्रीपुसयोश्चिह्न सामुद्रिकउदाहृतइतिहारावली ॥ समुद्रसम्बन्धिनि ॥ समुद्रचारिणि ॥

सामूहिक । त्रि॰ सामवायिके ॥ समूहसमवैति । समवायान्समवैतीतिठक् ॥

साम्पराय । पु॰ परलोके ॥ परलोकसाधने । सम्पराय ' परलोक॰ तत्प्राप्तिप्रयोजनेशास्त्रीयेसाधनविशेषे ।

साम्परायिकम् । न॰ युद्धे । समीके । समरे ॥ त्रि॰ पारलौकिके ॥ यथा । प्रभुः प्रथमकल्पस्ययोनुकल्पेनवर्त्तते । नसाम्परायिक तस्य दुर्मतेर्विद्यतेफलम् ॥ पारलौकि

वषमन्त्रिषि । दृग्गवाक्षरटूते ॥ चाम्रातकी ॥ भद्रवत्साम् ॥ न॰ गन्धभेदे ॥ मलनिर्गमने ॥

सारणि . । स्त्री॰ क्षुद्रनद्याम् ॥ प्रसारण्याम् ॥

सारिणी । स्त्री॰ प्रसारण्याम् ॥ सूप्यनद्याम् ॥

सारण्ड । पुं॰ सर्पाण्डे ॥

सारत । पु॰ मुनौ ॥ त्रि॰ चर्तनसहवर्त्तमाने ॥

सारतरु । पुं॰ कदलीवृक्षे ॥ कृ॰ ध॰ ह्रस्व . ॥

सारत । अ॰ बलवद्वस्तुर्थे ॥ प्रमुख्यत्वसिल ॥

सारथि । पु॰ सूते । नियन्तरि ॥ तस्यलक्षणं यथा । निमित्तशकुनज्ञानीहयशिक्षाविशारद । हयायुर्वेदतत्त्वज्ञोभूविभागविशेषवित् ॥ स्वामिभक्तोमहोत्साहः सर्वप्राणिप्रियंवद । शूरश्चकृतविद्यश्चसारथि परिकीर्त्तितइति ॥ सरणश्चणम् । सृ॰ । अन्तर्भावितण्यर्थः ' सर्त्तेणि र्वृद्धिगणिन् ॥

सारथ्यम् . । न॰ सारथेः कर्म ष्यञ् भावेच ॥ पुरोहितादित्वात्यक् ॥

सारद् : । त्रि॰ सारदातरि ॥

सारद्रुम . । पुं॰ खदिरे ॥

सारपाद ' । पु॰ धामनिवृक्षे ॥

सारभृत् । त्रि॰ सारग्राहिणि ॥

सारमिति । स्त्री॰ वेदे । श्रुतौ । सारस्ययथार्थस्यमिति . ॥

सारमूषिका । स्त्री॰ देवदाल्याम् ॥

सारमेय . । पु॰ कुक्कुरे । सरमायाअपत्यम् । स्त्रीभ्योढक् ॥

सारमेयादन । पुं॰ नरकविशेषे ॥

सारमेयी । स्त्री॰ शुन्याम् ॥ ढगन्तात्ङीप ॥

सारलोहम् । न॰ लोहसारे ॥ कृतिभूरिप्रयोग ' ॥

सारव । त्रि॰ सरयूजातवस्तुनि ॥ सरय्वांभव । तत्रभवइत्यण् । दाण्डिनायनेतियलोप ॥ स्त्रियां टिड्ढेतिङीपि॰ सारवी ॥

सारवान् । त्रि॰ ससारे ॥

सारवती । स्त्री॰ छन्दोभेदे ॥ यथा । चेन्नगणचितयक्रमत • स्याद्गुरुरागतोत्तमत . । बौधमवत्सन्नपप्रथिता॰ सारवतीकविभि . कथिता ॥ सारविशिष्टार्था ॥

सारस : । पु॰ स्वनामख्यप्रसिद्धपक्षिविशेषे । पुष्करात्ने ॥ तस्यशकुनयथा । दृष्टार्थसिद्धि . सकलामुदिच्छ्यात्सारसवन्तृविलोकनेन । श्रुत्वाऽपृष्ठेनिनदंनगच्छेत्सिद्धथ्यर्थमीष्टस्यएवयस्मात् ॥ वामेनयोषित्कुशलाभकारीयस्यदक्षिणाग्रेन्नप्रतीर्थलब्ध्यै । य सारसाभ्यांयुगपद्विराव ' कृतोपि

सार्पिष : । त्रि० सर्पिः सम्बन्धिनि । सर्पिषा संस्कृते ॥ अण् ॥

सार्पिष्क : । त्रि० घृतसंस्कृते । सर्पिषा संस्कृतः । तेन संस्कृतमिति ठक् ॥ सार्पिष्कन्दाधिकसर्पिर्दधिभ्यां संस्कृत क्रमादिति हेमचन्द्र : ॥

सार्व॰ । पु॰ अर्हति । जिने ॥ त्रि॰ सर्वहिते । सर्वस्मै हितः । सर्वपुरुषाभ्यां णढञाविति ण ॥

सार्वजनिक : । त्रि॰ सर्वजनीने ॥ सर्वजन : । पूर्वकालैकेति समास । सर्वजनाय हितः । सर्वजनाट्ठञ् खश्चेति ठञ् ॥

सार्वभौम : । पु॰ सर्वपृथ्वीपती । चक्रवर्त्तिनि । कान्यकुब्जदेशे । उत्तरदिग्गजे ॥ सर्वस्याम् भूमौ विदितः । तत्रविदितइत्यण् । अनुशतिकादित्वादुभयपदवृद्धि : ॥ सर्वभूमेरीश्वरो वा । तस्येश्वर इत्यण् ॥ सर्वभूमिनिमित्तं संयोगउत्पातो वा । सर्वभूमिपृथिवीभ्यामणञौ इत्यण् ॥

सार्वजनीन : । त्रि॰ सर्वजनसाधौ ॥ खञ् ॥

सार्वलौकिक । त्रि॰ सर्वलोकविदिते ॥ सर्वलोकविदित । लोकसर्वलोकाट्ठञ् । अनुशतिकादि ॥

सार्षपम् । न॰ सर्षपशाके ॥ गुणा यथा । कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु । अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् ॥ सक्षारं लवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् ॥ सर्षपतैले ॥ दीपनं सार्षपं तैलं कटुपाकरसं लघु । लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषकम् ॥ कफमेदोनिलार्शोघ्नं शिरःकर्णामयापहम् । कण्डूकोठकृमिश्वित्रकुष्ठदुष्टकृमिप्रणुत् ॥ तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत् ॥ राजिकयो : ॰ कृष्णराजिकारक्तराजिकयो : ॥

साहिता । स्त्री॰ समागर्हित्वं । समानैश्वर्ये ॥

साल॰ । पु॰ वृक्षमात्रे । प्राकारे ॥ सर्ज्जपादपे । सखुआ॰ इ॰भा॰ प्र॰ । सत्यरी । प्राकारे । सर्ज्जविशेष । न॰ भूनिम्बे ॥

सालग्राम : । पुं॰ शालग्रामे ॥

सालन : । )
सालनिर्यास । ) पुं॰ धूनकौ । सर्ज्जरसे ॥

सालपर्णी । स्त्री॰ सालपर्ण्याम् । विदारिगन्धायाम् ॥ कू॰ प्र॰ र॰ को ॥ साल : पर्णमस्या : । सालस्येवपर्णमस्या वा । पाककर्णेतिङीष् ॥

सालपुष्पम् । न॰ स्थलपद्मे ॥

सालरस : । पुं॰ रसे । धूनके ।

सालवेष्ट '। पुं॰ धूनके ॥

सालशृङ्गम् । न॰ प्राचीराग्रे ॥

सालसार । पुं॰ तरौ । हिङ्गुनि ॥

सालिका स्त्री॰ शारिकायाम् ॥ सल॰ । ण्वुल् । ह्रस्वम् ॥

सालोक्यम् । न॰ एकलोकवासे । सलोकतायाम् ॥

साल्वक . । पुं॰ पक्षिविशेषे । गृध्रजातौ । क्षुद्रचूडे ॥

साल्व : । पुं॰ देशविशेषे ॥ तद्देशस्थे॰ पु भूम्नि॰ कारकुक्षीयेषु ॥ साल्वास्तुकारकुक्षीयामरवस्तुदशेरकाइतिहेमचन्द्र '॥ पुं॰ नृपतिविशेषे ॥ न॰ मूलविशेषे ॥ साल्वस्यमूलम् । पुष्पमूलेषुबहुलमित्यणोलुक् ॥ इतिप्रामाण्यात्साल्वशब्दस्य वृक्षत्वेपिबिल्वादित्वम्नचादित्वमाशेध्यम् ॥ त्रि॰ साल्वदेशजे ॥ साल्वेषुभव '। कच्छादिभ्यश्चत्यण् ॥ यथा॰ साल्व पदतिर्व्रजति ॥

साल्वक । त्रि॰ साल्वदेशजेब्राह्मणादौ ॥ गवि ॥ यवाग्वाम् ॥ साल्वेषुजात । अपदातौसाल्वादिति॰ गोयवाग्वोरितिवुञ् ॥

साल्वती । स्त्री॰ नाम्न्यसौ ॥

साल्वहा । पुं॰ श्रीकृष्णे ॥

साल्वेय : । पुं॰ नृपान्तरे ॥ तस्यापत्ये ॥ साल्वेयस्यापत्य॰ राजा । साल्वेयगान्धारिभ्याञ्चेत्यञ् ॥

सावधान . । त्रि॰ समाहितान्तःकरणे ॥ अवधानेनसहवर्त्तमान ॥ सचेतने ॥

सावन । पुं॰ यज्ञकर्मान्ते । यजमाने ॥ प्रचेतसि । वरुणे ॥ दिवसविशेषे ॥ यथा । खरमरीच्युदयद्वयान्तरं यदिहसावनसद्दिनस्फुटम् ॥ अपिच । अहोरात्रेणचैकेन सावनोदिवसःस्मृत । इति । त्रिंशद्दिनात्मकोमास ॥ त्रिंशतासौरदिवसै सावन ' परिकीर्त्तित . । न॰ सवनसम्बन्धिदिने । सोमयागेसवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिदिन सावनमितिमाधवाचार्य्या : ॥

सावयवम् । न॰ व्यक्तौ ॥ अवयवानामवयवोमिथ : संश्लेष : मिश्रण संयोगइतियावत् । अप्राप्तिपूर्विका प्राप्ति ' संयोग तेनसहवर्त्तत इतिसावयवम् । तथाहि॰ पृथिव्यादय . परस्परं संयुज्यन्ते॰ एवमन्येपि । नतुप्रधानमात्मद्रव्यादिभि ' संयोगस्तादात्म्यात् । नापिसत्त्वरजस्तमसांपरस्पर संयोगोऽप्राप्तेरभावात् ॥ त्रि॰ अवयवविशिष्टे ॥

सावर '। पुं॰ मृगविशेषे ॥ न॰ तन्मांसे ॥ यथा । मांससावरसम्भूतं पाचितंबहुधाघृते । वेसवारोपवा

साविवीव्रतम् । न० ज्येष्ठकृष्णचतुर्द्दश्याम्स्त्रीणांकर्त्तव्यं नियमविशेषे । वटसाविवी॰इ॰भाषाप्रसिद्धे ॥
साविवीसूत्रम् । न० यज्ञोपवीते ॥
साशङ्क । वि० सभये ॥
साशूक । पु० कम्बले । इ॰ कारा बली ॥
साश्रुधी । स्त्री० श्वश्र्वाम् इ॰ वि॰ शेष ॥
सास । पुं० चापविशेषे ॥ असिन धनुषासहवर्त्तते । तेनसहेतिबहुव्रीहि ॥
सासि । वि० सखड्गे ॥ सहासि नावर्त्तते । तेनसहेतितुल्ययोगवृतिबहुव्रीहि ॥
सासुसू । पु० सवाणे ॥ असुसूभि र्वाणै सहिते ॥
सास्थिरत्न॰ । न० वांशे ॥ इ॰ लि॰ य ॥
सास्ना । स्त्री० गलकम्बले । शवाङ् गलस्यतेकम्बलाकृतिमांसे ॥ स स्नि । असस्वप्ने । रास्नासास्नेति साधु ॥
साहङ्कार । वि० गर्वयुक्ते ॥
साहचर्य्यम् । न० साहित्ये । एकक्रियान्वयित्वे । सामानाधिकरण्ये एकाधिकरणहत्तित्वे ॥ सहचरस्य भाव । ष्यञ् ॥
साहस । पु० अग्निविशेषे ॥ यथा । प्रायश्चित्ते विधुरश्चैवप्रायश्चित्ते तु साहस । लक्षहोमेतुवन्हि स्यात्कोटिहोमेहुताशन ॥ इतितिथ्यादितत्त्वम् ॥ दमे । दण्डविशेषे ॥ सर्वाविधीयथा । प्रथम साहस स्मृत । मध्यम पञ्चविज्ञेय : सहस्रन्त्वेवचोत्तम ॥ लोभात् सहस्र दण्डन्तुमोहात्पूर्वन्तुसाहसम । भयाद्वौमध्यमौदण्डौमैत्र्यात्पूर्व्वं चतुर्गुणमितिमनुवचसाक्षिप्रकरणे ८ ऽध्याय. ॥ न० बलात्कारकृतकार्ये । बलात्समच क्रियमाणे पारुष्यादौ ॥ तथाचनारद । सहसाक्रियतेकर्मयत्किञ्चिद्बलदर्पितै । तत्साहसमितिप्रोक्त सहोबलमिहोच्यते ॥ मनुष्यमारण स्तेयपरदाराभिमर्षणम् । पारुष्यमन्तरञ्चेतिसाहसं पञ्चधास्मृतमिति ॥ दुष्कृतकर्मणि ॥ अविमृष्यकृतौ । पश्चाद्दोषमनालोच्यकरणे ॥ हठे ॥ औत्पातिककर्मणि । सहसिकर्मभवम् । तत्रभव इत्यण् ॥ शास्त्रत्यागी
साहसाङ्क । पु० विक्रमादित्यभूपतौ ॥ साहसिके ॥
साहसिक : । पु० चौरे । अविचार्यकारिणि ॥ बलेनपरदारधनादिग्राहकादिषि ॥ अवरात्मवमानकार्यां । यथाइमनु । ऐन्द्र स्थान

कलघुभर्गकर्मेन्द्रे । कर्म-पालनमुख हिसपूर्वे पुण्डरीकसुखहितिनखानाम ॥ इति ॥ ( अमराः ) ॥ तज्जनोत्पन्नस्फनमाइ सिंहलस्नेसमुकूलीभीगौयचु विमर्दन । अल्पोदरीलपुषक्ष सीरस्त्रीगजविक्रम ॥ उत्तरस्य स्मृत श्रेष्ठे । रत्नशिमाज्ञभे । पर्वतांच्चकी ॥ सिद्धान्त । विवक्षरणे । सिंचे । स च्छायाद्रनुमीक्ष ।

सिंहकेलि । पु॰ पूर्वाजने । मञ्जुघोषे ॥

सिंहकेशर । पु॰ बकुले ॥ सिंहसटाय म् ॥

सिंहतल । पु॰ सहतले । सव्यदक्षिणयोः पाण्योर्मिलितयोर्विस्तृताङ्गुल्योः । प्रतले ॥ सिंहस्येव तलमत्र ॥

सिंहतुण्ड । पुं॰ सीहुण्डे । स्नुह्याम् ॥

सिंहद्वार न॰ प्रवेशद्वारे प्रवेशने । सिंहपौल॰ इ॰ भा॰ प्र॰ ॥ द्वाराये सम्भ्रापरिचिते । तोरणे ॥

सिंहध्वनि । पु॰ सिंहनादे ॥

सिंहनाद । पु॰ युद्धे सैन्यानायैः कृङ्गाररवे । ससिंहनाद । चूडायाम् ॥ सिंहवन्नदनम् । घञ् । घञ् ॥ सिंहनादोभटानाहि सिंहवन्नदनस्मृतम् ॥ गजयूथदर्शनात् तद्गनाय यथा सिंहस्य नादस्तथा । परबलभङ्गाय क्रोत्सा । इति द्वयोर्वचयोराव ससिंहनाद ॥ कालहसास्येकुन्दोभिदेगुणगुणौ ॥

सिंहनादिका । स्त्री॰ दुरालभायाम् ॥

सिंहपर्णी । स्त्री॰ वासके ॥

सिंहपुच्छ पु॰ वासके ॥

सिंहपुच्छिका । स्त्री॰ चित्रपर्णिकायाम् । चुद्रचाकुलिया॰ इ॰ गौ॰ भा॰ ॥

सिंहपुच्छी । स्त्री॰ पृश्निपर्ण्याम ॥ सिंहपुच्छाकारपुष्पत्वात् । उपमानात्पच्च च पुच्छाचेति ङीष् ॥ माषपर्ण्याम् ॥ वासके ॥

सिंहपुष्पी । स्त्री॰ पृश्निपर्ण्याम् ॥

सिंहमुखी । स्त्री॰ वासके ॥

सिंहयाना स्त्री॰ दुर्गायाम ॥

सिंहरथा । स्त्री॰ दुर्गायाम् ॥

सिंहल । पु॰ जम्बुद्वीपस्योपद्वीपप्रभेदे । सिलोन॰ इ॰ गौ॰ दि प्र॰ । देशविशेषे । यथा । दक्षिणे ऽवन्तिमाहेन्द्रमलयाऋष्यमूककाश्चित्रकूटमहारण्यकाञ्चीसिंहलकौङ्कणा इति ॥ देशान्तरेपिच । मरुदेशात्पूर्वभागेकामाद्रेर्दक्षिणेशिवे । सिंहलाख्योमहादेशः सर्वदेशोत्तमोत्तम इति ॥ न॰ पित्तले ॥ रङ्गे

त्वचे ॥ इालचीनी॰ इ॰ भा॰ ॥

सिंहलस्था । स्त्री॰ सैंहल्याम् ॥ त्रि॰ सिंहलदेशवासिनि ॥

सिंहलास्थान । पु॰ तालवृक्षसदृश वृक्षविशेषे । पोतृफले ॥

सिंहलील । पु॰ रतिबन्धविशेषे ॥ यथा । लिङ्गोपरिस्थितानारीभूमौदत्त्वापदद्वयम् हृदयेदत्तहस्ताचसिंहलील प्रकीर्त्तित ॥ लिङ्गोपरिस्थितानारीकान्तोरस्थपदद्वया । हृदयेदत्तहस्ताचसिंहलीलो प्यसावपि ॥

सिंहवाहिनी । स्त्री॰ दुर्गायाम् ॥ यथा । सिंहमारुह्यकन्यान्तेनिहतो महिषोयथा । महिषघ्नीततोदेवीकन्यावैसिंहवाहिनी ॥

सिंहविक्रान्त । पु॰ अश्वेहये । त्रि॰ सिंहतुल्यविक्रमवति ॥

सिंहविन्ना । स्त्री॰ माषपर्ण्याम ॥

सिंहविलोकितम् । न॰ मात्रावृत्तान्तरे ॥ शृणुसिंहविलोकितवृत्तवरवरयमकामनोहरचरणधरम् । वरणीपतिमानसमधिकलितच्छलवेदचतुष्कनगणललितम् ॥ यथा । दिवसादवसादिततिमिरवनवनजावलिबोधनिसर्गधनम् । धनदेन्दुकृतान्तपाथिनमितम्मितश्रुवनतलनमदिवसकृतम् ॥ सिंहावलोकिते ॥

सिंहसंहनन॰ । त्रि॰ वराङ्गरूपोपेते ॥ सिंहसंहनन सत्याद्योविसर्वाङ्गसुन्दर ॥ सिंहस्येवसंहननदेहोऽस्य । रूढिशब्दोयम् ॥ न॰ सिंहस्यसम्यग्वधे ॥

सिंहसिन॰ । पु॰ शुद्धोदनपितरि ।

सिंहा । स्त्री॰ धमन्याम् ॥ नाड्याम् ॥

सिंहाणम् । न॰ मण्डूरे । लोहमले ॥ सिंहमानयति । अन॰ । कर्मण्यण् । पृषोदरादि॰ ॥

सिंहाधिप । पु॰ सूर्य्ये ॥

सिंहानम् । न॰ मण्डूरे ॥ सिंहवदनमिति । अन॰ अच् ॥

सिंहासनम् । न॰ हेममयेराजासने ॥ सिंहवदासने ॥ सिंहाकारमासनम । सिंहस्यवासनम्वा ॥ परासनस्थो येराजायेराजाचनिरासन . सपरैर्हन्यतेसिंहैरिवमत्तोगजाधिप . ॥ पु॰ रतिबन्धभेदे । यथा । स्वजङ्घाद्वयबाहूचकृत्वायोषापदद्वयम् । स्तनौधृत्वारमेत्कामीबन्ध सिंहासनेमत ॥

सिंहास्य । पु॰ वासके ॥ सिंहास्यमस्य । सिंहास्यसदृशपुष्पत्वात् ॥ त्रि॰ सिंहसमानमुखे ॥

सिंहिका । स्त्री॰ राहुमातरि ॥ कश्यपस्यगृहिणीतुसिंहिकाराहुवास्तनयावजीजनत् । पूर्वजोहरिनिकृत्तकन्धरोदेवतैरवजोनिपातित

सिंहिकासुतः । ) पुं० राहौ ॥
सिंहिकासूनुः । )

भूसुदे ॥ वास्तुपुरुषे ॥

सिंहनी । स्त्री० मात्रावृत्तान्तरे ॥ यदि गाथातुर्यपद विंशतिमात्र चया धिनीभवति । फणिपतिपिङ्गलभ णितर्ताद्दपरीतन्तु सिंहिनीवृत्तम् । यथा । पर्याप्ताजलधाराविरमति नचपन्तलोचनेजलधारा । जगमु प्रसाद्मात्रास्तदपिनमेभवतिजीवि तप्राशा ॥

सिंही । स्त्री० कण्टकार्याम् । वार्ताकौ ॥ वासके ॥ राहुमातरि ॥ हिनस्ति । हिंसो० पचाद्यच् । पृषोदरादि । गौरादि ॥ सुवर्णवर्णवराटके ॥ मुद्गपर्ण्याम् ॥

सिंहीलता । स्त्री० हरस्याम ॥

सिंहीवृता । स्त्री० अर्करोच्छन्दोभेदे १४ । वसन्ततिलके ॥

सिकता । स्त्री० सिकतिले० देशे ॥ सिकतास्त्यस्मिन् । देशेलुविलचौ चेति० सिकताशर्कराभ्याञ्चेतिविहि तस्याणोलुप् ॥ रुजि ॥

सिकताः । स्त्री० भूम्नि ॥ वालुकायाम् ॥ सिच्यते । सिच्क्षरणे । बाहुलकादतच् । पृषोदरादि ॥

सिकतामयम् । न० वालुकामयदेशे । सैकते ॥ सिकतानांविकारः । मयड्वैतयोर्भाषायामभक्ष्याच्छादन योरितिमयट् ॥

सिकतावान् । त्रि० वालुकाबहुलेदेशे सैकते ॥ अश्मप्रायमृदधिकेदेशे ॥ सिकताऽस्त्यस्य । मतुप् ॥

सिकतिलः । त्रि० सिकतावति ॥ सिकताऽस्त्यस्य । देशेलुविलचौ चेति० इलच् ॥

सिक्तः । त्रि० अभिषिक्ते ॥ क्षतसेच ने । सेकाश्रये ॥ सिचि क्त ॥ एकोमुनिः कुम्भकुशाग्रहस्तआम्रस्य मूलेसलिलंददान । आम्रश्च सिक्तः ॥ पितरश्चतृप्ताएकाक्रियाद्व्य र्थकरीप्रसिद्धा ॥

सिक्थः । पु० भक्तपुलाके । ग्रासे ॥ न० मधूच्छिष्टे । मेघ० सिथा० ह० भा० प्र० नीम० र्दु लेच । नीस्याम् ॥ सिच्यते । सिच्यतेवा । षिच० । पातृतुदिवचिरिचिसिचि भ्यस्थक ॥

सिक्थकम् । न० सिक्थे । स्वार्थेकः ॥

सिक्थवर्तिका । स्त्री० मधूच्छिष्टव र्त्तिकायाम् । सिक्थदीपे । सिक्थस्यवर्त्तिका ॥

सिङ्घाणम् । न० सिङ्घाणे ॥

सिचा । स्त्री० वस्त्रे ॥

सिचयः । पु० वस्त्रे ॥ जीर्णवस्त्रे ॥

सिघ्नन् । त्रि० क्षपयति ॥ षिचेः शतृप्रत्ययः ॥

सिञ्चिता । स्त्री॰ पिप्पल्याम् ॥

सित । पु॰ शुक्लवर्णे ॥ अवदाते । गौरवर्णे । बाणे । शरे ॥ न॰ चन्द्ने ॥ रूप्ये ॥ मूलके ॥ त्रि॰ समाप्ते । अवसिते ॥ शुक्लवर्णविशिष्टे । धवले ॥ बद्धे । ब धा॰ क्त॰ भा॰ ॥ ज्ञाते । सीवतेः । षिञ् बन्धने । क्त । अतिसि । षो॰ क्त । द्यतिस्यतीत्वं वा ॥ सिनोतिर्वा । श्रिवृभ्य क्त ॥ समाप्तौ ॥

सितकण्टा । ) सितकण्टारिका ) स्त्री॰ श्वेतकण्टकार्याम् ॥

सितकण्ठ । पु॰ दात्यूहपक्षिणि ॥

सितकर: । पु॰ चन्द्रे । कर्पूरे ॥

सितकर्णी । स्त्री॰ वासके ॥

सितकुञ्जर: । पुं॰ इन्द्रे ॥ इन्द्रगजे ॥

सितगङ्गा । स्त्री॰ कामरूपप्रसिद्धनदीविशेषे । स्वर्णदाम् ॥ इ॰ कालिकापुराणम् ॥

सितगुञ्जा । स्त्री॰ श्वेतगुञ्जायाम् । काकपीलौ ॥

सितचिह्न । पुं॰ वालुकागडेमत्स्ये ॥

सितच्छत्रम् । न॰ नृपच्छत्रे ॥

सितच्छत्रा । स्त्री॰ शतपुष्पायाम् ॥ सितं वद्धंशुभ्रं वाछत्रमस्याः ॥

सितच्छत्रित । त्रि॰ श्वेतच्छत्रयुक्ते ॥

सितच्छद । पु॰ हंसे ॥ श्वेतच्छदविशिष्टे ॥ त्रि॰ सिताः शुभ्राः छदा यस्य ॥

सितच्छदा । स्त्री॰ श्वेतदूर्वायाम् ॥

सिततुरग । पु॰ अर्जुनाख्यपाण्डवे ॥

सितदर्भ । पुं॰ श्वेतकुशे ॥

सितदीप्य । पु॰ श्वेतजीरके ॥

सितधातु । पु॰ खठिन्याम् ॥

सितपक्ष । पु॰ हंसे । शुक्लपक्षे ॥ त्रि॰ तद्वति ॥

सितपर्णी । स्त्री॰ अर्कपुष्पिकायाम् ॥

सितपाटलिका । स्त्री॰ काष्ठपाटलायाम् ॥

सितपुङ्खा । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितपुष्प: । पु॰ तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न॰ कैवर्तीमुस्तके ॥

सितपुष्पा । स्त्री॰ मल्लिकायाम् ॥

सितपुष्पी । स्त्री॰ श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम् । न॰ शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाष । पुं॰ राजमाषे ॥

सितरञ्जन: । पु॰ पीतवर्णे ॥

सितरश्मि: । पु॰ चन्द्रे ॥

सितवर्णाभू । पुं॰ पुनर्नवायाम् ॥

सितवाजी । पुं॰ अर्जुने ॥

सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥

सितशिम्बिक : पु॰ गोधूमे ॥

सितशूरण । पु॰ वनशोले ॥

सितसर्षप । पु॰ श्वेतसर्षपे । सिद्धार्थे ॥

सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितसार । पुं॰ शालिञ्चशाके ॥

सितसारक । पु॰ तिन्दुके ॥ शालिञ्चे ॥

सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥

सितसिन्धु । स्त्री॰ गङ्गायाम् ॥

सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । अञ्जिसृषिभ्य क्तः । टाप् । शुभ्रवर्णत्वाद्वा ॥ खण्डन्तुसितताऽरूप सुश्वेत शर्करा सिता । सितामधुरारुच्यावात पित्तास्रदाहहृत् ॥ मूर्छाच्छर्दिज्वरान्हन्तिसुशीताशुक्रकारिणी ॥ मल्लायाम् ॥ ज्योत्स्नायाम् ॥ अप्सरायाम् ॥ गिरिजाताऽपराजितायाम् ॥ वाकुच्याम् ॥ त्रायमाणायाम् ॥ मद्ये ॥ पिङ्गायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम् ॥ चन्द्रिकायाम् ॥ कुटुम्बिन्याम् ॥ गङ्गायाम् ॥

सितांशु । पु॰ चन्द्रे ॥ कर्पूरे ॥

सितांशुतैलम् । न॰ कर्पूरतैले ॥

सिताखण्ड । पु॰ मधुशर्करायां ॥

सिताङ्ग । पु॰ बालुकागडमत्स्ये ॥

सिताङ्ग । पुं॰ श्वेतरोहिते ॥

सिताजाजी । स्त्री॰ श्वेतजीरके ।

सिताद्रि । पु॰ गुडे ॥ सितायाअद्रि ॥

सितानन । पुं॰ गरुडे ॥

सितापाङ्ग । पु॰ मयूरे ॥

सिताब्जम् । न॰ श्वेतकमले ॥

सिताभ । पु॰ कर्पूरे ॥

सिताभ्र पु॰ हिमवालुकायाम् । कर्पूरे ॥ सित श्वैत्य॰ बन्धन वा॰ चन्द्र वा॰ अभ्रति । अभ्रगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिताभ्रमिववा ॥

सिताभ्रकम् । न॰ कर्पूरे ॥

सिताम्बर । पु॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लवस्त्रवति ॥

सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके ॥ सित शुक्लञ्चतदम्भोजञ्च ॥

सितार्जक । पु॰ श्वेततुलस्याम् कुठेरके ॥

सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥

सितार्क । पु॰ श्वेतमन्दारे ॥

सिताखिकटभी । स्त्री॰ श्वेतकिणही वृक्षे ॥

सिताम्बर । पुं॰ सूक्ष्मेपचके । श्वेताम्बरे । सितवस्त्राद्युत्तरीयवतिख्याते सुनिसमूहे ॥

सितावरी । स्त्री॰ वाकुच्याम् ॥

सितासित । पु॰ बलभद्रे । हलायुधे ॥

सिताह्वय । पुं॰ श्वेतशिग्रौ ॥ श्वेतरोहिते ॥

सितेषु । पु॰ श्वेतेषौ ॥

सितेतर: । पुं॰ कृष्णशालौ ॥ कुलत्थे ॥ कृष्णे ॥ त्रि॰ कृष्णवर्णवति ॥

सितेतरगति । पु॰ वह्नौ ॥

सितोद । पुं॰ सरोविशेषे ॥ विपुलाख्यस्याद्रेर्मूले वैभ्राजाख्यवनतत्सितोदकनामसर॰ यदकर्का न्तिभिरब्जै र्मण्डितसुरैरासेव्यते । तदुक्तम् । वैभ्राजं विपुलेमूले सितोदकसरोत्तम । देवै र्निषेव्यते कञ्जनामभिरग्रुमत्प्रभैरिति ॥ सितसमुद्रकायश्च । उत्तरपदलोपेऽस्य उदकशेदादेश ॥

सितोदक । पु॰ सितेदे ॥ खार्थेक ॥

सितोदर: । पु॰ कुबेरे ॥

सितोपल । पु॰ स्फटिके ॥ खिलाधातौ ॥ सितास्मनि । सिश्री॰ खौला॰ कृ॰ भाषाप्रसिद्धा ॥

सितोपला । स्त्री॰ शर्करायाम् ॥ शर्कराविकारभेदे । मिश्रीतिलोकविश्रुते ॥ सितोपलासरालघ्वी-वातपित्तहरीहिमा । यथायथाहि नैर्मल्यं मधुरत्वं तथातथा ॥ स्नेहलाघवशैत्यानिसरत्वञ्चतथातथा ॥

सिद्ध. । पु॰ व्यासादौ ॥ देवयोनिविशेषे । अणिमादिगुणोपेतेविश्वावसुप्रभृतौ ॥ विष्कम्भादियोगान्तरगतयोगविशेषे ॥ तत्कालसफलयथा । जितेन्द्रिय. सर्वकाल। नियामेगौरीतिशूरोमधुरो विनीत । सत्योपपन्नः ऋतभूरिभोगीयस्यप्रसूतौकिलसिद्धयोग । इति ॥ गुडे असेधीत्. इति सिद्ध. षिधुहिंसासराद्धयो. । गत्यर्थाकर्मकेतिकर्तरिक्त. । सिद्धिरस्यास्तीतिवा । अर्शआद्यच् ॥ कृष्णधत्तूरे ॥ व्यवहारे ॥ रे । शब्दः सूप्णोमीत्यादिव्यवहारेषप्रसिद्धे । न॰ सैन्धवलवणे ॥ त्रि॰ योगिनि ॥ जन्मनैवविनाप्रयत्नंधमं ज्ञानवैराग्यैश्वर्यातिशयप्राप्ते ॥ पूर्णमनोरथे ॥ अधिगतपरमार्थे । पुष्पभृत्यादिभि सहायै: सम्पन्ने ॥ प्रसिद्धे ॥ नित्ये ॥ यथासिद्धधातौ॰ सौद्धापृथिवी॰ सिद्धमाकाशमिति

॥ कार्यं च्यवि भवतीति । तथ्याहि सिद्धपीठम् सिद्ध . सूप . सिद्धायवाग् रिति ॥ मुक्तौ ॥ निष्पन्ने । पक्वे ॥ सिध्यतिस्म । सिध् संराद्धौ । क्त । सिद्धि साधनाप्रयोग ॥ सर्वं भूतादौ विज्ञाधिष्ठाने परमेश्वरे ॥ तत्वस्था नाज्ञात्मकाश्चघटादि सिद्धमित्युच्यते । परमात्मा तु । सर्वदानवधस्त तमक सद्दोपकप्रमाणाभावादिति नित्य निष्पन्नरूपत्वान्नित्य सिद्धमुच्यते ॥ सिद्धिर्मोक्षोज्ञानमात्तदुभयमीश्वरस्यास्त सिद्धश्चमनन्याधीन सिद्धत्वात् सिद्धेर्वा ॥ सिद्धिविशिष्टे ॥

सिद्धक । पु • शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री • कामाख्याया पञ्चमूर्त्यन्तर्गतप्रथममूर्तौ ॥

सिद्धक्षेत्र । पुं • क्षेत्रदेशान्तर्गतदेशविशेषे ॥

सिद्धगङ्गा । स्त्री • मन्दाकिन्याम् ॥

सिद्धजलम् । न • काञ्जिके । पक्वतोये ।

सिद्धदेव : । पुं • शिवे ।

सिद्धधातु । पु • पारदे ॥

सिद्धपीठ । पु • सिद्धस्थाने ॥ यथा । आनीलपर्वतशिखर तट्टोमोवा कोटिसंख्यका । मद्याविद्यापकोटि । सिद्धपीठ . प्रकीर्तितं ॥

सिद्धपुरम् । न • भूगोलख्यातिदेश विशेषे । तच्चोत्तरकुरुवर्षवासिन स्वदेशेस्थि । यथा । लङ्काकुमध्ये यमकोटिरस्या . प्राक्पश्चिमे रोमकपत्तनञ्च । अधस्तत सिद्धपुरं सुमेरु . सौम्येऽथयाम्ये वडवानलञ्च ॥ कुवृत्तपादान्तरिताभिताभिस्थानानि षट्गोलविदोवदन्ति ॥

सिद्धपुरी । स्त्री • सिद्धपुरे ॥

सिद्धपुष्प . । पु • करवीरवृक्षे ॥

सिद्धप्रयोजन . । पु • गौरसर्षपे ॥ त्रि • कृतकार्ये ॥ सिद्धं प्रयोजनं येन • यस्य वा ॥

सिद्धमन्त्र । पु • सिद्धिप्राप्तमन्त्रे ॥

सिद्धमोदक . । पु • तवराजीखखण्डे ॥

सिद्धयोगिनी । स्त्री • योगिनीविशेषे ।

सिद्धरस । पु • पारदे । रसे । त्रि • व्याडिप्रभृतिषु । सिद्धश्चासौरसश्च ॥ सिद्धोरसोयेषाम् ॥

सिद्धविद्या । स्त्री • दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसंघ । पु • कपिलादिसिद्धानांसमूहे ॥

सिद्धसलिलम् । न • काञ्जिके ॥

सिद्धसाधन : । पु • गौरसर्षपे । न • सिद्धस्यवस्तुन साधने । सा

ध्यवस्थानिश्चयेसर्व्वेप्यनुमाने ॥

सिद्धसिन्धु । स्त्री॰ धर्म्मद्रव्याम् । गङ्गायाम । आकाशगङ्गायाम् ॥ सिद्धनांसिन्धुः ॥

सिद्धसेन । पु॰ कार्त्तिकेये ॥

सिद्धसेवित । पु॰ भैरवे ॥ त्रि॰ कपिलादिसिद्धोपासिते ॥

सिद्धा । स्त्री॰ ऋद्ध्याख्यौषधौ ॥ सिद्धिरस्त्यस्याम् । अर्शआद्यचि टाप ॥ योगिनीविशेषे ॥

सिद्धान्तः । पु॰ वस्तुतात्पर्य्यविषयावधारणे ॥ पूर्वपक्ष निरस्य सिद्धपक्षस्थापने । वादिप्रतिवादिभ्यां निर्णीतेर्थे ॥ सिद्धान्तलक्षणंतु गौतमीयथा । तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तइति ॥ अस्यार्थः । तन्त्रशास्त्रं तदेवाधिकरणंज्ञापकंतयायस्य॰ तादृशोयोभ्युपगम॰ तस्यसमीचीनतयाऽसंशयरूपतयास्थिति॰ तथाचशास्त्रितार्थनिश्चय सिद्धान्त. । अत्राभ्युपगम्यमानोर्थः सिद्धान्तइति भाष्यम् । अभ्युपगमं सिद्धान्तइतिवार्त्तिकटीका । नचात्रविरोधशङ्कनीय । आचार्य्यैः परिहृतत्वात् । तथाचविसूत्रीनिबन्ध । अर्थाभ्युपगमयोर्गुणप्रधानभावस्याविवक्षितत्वात्॰ अर्थोभ्युपगमोऽभ्युपगम्यमानोवार्थः. सिद्धान्त॰ इति सूत्रभाष्यवार्त्तिकटीकासुनविरोध । अत्रचभाष्यानुसारात्सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम सिद्धान्तान्तरम . सिद्धान्तइति सूत्रार्थइतितुनयुक्तम अधिमसूत्रानुत्थानापत्ते । तंत्रसिद्धान्तत्वंनहृयमनुगम्यतत्राधिकरणाभ्युपगमान्यतमसिद्धान्तइतिकश्चित् ॥ २६ ॥ सिद्धान्तं विभजते । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितीनामर्थान्तरभावात् ॥ २७ ॥ सचतुर्विधइतिशेष । सर्वतन्त्रादिसंस्थितीनामर्थान्तभावात्॰ भेदादित्यर्थ. ॥ २७ ॥ राद्धान्ते ॥ सिद्धोऽन्तोनिश्चयोयस्मिन् ॥ सविधज्योतिषग्रन्थेषु । ब्रह्मसूर्य्यसोमबृहस्पतिगर्गनारदपराशरपुलस्त्यवशिष्ठसिद्धान्तेषु ॥

सिद्धान्ताचारः । पु॰ वामाचारादुत्तमआचारविशेषे ॥ यथा । आत्मानंदेवतामत्वायजेद्देवीस्वमानसे । सदाशुद्ध सदाशान्त सिद्धाताचारउच्यते॰ इत्याचारभेदतन्त्रम् ॥

सिद्धान्ती । पुं॰ मीमांसके ॥ सिद्धान्तोविद्यतेऽस्य ॥ इनि ॥

सिद्धापगा । स्त्री॰ स्वर्ण्याम् । गङ्गायाम् ॥

सिद्धायिका । स्त्री॰ जिनशासनदेव

तारविशेषे ॥

सिद्धार्थः । पुं॰ विष्णौ ॥ सिद्धो निर्वृत्तो निष्पन्नः काम्यमानोऽर्थोऽस्य । आप्तकामत्वादिति ॥ रुद्रे । सितसर्षपे ॥ शाक्यसिंहे । शौद्धोदनौ ॥ वर्त्तमानार्हत्पितरि ॥ जिनमग्रविंशतीवर्त्ते ॥ सिद्धार्थोऽस्यास्त्यश्वत्था ॥ वत्सरविशेषे । तत्फलं यथा । तोयपूर्णा स्मृता मेघा बहुशस्याश्च मेदिनी । निष्ठुराः पार्थिवा देवि सिद्धार्थे वत्सरानने ॥ ५३ ॥ त्रि॰ प्रसिद्धार्थे ॥

सिद्धार्था । स्त्री॰ वर्त्तमानार्हन्मातरि ॥

सिद्धासनम् । न॰ ब्रह्मणि ॥ सिद्धं यत् सर्वभूतादि विश्वाधिष्ठानमव्ययम् । यस्मिन् सिद्धाः समाविष्टास्तद्वै सिद्धासनं विदुः ॥ सिद्धस्य तदासनञ्च । सिद्धानामासनं वा । कर्मधारयतत्पुरुषाभ्याम्॰ ब्रह्मवैवर्त्त॰ ॥ योगिनामासनविशेषे ॥ यथा । योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरे तिष्ठेदेतदतो हि योगिसुखदं सिद्धासनं प्रोच्यते॰ इति ॥ योनिस्थानकमिति ॥ एकपादमूलं लिङ्गमूले॰ द्वितीयपादमूलमथाधृत्यर्थः ॥

सिद्धिः । स्त्री॰ निष्पत्तौ ॥ पादुकायाम् ॥ अन्तर्द्धाने ॥ वृद्धौ ॥ ऋद्धौ नामौषधौ ॥ दुर्गायाम् ॥ सम्पत्तौ ॥ योगे ॥ साङ्ख्यानामष्टविधसिद्धौ । यथा ॥ ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोऽष्टौ ॥ विहन्यमानस्तु दुःखत्रित्वात् तद्विघातास्त्रय इति । अमा मुख्यास्तिस्रः सिद्धयः । तदुपायतया चेतरा गौण्यः पञ्च सिद्धयः । तास्वपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः ॥ पुष्पाक्षत्यादिविषयानुविद्धीसिद्धिरसा । पुंस्त्वमणि॰ प्रकृताऽव्यक्ते॰ आदिग्रहणात्॰ व्यक्ते च यावद्विविज्ञानसा सिद्धिरित्युच्यते ॥ या तु योगान्तरे ॥ यथावर्गी समगतेलग्ने शुभैरवाथ यत्नान्विते । सिद्धिः स्त्रीभृत्ययोगायिनां सिद्धिदायकः । इति ॥ राज्ञामपि त्रय साध्यासु पुरुषयत्नाभासिकासु॰ प्रभुसिद्धिमन्त्रसिद्ध्युत्साहसिद्धिषु ॥ सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमुच्यते ॥ तथाच । कर्मणामारम्भोपायः । पुरुषद्रव्यसम्पत् । देशकालविभागः । विनिपातप्र

संकथ्यतिनिष्ठातथ्यम् ॥ काथे ॥ सिनोति । षिञ् । इण्षिञि तिनक् ॥ त्रि० शुक्लगुणविशिष्टे ।

सिनी । स्त्री० शुक्लगुणवत्याम् । श्वेतासितासिनीश्येनीतिव्याडिः ॥

सिनीवाली । स्त्री० दृष्टेन्दुकलामायाम् ॥ चतुर्दशीयोगाद्दृष्टचन्द्रा सती० अमा० सिनी० वालीपदवाच्याभवति । एनविष्णुनासह वर्त्ततेसालक्ष्मी । तद्योगात्सिनीचन्द्रकला । ज्योत्स्नादित्वादिनि । सिनीवलति । वल० । कर्मण्यण् । ङीप् ॥ दुर्गायाम् । हे० मे० नी० ॥

सिन्दुक । पुं० । सिन्दुवारे ॥ स्यन्दते । स्यन्दूप्रस्रवणे । स्यन्दे सम्प्रसारणञ्चेत्युः । बाहुलकाद्धधोम । स्वार्थसञ्ज्ञायांवाकन् ॥ श्वेतनीलपुष्पभेदात्सिन्धुकोद्विविधोमतः ।

सिन्दुवारः । पुं० निर्गुण्ड्याम् । सिन्दुके । म्योंडी० सभालू० बहुधा० इ० भा० प्र० ॥ निसिन्दा० इनछर० इ० गौ० दे० भा० ॥ सिन्दुषणोति० वारयतिवा । वृञ् वरणेवृञ् आदरणेवा । कर्मण्यण् ॥

सिन्दूर । पुं० वृक्षविशेषे ॥ न० रक्तवर्णचूर्णविशेषे । नागसम्भवे । सीमन्तके ॥ तद्धारणात्स्वाम्यायुर्वृद्धिर्भवतिययोक्तं काशीखण्डे । हरिद्रांकुङ्कुमञ्चैवसिन्दूरकज्जलं तथा । कार्पासकञ्चताम्बूलं माङ्गल्याभरणं शुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्त्तुरायुष्यमिच्छन्तीदूरयेन्न पतिव्रतेति ॥ अस्यपर्यायादयोयथा । सिन्दूरंरक्तरेणुश्चनागगर्भञ्चसीसजम् । सीसोपधातुः सिन्दूरगुणैस्तत्सीसवन्मतम् ॥ सयोगजप्रभावेणतस्याप्यन्येगुणाः स्मृताः । सिन्दूरमुष्णंवीसर्पकुष्ठकण्डूविषापहम् ॥ भग्नसन्धानजननंव्रणशोधनरोपणम् । अस्यशोधनंयथा । दुग्धाम्लयोगतस्तस्यविशुद्धिर्गदिताबुधैरिति ॥ स्यन्दते । स्यन्दू० । स्यन्दे सम्प्रसारणञ्चेत्यूरन् ॥

सिन्दूरकारणम् । न० सीसके ॥

सिन्दूरतिलक । पुं० मतङ्गजे । हस्तिनि ॥

सिन्दूरतिलका । स्त्री० सधवायांनार्याम् ॥

सिन्दूरपुष्पी । स्त्री० सिन्दूरीतिख्याते पुष्पवृक्षविशेषे । वृषपुष्प्याम् । करच्छदायाम् ॥ अस्यागुणाः । कटुत्वम्० तिक्तत्वम्० कषायत्वम्० श्लेष्मवातशिरोर्त्तिभूतनाशित्वम्० वाड़ीप्रियत्वञ्चेति ॥ सिन्दूरपुष्पावयस्याः । पाककर्णेतिङीप् ।

सिन्दूररस । पुं॰ रससिन्दूराभिधौषधे ॥

सिन्दूरित । त्रि॰ सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीतिण्यन्तात्कर्म्मणि क्त । यथा विष्टवन्द्राभा तू॰ विन्मतीलुंक् ॥

सिन्दूरी । स्त्री॰ रोचन्याम् ॥ रक्तचेलिकायाम् ॥ धातक्याम् ॥ सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥

सिन्धु । पुं॰ अब्धौ । समुद्रे ॥ स्यन्दते॰ आपो ऽत्र । स्यन्दू॰ । स्यन्देः सम्प्रसारणं धश्चेत्युः ॥ वमथौ ॥ रामेणभरतायार्पितदेशविशेषे ॥ काश्मीरदेशप्रसिद्धनदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रागविशेषे ॥ श्वेतटङ्कणे ॥

सिन्धु । स्त्री॰ नद्याम् । सरिति ॥ नदीविशेषे ॥ तज्जलगुणा यथा । शतद्रौर्विपाशायुक्ता सिन्धुनद्या सुशीतं लघुस्वादु सर्व्वामयघ्नम् । जलं निर्म्मलं दीपनं पाचनञ्च प्रदत्ते बलं बुद्धिमेधायुतञ्च ॥

सिन्धुक । पु॰ सिन्दुवारे । निर्गुण्ड्याम् ॥ सिन्धुशब्दात्स्वार्थे संज्ञायां वा कन् । गुणा यथा । सिन्धुकः स्मृतिदस्तिक्तः कषायः कटुकोलघुः । केश्योनेत्रहितो हन्तिशूलशोथाममारुतान् ॥ कृमिकुष्ठारु

चिश्लेष्मज्वरान्नीला पि तद्विधा ॥ सिन्धुवारदलं जन्तुवातश्लेष्महरं लघु ॥ त्रि॰ सिन्धुप्रजाते ॥ सिन्धुपरम्परयाकन् ॥

सिन्धुकफ । पु॰ समुद्रफेने ॥

सिन्धुप्रभव । पु॰ तीर्थविशेषे ॥

सिन्धुरम् । न॰ श्वेतटङ्कणे ॥

सिन्धुखिल । पु॰ सिन्धुदेशे ॥

सिन्धुजम् । न॰ सैन्धवलवणे ॥ सिन्धुप्रजातम् ॥ सप्तम्यां जनेर्ड्ः ॥ त्रि॰ समुद्रजाते ॥

सिन्धुजन्मा । पुं॰ चन्द्रे । न॰ सैन्धवलवणे ॥

सिन्धुजा । स्त्री॰ लक्ष्म्याम् ॥

सिन्धुडा । स्त्री॰ मालवरागभार्य्यायाम् ॥

सिन्धुनन्दन । चन्द्रे ॥

सिन्धुपुत्र । पुं॰ चन्द्रे ॥ मर्कटेन्दौ ॥

सिन्धुपुष्प । पु॰ शङ्खे ॥

सिन्धुमन्थजम् । न॰ सैन्धवलवणे ॥

सिन्धुर । पु॰ हस्तिनि ॥

सिन्धुरद्वेषी । पुं॰ सिंहे ॥

सिन्धुरवदन । पु॰ श्रीगणेशे ॥

सिन्धुराज । पुं॰ समुद्रे ॥

सिन्धुलवणम् । न॰ सैन्धवे ॥

सिन्धुवार । पु॰ उत्तमाश्वे ॥ सिन्धुवारे । निर्गुण्ड्याम् ॥ सिन्धुवारोऽश्विष्वश्वं प्रवणकुष्ठयापहः ॥ सिन्धुंवर्णोति॰ वारयति वा । हञ्

चाप्यादनेशा । चमंण्यथ ॥

सिन्धुवारक । पु० सिन्धुवारे ॥

सिन्धुवारित । पुं० सिन्धुवारे ॥

वि० समुद्रेणवारिते ।

सिन्धुवेषण । पु० गम्भार्याम् ॥

सिन्धुसङ्गम । पं० समेदे । सिन्धोः

सङ्गमोमेल ॥

सिन्धूत्थम् । न० तोयभेदे ॥

सिन्धूद्भवम् । न० सैन्धवलवणे ॥ सि

न्धुमुद्भवोस्य ॥

सिन्धूपलम् । न० सैन्धवलवणे ।

सिप्र । पु० चन्द्रे । हिमाम्बौ ॥

निदाघसलिले । स्वेदे ॥ न० स

रोविशेषे ॥ यथोक्तंकालिकापुरा

णे । ततोहिमवतः प्रस्थे प्रतीच्य

न्त पुरस्थच । सिप्रनामसर पू

र्वदृष्टश्रुद्रैर्षिणादृषद्वति ॥

सिप्रा । स्त्री० नद्यन्तरे ॥ सिप्राख्या

त्सरसोयस्मान्निर्गतासामहान

दी । चत सिप्रेतितन्नामपुरैवव्र

ह्मणाकृतमितिकालिकापुराणम् ॥

साचोज्जयिनीदेशेवर्त्तते । तस्या

श्चोत्पत्तिः कालिकापुराणे २३

अध्यायेद्रष्टव्या ॥

सिम । वि० समस्मिन् । सर्वमर्था

र्थे ॥ सिनोति । षिञ् । च वि

सिद्धिविभ्य । क्विद्दिर्तिमन् ॥

सिम्बा । स्त्री० शम्बाम् । शिम्बाया

म् । बीजगुप्तायाम् । शब्द० च०

भा० प्र० ॥ फली० च० प्र० च ॥

समति । षमवैक्लव्ये । उणस्वादय

श्चेतिसाधु ॥

सिम्बि । स्त्री० शिम्बाम् । सिम्बा

याम् । नखनामगन्धद्रव्ये ॥

सिम्बी । स्त्री० शिम्बयाम् ॥

सिर । पुं० पिप्पलीमूले ॥

सिरा । स्त्री० नाड्याम् । अम्बुवाहि

न्यांनाड्याम् । सौर० च० भा०

प्र० सिनोति । षिञ् । बहुलम

न्यत्रापीतिरक् ॥

सिराल । पु० सिरासन्तते ॥

सिरिंटिका । स्त्री० क्षुद्रकण्टकिन्या

ञ्चयवक्षुपे । दुराधर्षायाम् ॥

सिलक । पु० ग्लावतीपश्च० क्ष

त्रियविशेषे ॥

सिल्हकी । स्त्री० शल्लकीवृक्षे ।

सिषाधयिषा । स्त्री० साधयितुमिच्छायाम

॥ यथा । सिषाधयिषयाशून्यासि

द्धिर्यत्रनविद्यते । सपक्षस्तत्रहिं

स्वलिङ्गादनुमितिर्भवेत् ॥

सिसिक्षा । स्त्री० सेक्तुमिच्छायाम् ॥

सिसृक्षन् । वि० स्रष्टुमिच्छति ॥

सिह्लुण्ड । पु० स्नुहीवृक्षे ॥ सो

तिह्लुण्डते । हुडिवरणे । पचा

द्यच ॥ सिह्लुण्डस्यायमपभ्रंश इ

तिस्वामी० पृषोदरादि ॥ अप्र यु

क्तायथा । सिह्लुण्डेरिवनक्तोक्तोदो

वन० घाटवीगुरु । शूलामाथी

लिङ्गाध्मानकफगुल्मोदरानिलान्
उन्मादमोहकुष्ठार्शःशोथमेदोश्म
पाण्डुताः । व्रणशोथज्वरश्लीहविष
दूषीविषहरेत् ॥ उष्णवीर्यस्तु शीघ्रो
रक्तिग्धश्चकटुकस्तथा । गुल्मिना
ङ्कुक्षिनाशपित्तार्थे वोदररोगिणा
म् । हितमेतद्विरेकार्थे ये चान्ये दो
षरोगिणः ॥

सिहुण्डदलम् । न० स्नुहीपत्रे ॥
तस्याकगुणा यथा । सिहुण्डस्यद
लन्तीक्ष्णं दीपनं रोचनं हरेत् । आ
ध्मानाष्ठीलिकागुल्मशूलशोथोदरा
णि च ॥

सिह्ल । पुं० तुरुष्के । पिण्डके ।
यावने । लोबान० हू० भा० प्र०
॥ स्निह्यति । स्निह्यप्रीतौ । ष
स्माभीवितच्यथ । बाहुलकात् ।
पृषोदरादि० ॥

सिह्लक । पुं० सिह्ले । नागौरी
गूद० हू० भा० लोबान० हू० य
वनभाषाप्रसिद्धे ॥ सिह्लकः कटु
कः स्वादुस्निग्धोष्णः शुक्रकान्ति
कृत् । वृष्यः कण्डूस्वेदकुष्ठज्वर
दाहग्रहापहः ॥

सिह्लकी । स्त्री० सल्लक्याम् ॥ सि
ल्हे ॥

सिह्लभूमिका । स्त्री० शल्लक्याम् ॥
सिह्लसारः । पुं० तुरुष्के । धूम्र
वर्णे । पीतसारे ॥

सीकर । पुं० शीकरे ॥ धनपाला
दिमतेदन्त्यादि ॥

सीता । स्त्री० लाङ्गलपद्धतौ । हल
रेखायाम् ॥ जनकनन्दिन्याम् ।
मैथिल्याम् । वैदेह्याम ॥ सीता
लाङ्गलपद्धतिः । तदुत्पन्नत्वात्सी
तेतिनिर्दिश्यते ॥ यथा । अथमे
कृषतः क्षेत्रं लाङ्गलादुत्थिता तत
। क्षेत्रं शोधयता लब्धा नाम्ना सीतेति
विश्रुतेति रामायणे ६६ सर्ग ॥
स्वर्गगङ्गायाम् ॥ यथा । पूर्वस्मा
त्सीतातुशैलयाथ्यन्तरिक्षगा ।
ततश्च पूर्ववर्षाभद्राश्वेनैतिसार्ण
वम् ॥ सातुभद्राश्ववर्षगङ्गा । य
थोक्तं श्रीभागवते ; सीतातुब्रह्मस
दनात्केशवाचलादिगिरिशिखरेभ्यो
ऽधोऽधः प्रस्रवन्तीगन्धमादनमूर्द्ध
सुपतित्वान्तरेणभद्राश्ववर्षं प्राच्यां
दिशिक्षारसमुद्रमभिप्रविशतीति ॥
श्रियि ॥ दुर्गायाम् । सखाधि देव
तायाम् ॥ मदिरायाम् । गङ्गास्रोत
सि । काञ्चनमालायाम् ॥ सीयते ।
षिञ्० । क्त । पृषोदरादि ॥

सीताद्रव्यम् । न० कावकुद्दालादौ ॥

सीतापतिः ।) सीतायाः पतिः ।) पुं० रामचन्द्रे दा
शरथौ ॥

सीत्कारः । पु० मनुष्याणांसुखानुरा
गजशब्दे ॥ यथा । मन्दोगुणानु

रागीत्य । प्रवाद: सीत्कृत तथा मितिहेमचन्द्र. ।। दन्तनिष्पीडना यां । सीरितिशब्दे ।।

सीत्कृतम । न० सीत्कारेसुरतध्वनौ ।।

सीथम् । न० धान्ये ।। त्रि० हल्ये । हलेनकृष्टे चर्षे ।। सीतयासमित • सकृत • निर्ल्लोनतादिरहितक्रत • समीकृतमितियावत् । गौ वयोधर्मेतियत् ।।

सीदमान । त्रि० अवसीदति ।।

सीद्यम् । न० आलस्ये ।।

सीधु । पु० शीधुशब्दार्थे ।।

सीधुगन्ध । पुं० बकुले ॥

सीधुपुष्प । पुं० कदम्बे ।। बकुले ॥

सीधुपुष्पी स्त्री० धातक्याम् ॥

सीधुरस । पु० आम्रवृक्षे ॥

सीधुसञ्ज्ञ: । पु० बकुलद्रुमे ॥

सीप । पु० तप्ताद्यर्थताम्रादिनिर्म्मितेजलपात्रे । अर्घा० कोषा० इ० भा० प्र० ॥

सीम् । अ० सर्वतोभवे ।।

सीमा । स्त्री० आघाटे । मर्यादायाम् । सीमायाम् । ग्रामादीनामवधारितास्थभागे । सीम० इ० भा० प्र० ।। स्थितौ ।। क्षेत्रे । अण्डकोषे ।। सीयते । षिञ० । नामन्सीमन्नित्यादिनानिपातित । मनन्तिन ङीप् । सीमानौ० सीमान: • इत्यादि ॥

सीमन्त । पु० सीमन्तोन्नयनसंस्कारे ।। पु० न० केशवेशे । केशरचनाभेदे ।। केशेषुवर्त्मनि । मूर्द्धज मध्यपद्धतौ ।। सीमन्तमस्त्रियाखी आकेशमध्येतुपद्धतिरितिवैजयन्ती । सीमोऽन्त । शकन्ध्वादि ।

सीमन्तक । पु० नरकावासे । यथा । सप्तपञ्चैवनरकावासा . सीमन्तकादय० हेमचन्द्र: । न० सिन्दूरे ।

सीमन्तित । त्रि० सीमन्तितोकृते ॥ सीमन्तशब्दात्मस्त्यात्० तत्करोतीतिण्यन्तात् कर्म्मणिक्त. । आविद्धवद्धवे० विन्यस्तोल्लंक ॥

सीमन्तिनी । स्त्री० नार्य्याम् ॥ सीमन्तोऽस्त्यस्या । अतइनि । नान्तत्वान्ङीप् ।

सीमन्तोन्नयनम् । न० गर्भाधानात० षष्ठेऽष्टमेवामासिकर्त्तव्ये० संस्कारविशेषे ॥ यथा । मासिषष्ठेऽष्टमेवापिकर्त्तव्ये पुंसवनोदिते । द्विजातीनेतिथौकुर्यात्सीमन्तोन्नयनक्रियां ॥

सीमा । स्त्री० आघाटे । मर्यादायाम । सीमनि । ग्रामादीनामवधारितस्थभागे । सीम० इ० भा० प्र० ॥ स्थितौ ॥ क्षेत्रे । अण्डकोषे ॥ सिनोति० सीयतेवा । षिञ० । नामन्सीमन्नित्यादिनानिपातित ।

मनङ्गतिनङीप । डाबुभाभ्यामिति पक्षे डाप् । सीमे॰ सीमा ' ॰ इत्यादिविभिध्यम् ॥ वेलायाम् ॥

सीमाविवाद । पु॰ ग्रामादीनां सीमाविषये कलहे ॥ सीमाविषयको विवादः सीमाविवादः । सीमा चतुर्विधा । जनपदसीमा॰ ग्रामसीमा॰ क्षेत्रसीमा॰ गृहसीमेति भेदात् ॥

सीमिक । पु॰ वृक्षविशेषे ॥ वाल्मीके ॥ सूक्ष्मकृमिजातौ । वृक्षपत्रविभागकृतिकीटे ॥ स्यमति । स्यमुशब्दे । स्यमे सम्प्रसारणञ्चेति किकन् ॥

सीर । पु॰ अर्के । सूर्ये । हले । लाङ्गले ॥ सिनोति॰ सीयते वा । षिञ्॰ । शुसिचिमीनां दीर्घश्चेति॰ क्रन्॰ दीर्घत्वञ्च ॥

सीरक । पु॰ शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वज । पुं॰ चन्द्रवंशीयनृपविशेषे ॥

सीरपाणि । पुं॰ बलभद्रे । कालिन्दीभेदने ॥ सीरो लाङ्गलं पाणावस्य ॥

सीराङ्गम् । न॰ कालाधारे ॥

सीरी । पुं॰ बलदेवे ॥

सीलन्ध । पुं॰ मत्स्यविशेषे । सिलिन्दा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ तद्गुणा यथा । सीलन्ध श्लेष्मलो वृष्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरस्तथा ॥

सीवनम् । न॰ सेवने । स्यूतौ । तुन्नवायकर्मणि । सीवना॰ इ॰ भा॰ ॥ षिवु तन्तुसन्ताने । ल्युट् पृषोदरादित्वाद्दीर्घः ॥ ष्ठिवुसिव्योर्ल्युटि वा दीर्घ इति वामनः ॥

सीवनी । स्त्री॰ लिङ्गमध्यस्थ सूत्रे । लिङ्गाधो गुदपर्यन्तसीवने ॥

सीसम् । न॰ सीसके । योगेष्टे । नागे । सीसा॰ इ॰ भा॰ प्र॰ धातौ ॥ सिनोति । षिञ्॰ । क्विप् । अनित्यत्वान्न तुक् । ईर्ष्यति । षो॰ । आतोनुपेतिक । सिच॰ तत्॰ ईसञ्च॰ सीसम् ॥ अस्य गुणा यथा सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् ॥ नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवितः सः ॥ पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । पाण्डुप्रमेहानिलमन्दशोथभगन्दरादीन् कुरुतः प्रभुक्तौ ॥ अस्य शोधनमारणविधिर्यथा । तस्य ताडिकादीनां च गन्धेन निदर्शिता । शोधनञ्चापि तद्वच्च॰ भिषग्भिरादितपुरा । ताम्बूलरस

म्युष्टशिलालेपात् पुनः पुनः । द्वात्रिंशद्भिः पुटैर्नागो निरुत्थ भस्म जायते ॥ शिला मनःशिला । अन्यच्च । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् । मृत्पात्रे विद्रुतं नागं लोहदर्व्या प्रचालितं ॥ यामैकेन भवेद्भस्म तत्तुल्यांश्चामनःशिला । काञ्जिकेन द्वयं पिष्ट्वा पचेद्दृढपुटेन च ॥ स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च । पुनः पचेच्छरावाभ्यामेवं षष्टिपुटैर्मृतिः ॥ अपिच । तैलतक्रे गवां मूत्रे काञ्जिके च कुलत्थके । त्रिधा त्रिधा विशुद्धिः स्यात्स्वर्णादीनां समासतः ॥ मारणं पुनः । कुण्डनागपचाणाकुनव्या स्यात्पलाङ्कम । तण्डुलीयरसैर्यामयामवासारसैस्तथा । सम्मर्द्य चक्रिकां कृत्वा घर्मे संशोष्य तत्पुनः । शरावसम्पुटे कृत्वा पचेद्वन्योपलैर्भिषक् ॥ एवं सप्तपुटैर्नागो भस्मीभवति निश्चितम् । द्विगुणीयभवन्यातप्रमेहान्क्षिलानपीति वैद्यदर्पणः ॥

सीसकम् । न० सीसे ॥ स्वार्थे कः ॥

सीसपत्रकम् । न० सीसके ॥

सीहुण्डः । पुं० स्नुह्याम् । सिहुण्डे ॥ सीतिहुण्डति । हुण्डि स्वर्णे । पचाद्यच् ॥ सिंहतुण्ड इत्यप्यस्याभिधानमिति ख्यातौ । पृषोदरादि ॥

सु । अ० पूजायाम् ॥ भृशार्थे ॥ निर्भरे । अतिमात्रे ॥ अनुमतौ ॥ कृच्छ्रे ॥ समृद्धौ । अनायासे ॥ सूयते० सच्छिवा । सुगतौ । क्रिपि० तुगभाव० छुर्वा ॥

सुकण्टका । स्त्री घृतकुमार्याम् ॥

सुकण्डु । पुं० कण्डुरोगे ॥

सुकथा । स्त्री० नैमिषारण्याधिष्ठात्री देवतायाम् ॥

सुकन्द । कशेरुणि ॥ धरणीकन्दे ॥

सुकन्दक । पुं० पलाण्डौ ॥ शोभनमतीव श्र० कन्दयति० भक्षकस्य जातिभ्रंशकरत्वात् । कदिरोदने । अच् । स्वार्थे कन् । वनलशा ॥ धरणीकन्दे ॥ वाराहीकन्दे ॥

सुकन्दी । पुं० सूरणे ॥

सुकम् । अ० अतिशये ॥

सुकरः । त्रि० सुखकरे । सुखेन कर्त्तुं शक्ये । सुसाध्ये ॥ ईषद्दुःसुष्विति० भावे० कर्मणि वा० खल इत्यर्थे खल् ॥ अल्पसाधनैरधिकारम्भोऽन सुकरः ॥

सुकरा । स्त्री० सुशीलायाङ्गवि । अचण्डायाम् ॥ सुसुखेन करोति । अच् ॥ सु क्रियते वा । ईषद्दुःसुष्विति खल् ॥

सुकर्ण । पुं० हस्तिकर्णे ॥ त्रि० शोभनकर्णवति ॥

सुकर्णक । पुं० हस्तिकन्दे ॥ त्रि०

सुन्दरकार्यवति ॥

सुकर्णिका । स्त्री॰ मूषीकर्ण्याम् ॥

सुकर्णी । स्त्री॰ इन्द्रवारुण्याम् ॥

सुकर्म्मा । पु॰ विष्कम्भाद्यन्तर्गतयोगविशेषे ॥ तज्जातफलं यथा । परोपकारीकुशलः कलासुवर्णयुक्तो नितरां यशस्वी । प्रसूतिकालेयदिचेत्सुकर्म्मानरः सुकर्म्माभवतिप्रसिद्धः । देशनाशिल्पिनि । विश्वकर्मणि ॥ त्रि॰ सत्क्रिये । शोभनकर्मकारणशीले ॥

सुकल । त्रि॰ दातृभोक्तरिमानवे । यएकएवदाति॰ भुङ्क्तेचतत् । दाताभोक्ता॰ इ॰ भा॰ प्र॰ ॥ सुकल्पते । कलशब्दसङ्ख्यानयोः । ईषद्दुःखेतिखल् ॥ शोभनाकलायस्येतिवा ॥

सुकल्प । त्रि॰ अतिनिपुणे ॥

सुकाण्ड । पुं॰ कारवेल्ले ॥ त्रि॰ शोभनकाण्डवति॰ वृक्षादौ ॥

सुकाण्डी । स्त्री॰ काण्डीरे । काण्डवेलइति॰ गौ॰ भा॰ प्र॰ लतायाम् ।

सुकाण्डी । पु॰ भ्रमरे ॥

सुकामा । स्त्री॰ त्रायमाणायाम् । बलिति॰ बहुलीति॰गौ॰भा॰प्र॰ ।

सुकाली । पु॰ वशिष्ठात्मजेषु॰ शूद्राणांपितृषु ॥

सुकालुका । स्त्री॰ डोडीक्षुपे ॥ इ॰ रा॰ ग्र ॥

सुकाष्ठकम् । न॰ देवकाष्ठे ॥

सुकाष्ठा । ) स्त्री॰ काटल्याम् ॥ का
सुकाष्ठिका । ) ष्ठकदल्याम् ॥ इ॰ रा॰ ग्र ।

सुकुन्दन । पु॰ बर्वरे ॥

सुकुमार । पु॰ पुण्ड्रेक्षौ । वनचम्पके ॥ चवे ॥ श्यामाके ॥ त्रि॰ कोमले । मृदौ ॥ सुष्ठु कुमारयति । कुमारक्रीडायाम् । चुरादयः । पुंभौतच् । एरच्ञ ॥ यद्वा । सुकाम्यते । कामे . बिदुचोपधाया ह्रस्वारन् ॥

सुकुमारक । पुं॰ शालौ ॥ सुन्दरबालके ॥ न॰ तमालपत्रे ॥

सुकुमारतर . । त्रि॰ अतिपेलवे ॥

सुकुमारतरा । स्त्री॰ अतिपेलवायाम् । प्रकृतौ ॥ यथोक्त । प्रकृतेः सुकुमारतरं नकिञ्चिदस्तीतिमेमतिर्भवति । याद्दष्टाऽस्मीतिपुनर्नदर्शनमुपैतिपुरुषस्येति ।

सुकुमारा । स्त्री॰ कदल्याम् ॥ मालत्याम् ॥ नवमालिकायाम् ॥ लाक्षायाम् ॥ पृक्कायाम् ॥ विसग्रन्थिपुष्पे ॥

सुकुमारी । स्त्री॰ नवमालिकायाम् ॥

सुकृत् । त्रि॰ पुण्याढ्ये ॥ धार्म्मिके ॥ सुष्ठु कृतवान् । डुकृञ् । सुकर्मपापेतिक्रञ क्विप् । तुक् ।

सुकृतम् । न० शुभे । स्वर्गादिप्रापके । पुण्ये ॥ त्रि० सुविहिते । सुविधाने ॥ सुष्ठु कृतम् । प्रादिसमास ॥ सुष्ठु क्रियतस्मतिवा । क्त ॥

सुकृति । स्त्री० सत्कर्म्मणि ॥ शोभनाकृति ॥

सुकृती । त्रि० पुण्यवति । धन्ये ॥ सुकृतमस्यास्ति । अतइनि ॥

सुकेतुसुता । स्त्री० ताडकायाम् ॥

सुकेशर । पु० बीजपूरे ॥

सुकेशी । स्त्री० अप्सरोविशेषे ॥ त्रि० शोभनकेशयुक्ते ॥

सुकोमल । त्रि० अतिमृदुले ॥ अतिमनोज्ञे ॥

सुकोमला । स्त्री० सिन्दूरीतिप्रसिद्धे पुष्पे ॥

सुकोली । स्त्री० क्षीरकाकोल्याम् ॥

सुकोश )<br>सुकोशक ) पु० कोषाम्रे । क्षुद्राम्रे ॥

सुखसुप्त । पु० खट्वाङ्गे ॥ इति० हि० चन्द्र ॥

सुखम् । न० आत्मवृत्तिगुणविशेषे ॥ मुदि । प्रीतौ ॥ हर्षे । सम्मदे । आनन्दे । शर्म्मणि । सर्वेषामनुकूलवेदनीये ॥ स्वर्गे । नाके । वृद्धिनामौषधे ॥ जले ॥ न्यायमते० धर्म्मजन्ये जगत उपकार्ये ॥ यथ सुखन्तु जगतामेवकाम्य धर्म्मणजन्यते । अधर्म्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ तच्च मनोग्राह्यत्वं यथा । मनोग्राह्यं सुखं दुःखमिच्छाद्वेषोमतिः कृतिरिति भा० प० इ० । सुखं चतुर्विंशतिगुणान्तर्गतगुणविशेषः । तत्तु नित्यं जन्यञ्च । नित्यं परमात्मनो विशेषगुणान्तर्वर्ति । जन्यसुखं जीवात्मनो विशेषगुणान्तर्वर्ति । तच्च शुभादृष्टजन्यम् । धनमित्रलाभारोग्यमिष्टान्नपानपुरीषोत्सर्गपुत्रादिजन्मतत्पाण्डित्यकान्तासम्भोगादिजन्यञ्च । तच्चाहमित्यस्यायित्वज्ञानोत्पन्नानुभवनाश्यत्वात् । सुखाद्युपरागेणैवात्मनो मानसबोध । सुखं तदुपायश्चेष्टः । बालस्य स्तन्यपानप्रवृत्तौ सुखसाधनत्वज्ञानं हेतुः तच्च सुखस्यैवेष्टत्वम् । दुःखजनकगमनादिप्रवृत्तौ सुखोपायोऽधनं तदेवेष्टं तत्साधनत्वज्ञानमेव हेतुः । यागादिप्रवृत्तावपि पारलौकिकसुखसाधनत्वज्ञानं कारणम् । सुखोपायस्वर्गादिरूपेष्टसाधनत्वज्ञानमभिकारणम् । सुखस्य कालावच्छेदत्वं शरीरावच्छेदत्वं च अतोऽव्याप्यवृत्तित्वम् । शरीरैकदेशावच्छेदेन दुःखसम्भवेप्यन्यदेशावच्छेदेन सुखसम्भवात् । एकस्य यावच्छेदेन जीवस्य दुःखसम्भवेपि०

सुखकर । त्रि० सुकरे ॥
सुखङ्करी स्त्री० लताविशेषे । जीवन्त्याम् ॥ सुखकर्थम् ।
सुखकृष्णा । पु० शिवखट्वाङ्गे ॥ कु० शि० शेष ॥
सुखचर । त्रि० सुखगामिनि ॥
सुखचार । पुं० उत्कृष्टाश्वे ॥
सुखजात । त्रि० जातसुखे ॥
सुखद । पुं० परमात्मनि । विष्णौ ॥ सद्‌वृत्तानां सुखमीश्वरवत्ददाति । छुद अ० । असद्‌वृत्तानां सुखं द्यति खण्डयतीति वा । दो० । आतर्तक । त्रि० सुखप्रदे । न० विष्णो स्थाने ॥
सुखदा । स्त्री० गङ्गायाम् ॥ सद्यः पातकसंहन्त्री सद्योदुःखविनाशिनी । सुखदा मोक्षदा गङ्गा गङ्गैव परमा गतिः ॥ अप्सरोभेदे ॥ सुखदत्याम ॥ शमीवृक्षे ॥ सुखदोह्या । स्त्री० सुखसन्दोह्यायां गवि ॥ सुखेन दुह्यते । दुह० । कर्मणि यत् ॥
सुखमेदा । स्त्री० शल्लकीवृक्षे ॥
सुखरात्रि ।<br>सुखरात्रिका । स्त्री० दीपान्वितामावास्यारात्रौ ॥ यथा । तुलाराशिगते भानावमावास्यां नराधिप । स्नात्वा देवान् पितॄन् भक्त्या सम्पूज्याथ प्रणम्य च ॥ कृत्वा तु पार्वणश्राद्धं दधिक्षीरगुडादिभिः । ततोऽपराह्णसमये घोषयेन्नगरे नृप ॥ लक्ष्मीः सम्पूज्यतां लोका उल्काभिश्चाभिचेष्टताम् ॥ * ॥ दर्शे दीपदानव्याप्तिनिर्णय । तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥ उभयत्र प्रदोषप्राप्तौ परदिने एव । दण्डैकरजनीयोगे दर्शः स्यात्परेऽहनि । तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका । उभयत्र प्रदोषव्याप्तौ परे० उल्कादानं परदिने० पूर्वोक्तपार्वणानुरोधात् । भूतदर्शे प्रकुर्वन्ति उल्काग्रहणमेव तत् । निराशाः पितरो यान्ति शापं दत्त्वा सुदारुणम् ॥ अतएव लक्ष्मीपूजादिरपि पूर्वा । अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी । पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥ उल्काग्रहणादि पितृकृत्यत्वात् प्राचीनावीतिना दक्षिणामुखेन कर्त्तव्यम् ॥ तथा च मनुः । प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात् कार्यं विधिवद्दर्भपाणिनेति ॥ उल्काग्रहणमन्त्रो यथा । शस्त्राशस्त्रहतानाञ्च भूतानां भूतदर्शयोः । उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निनेति । दानमन्त्रो यथा । अग्निदग्धाश्च ये जीवा

शैप्यदग्धा कुलिमम । उज्ज्वल ज्योतिषादग्धास्त्वेयान्तु रमाकृति मिति । विसर्ज्जनमन्तोयथा । यम लोकपरित्यज्यचागतायेमहालये । उज्ज्वलज्योतिषावत्सेप्रपश्यन्तोम्न जन्तुते ॥ इति ॥

सुखलुबध । पु० देहिनि ॥ यथी । मासलुब्धोथ मत्स्योलोहशङ्कुनप श्यति । सुखलुब्धस्तथादेहीयमबा धानपश्यतीतिकुलार्णवतन्त्रम ॥

सुखसंवर्क । पु० सर्ज्जिकाक्षारे । सुख वर्चयति । बर्च्चदीप्तौ । क्रुन् ॥

सुखवर्च्चा । पु० सर्ज्जिकाक्षारे ॥ सुखेनवर्च्चयेन ।

सुखवास । पु० तरमु० इ० प्र० फ लविशेषे ।

सुखवासन । पु० मुखवासनगन्ध द्रव्ये । यथा । मुखवासकरोगन्ध ख मेदोमुखबासन । सुखवास नतूर्व्वेशुभवासनहत्यपीतिशब्द रत्नावली ।

सुखसंवित्ति । स्त्री० सुखानुभवे ।

सुखसन्दोह्या स्त्री० सहक्याम् । सु ग्रतायाम सुखेनसन्दुह्यते । दुह० । कर्मणिण्यत् ।

सुखा । स्त्री० प्रचेतस पुर्याम् ॥ अभेदेनसुखरस्याम् । श्रीभमेन्द्रि यायाम् ॥

सुखाधार । पुं० स्वर्गे । त्रि० सुख स्याधारे ॥

सुखायत । पु० उत्कृष्टाश्वे । सु शिक्षितेश्वे ॥ यथा । सुखयत शुभमुख सुखचार : सुखायनइ तिशब्दमाला ॥

सुखायन । पु० उत्कृष्टघोटके ॥ सुखेनअयनगमनयेन ॥

सुखालुका । स्त्री० बहुस्थलध्याम् । जीवन्त्याम् ॥

सुखावती । स्त्री० बुद्धभक्तौ ॥

सुखावतीश्वर । पुं० बुद्धभेदे ॥

सुखावह । पु० अर्त्तरि ॥ त्रि० सुखदातरि ॥

सुखाश । पु० वरुणे । प्रचेतसि ॥ सुखभोजने ।। तरम्बुजे । अस्यप र्यायायथा । स्याच्चेलालशिवफल सुखाशीराजतेमिष । सतापन सनाटामौसेदुरितिचित्ताण्डशेष ।

सुखासनम् । न० नरवाह्ययानविशे षे । खासा० इ० भा० प्र० ॥ सुखेनआसनयस्मिन् ॥

सुखित । त्रि० सुखयुक्ताकृते ।। सु खसञ्जातमस्य । इतच् ।।

सुखी । त्रि० सर्वथानीरोगे ।। निरा यासस्थिते ।। तृष्णायेजिते ।। सु खमस्यस्य । सुखादि यमेति० इ नि ।। दु । खमूलहिसंसार समयस्मिसदु ' खित ।। तस्यत्या ग कृतेयेनससुखीनापर प्रिये ।

याम् ॥

सुगन्धमूलकम् । न॰ गन्धटर्गे ॥

सुगन्धमूला । स्त्री॰ रास्नायाम् ॥ स्थलपद्मिन्याम्, सुगन्धीमूलैव स्या. ॥

सुगन्धा । स्त्री॰ रास्नायाम् ॥ शोभनो गन्ध । कुगतौतिमनाम्स । सुगन्धोऽस्यस्या । यद्वा च ॥ श्यामाम् ॥ गन्धोल्याम् । वन्ध्याकौटम्याम् । नाकुलिकायाम् तुलस्याम् ॥ मधुकर्कटिकायाम् ॥ गलपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ वनमल्लिसलाम्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धमलकम् । न॰ सर्वौषधिभिर्शुष्क मलकत्वग्योगे । यथा । सर्वौषधिनमायुक्ता शुष्कास्त्वामलकस्य च । यद्वातदाय योग' स्यात् सुगन्धामलकाभिध ॥ इतिराजनिर्घण्ट ॥

सुगन्धि । पुं॰ शोभनगन्धे । सुरभौ । प्राजतनये । इष्टगन्धे ॥ तुम्बुरुणी । तीक्ष्णगन्धे । परमात्मनि ॥ इतिमोक्षधर्मटीकायांनीलकण्ठ ॥ सहकारे । न॰ एलबालुनि । ऐलेये ॥ कुस्तुम्बुरौ । धान्याके ॥ मुस्तके ॥ कसेरुणि ॥ गन्धटर्णे ॥ पिप्पलीमूले । त्रि॰ सुगन्धयुक्ते । शोभनोगन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यइतीत्त्वम् ॥ गन्धस्येत्त्वे तदेकान्तग्रहणं नाद्रियन्तेऽक्षयः । यथा । वातद्धूत कटभुग्गरिणोमदेनसक्त । सुगन्धिमनुलेमयतानगस्येति माघे॰ सुगन्धिशोभनगन्धमित्यर्थात् ॥

सुगन्धिका । पुं॰ सिह्लके । तुरुष्के महाशालौ ॥ गन्धके ॥ न॰ कल्हारे ॥ पुष्करमूले ॥ गौरसुवर्णे । कौरवे । पत्रशाकविशेषे ॥ सुवर्णे ॥ उशोरे ॥

सुगन्धिकुसुमम् । न॰ सुगन्धिपुष्पे । पु॰ पीतकरवीरे ॥ शोभनगन्धवन्तिपुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री॰ पृक्कायाम् ॥

सुगन्धिता । स्त्री॰ सौरभ्ये ॥ शोभनोगन्धोयस्य॰ तस्यभाव: । तल् । टाप् ॥

सुगन्धितैलम् । न॰ । सुगन्धितैले । तैलकार्दिपानीये ॥

सुगन्धिनिफला । स्त्री॰ जातीफले न॰ पूगफलेनचसयुक्ते लवङ्गकलिकाफले ॥

सुगन्धिनी । स्त्री॰ आरामशीतलायाम् ॥

सुगन्धिमूलम् । न॰ उशीरे ॥

सुगन्धिमूषिका । स्त्री॰ छुछुन्दर्याम् ॥

सुगम : । वि० सुखेनगमनीयेस्थानादौ ॥ सुखेनगम्यतेप्राप्यते । गम्लृ० । ईषद्दुःखसुखेतिखल् । यथासुगम : पन्था : ॥

सुगरम् । न० रङ्गमे । विङ्गुले ॥

सुगहन : । वि० निविडे ॥

सुगहनावृत्ति : । स्त्री० कुम्बायाम् । यज्ञस्थाने० असुराद्यादिदृष्टनिवारणायनिविडवेष्टने ॥ सुगहनानिरक्षकाप्रवृत्ति : ॥

सुगृह । पुं० चञ्चुसूचीखगे । शोभनगृहे । यथा० कु० भा० प्र० ॥ न० शोभनालये ॥ वि० शोभनगृहवति ॥

सुगृहीत : । वि० सुन्दररूपेणकृतग्रहणे ॥

सुगृहीतनामा । पुं० शुभकामनयाप्रातः स्मर्त्तव्ये युधिष्ठिरादौ ॥

सुग्रन्थि । पुं० ग्रन्थपर्णभेदे । चोरके ॥ शोभना ग्रन्थिरयस्मिन ॥

सुग्रीव : । पुं० कपिपुङ्गवे । सूर्यपुत्रे । किष्किन्धाधिपे । श्रीरामसित्रे ॥ विष्णोरश्वभेदे ॥ देवीमूर्त्तिशुम्भनिशुम्भाभ्यांप्रेषितदूतविशेषे ॥ इन्द्रेः तृपितरि । शोभनाग्रीवायस्य ॥ शिवे ॥ इन्द्रे ॥ राजहंसे ॥ असुरविशेषे ॥ पर्वतविशेषे ॥ अस्त्रविशेषे ॥ नागप्रभेदे ॥ वि० शोभनग्रीवायुक्ते ॥

सुग्रीवी । स्त्री० कश्यपपत्नीविशेषे ॥

सुग्रीवेश : । पुं० श्रीरामचन्द्रे ॥

सुघोष : । पुं० विष्णौ । नारायणे ॥ शोभनोघोष : शब्दोवेदात्मकोयस्य ॥ नकुलाख्यपाण्डवशङ्खे ॥

सुचक्षु : । पुं० उदुम्बरे ॥ न० शोभननेत्रे ॥ वेदान्तजन्यज्ञाने ॥ यथा । एवं विधत्वात्सकलान्नामविद्यात्माननमात्मातत्याविच्छति । गुर्वकर्लब्धोपनिषत्सुचक्षुषायेतेतरन्तोवभवानृताम्बुधिम् ॥ वि० उत्कृष्टाक्षे ॥ आत्मविदि ॥ शोभनेचक्षुषीयस्य ॥ सुष्ठु शोभनक्षुतचक्षुर्येषाम् ॥

सुचक्षु : । पुं० महाचक्षुष्मति ॥

सुचतुर : । वि० शोभनानिचत्वारियस्य० तस्मिन् ॥ अचतुरविचतुरेत्यादिनासाधु : ॥

सुचरित्र : । वि० सुशीले ॥ शोभनचरित्रमस्य ॥

सुचरिता । स्त्री० साध्व्याम् ॥ शोभनचरित्रमस्या ॥

सुचर्म्मा । पुं० भूर्जपत्रे वि० सुचर्म्मवति ॥ शोभनचर्म्मास्य ॥

सुचारु : । वि० मनोहरे ॥

सुचित्रम् । न० शोभनचित्रे ॥

सुचित्रक : । पुं० मत्स्यरङ्गविहङ्गमे ॥ चित्रसर्पे । मातुलाहौ ॥ वि० सुन्दरचित्रयुक्ते ॥

सुचित्रबीजा । स्त्री० विडङ्गे ॥

॥ सुनौ ॥ नरनारायणरूपिभगवति बदरिकाश्रमेसुश्रोभमनं मनसश्चेन्द्रि याणाञ्चै कायारूपंतपोऽस्मे तिसुत पानरनारायण ॥

सुतराम् । अ॰ अत्यन्ते । अतिशये ॥ अवधारितार्थप्रतिपादके ॥ य था । सृणुदिजमहाबुद्धे दुःखंनापि खातोहरि । ददातिमोच सुतरा किम्पु नर्दैत्यवर्ज्जनादिति ॥ दिव चनविभक्त्येत्यादिना॰सुशब्दात्तर प् । किमेत्तिङव्ययेत्यादिनाम्प्रत्य य । तद्धितश्चासर्वविभक्तिरित्यव्यय सञ्ज्ञा ॥

सुतर्क्वारी । स्त्री॰ देवदालीलतायाम् ॥

सुतर्द्दन । पु॰ तास्राचे । को किले ॥

सुतल । पु॰ अट्टालिकाबन्धे ॥ ना गलोकप्रभेदे ॥

सुतश्र्ङ्करा । स्त्री॰ सप्तपुत्रप्रसाम ॥

सुतश्रेणी । स्त्री॰ मूषिकपर्ण्याम् ॥ सुतानाश्रेणिरस्या ॥ पुत्रश्रेण्दे ॥

सुता । स्त्री॰ स्वपत्य । कन्यायाम् ॥ दुरालभायां ॥

सुतात्मज । पुं॰ पौत्रे ॥ दौहित्रे ॥ सुतस्यसुतायावात्मज ॥

सुतात्मजा । स्त्री॰ पौत्र्याम् ॥ दौहि त्र्याम् ॥ सुतस्यसुतायावात्म जा ॥

सुतारम् । न॰ द्वितीयायामृशब्दाख्या याम्सिद्धौ ॥

सुतारका । स्त्री॰ बुद्धधर्मासनदेवी विशेषे ॥

सुतिक्त । पु॰ भूनिम्बे । किरात तिक्ते ॥ पर्पटे । पित्तपापडा॰ हृ॰ भा॰ प्र॰ ॥

सुतिक्तक । पु॰ पारिभद्रे । भू निम्बे ॥

सुतिक्ता । स्त्री॰ कोशातक्याम् । भू दहफलिकायाम् ॥

सुतिक्तिका । स्त्री॰ कोशातक्याम् ॥

सुती । त्रि॰ पुत्रवति ॥

सुतीक्ष्ण । पु॰ शिग्रौ ॥ श्वेतशो भाञ्जने ॥ रामायणप्रसिद्धमुनि विशेषे ॥ नाम्नासुतीक्ष्णश्चरितेनदा न्त ॥ त्रि॰ अतिशयेनखरे ॥

सुतीर्थकम् । न॰ । तीर्थविशेषे ॥

सुतुङ्ग । पुं॰ नारिकेलागमे ॥ य शायामुत्तांशविशेषे । अत्यन्ततुङ्गे ॥ त्रि॰ अतिशयोच्चे ॥

सुतप । पुं॰ कुन्दरे । उखर्वले । मृगवन्नभेतृणविशेषे ॥

सुतेजन । पुं॰ धन्वङ्गे । धन्वन वृक्षे ॥

सुतेजा । पु॰ सुतेजस्त्वगुणविशि ष्टेदुतीर्थे ॥ स्वर्गे ॥ प्राकल्पार्थ विशेषे स्त्री॰ आदित्यभक्तायाम् ॥ त्रि॰ तेजसान्विते ॥

सुतेजा । स्त्री॰ महाज्योतिष्मत्याम् ।

सुत्या । स्त्री॰ अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्॰ सूयते सोमोऽस्मिन्॰ अस्या वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पु॰ गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते॰ पालयति । त्रैङ् पालने । आतोमनिन्॰ सर्वधातुभ्योमनिन् वा ॥

सुत्वा । पु॰ अभिषवस्नाने । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्॰ । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री॰ मातरि ॥ ङ्वनिबन्तात्॰ वनोरचेति ङीप्रौ ॥

सुदग्धा । स्त्री॰ दग्धाख्यतृणे । सुदग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदग्धिका । स्त्री॰ कुरुह॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ख्याते । दग्धरुहायाम् । भस्मरोहायाम् ॥

सुदण्ड । पु॰ वेत्रे ॥

सुदण्डिका । स्त्री॰ गोरक्ष्याम् ॥

सुदन् । त्रि॰ शोभनदन्तविशिष्टे ॥ शोभनादन्ता यस्य । वयसि दन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री॰ तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शन । पुं॰ । हरेश्चक्रे ॥ तल्लक्षणं यथा । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रं स्या-

त्सुदर्शनाख्यं च वलयत्रीहरेः स्मृतम् ॥ जिनानां बलदेवे ॥ इक्ष्वाकुनृपितरि ॥ शोभनं दर्शनमस्य । भर्त्ता : सुखेनदृश्यते वा । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनाकारत्वात् ॥ मेरौ ॥ शशि ॥ राजभेदे ॥ न॰ शक्रनगरे ॥ मदुगमने ॥ त्रि॰ सुदृश्ये ॥

सुदर्शनचूर्णम् । न॰ भावप्रकाशोक्ते ज्वररोगस्यौषधविशेषे ॥

सुदर्शनद्वीप । पुं॰ न॰ जम्बुद्वीपे ॥

सुदर्शना । स्त्री॰ आज्ञायाम् ॥ औषधिप्रभेदे । सोमवल्लयाम् । इक्षुपत्र्याम् । सुदर्शनगुलञ्चः॰ पञ्चगुलञ्च॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ सुदर्शनास्वादुरुष्णा कफशोफास्रवातजित् ॥ मेरुजम्बुम् ॥ सुरोविशेषे ॥

सुदर्शनी । स्त्री॰ अमरावत्याम् ॥

सुदल । पुं॰ चोरमोरटे ॥

सुदला । स्त्री॰ तरुण्याम् । गम्भार्याम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदान्त । पुं॰ शाक्यमुनिशिष्यविशेषे । त्रि॰ तपःसहे ॥

सुदामा । पुं॰ वारिधरे । मेघे ॥ पर्वतविशेषे ॥ गोपविशेषे समुद्रे ॥ श्वेतद्वीपे । ऐरावते ॥ श्रीकृष्ण

मिश्चब्राह्मणविशेषे । चि० सुदात रि ॥ सुष्ठुददाति । डुदाञ्० । आतोमनिन् ॥
सुदामा । स्त्री० नदीविशेषे । टाप् ॥
सुदाय । पु० हरणे । अध्यादान काले० व्रतभिक्षादौ वदीयमानद्र व्ये । सुष्ठुदीयते । डुदाञ० । घ ञ् । युगागम ॥
सुदारु । पु० पारिपात्रकेपर्वते ॥ सुदारुःपारिपात्रकइतिहेमचन्द्रः ॥ न० शोभनदारुणि ॥
सुदि । अ० शुक्लपक्षे ॥
सुदिनम । न० शुभदिवसे ॥ चि० प्रशस्ते ॥ यथा । सुदिनासुसभा सुकार्य्यमेतत्प्रविचिन्त्योतविशेषत । स्वयमितिप्रयोग ॥
सुदीर्घ । चि० अतिविस्तारे ॥
सुदीर्घघर्म्मा । स्त्री० चसनपर्ण्यांम् ॥
सुदीर्घफलिका । स्त्री० वार्त्ताकुविशे षे । सिह्वावैगन० इतिगौ० दे० भा० प्र० ॥
सुदीर्घा । स्त्री० चीनाकर्क्यांम् ।
सुदुर्द्दर्श । चि० अत्यन्त द्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥
सुदुर्लभ । चि० अतिदुष्प्राप्ये । दु खेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्ते ज्ञानवान्मांप्र पद्यते । वासुदेव, सर्वमितिसम हात्मासुदुर्लभइति ॥ सुष्ठतिमा त्रदुर्लभः ॥
सुदुश्चर । चि० अतिशयदु खेना चरणीये ॥
सुदुष्कर । चि० सर्वथाकर्त्तुमशक्ये ॥ अत्यन्तकष्टकरे ॥
सुदुस्तर । चि० अतिदु खेनतर णीये ॥
सुदूर । चि० दूरीतरसि । दविष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्त व्य यत्रम.हेश्वरोजन ॥
सुदूरपराहत । चि० अतिदूरनिरा कृते ॥
सुदृढम् । न० अतिदृढे । गाढे ॥ चि० तद्वति ॥
सुदृढत्वक् । स्त्री० कास्मर्य्याम् ॥
सुदृक् । चि० शोभननेत्रयुक्ते ॥
सुदृश्य । चि० सुन्दराकृतौ ॥
सुदेवी । स्त्री० नाभेर्भार्य्यायाम् । मेरु जव्याम् ॥
सुदेश । पु० मत्स्यदेशे । उत्तमदेशे ।
सुद्युम्न । पु० वैवस्वतमनो पुत्रे ॥ चि० बहुधने ॥ अतिवलशालिनि ॥
सुधन्वा । पु० विश्वकर्म्मणि । त्वष्ट रि । नृपविशेषे ॥ चि० धन्व नि । प्रौढधानुष्के ॥ शोभन ध नुर्यस्य । धनुषश्चेत्यनङ् ॥
सुधन्वाचार्य्य । पु० व्रात्याद्वैश्या त्सवर्णायांजाते० जातिविशेषे ।

कारुषे । यथाश्मनु । वैश्वानु जायवैश्वाख्यात्सुधन्वाचार्य एव च । कारुषश्च विजन्माच मैत्र सात्वत एव चेति ॥

सुधर्म । पुं॰ जिनगणाधिपविशेषे ॥

सुधर्मा । त्रि॰ धर्मशालिनि ॥ कुटुम्बिनि ॥

सुधर्मा । स्त्री॰ देवसभायाम् । शोभनो धर्मो यस्याम् । धर्मादनिच् केवलात् । डाबुभाभ्यामित्यपवे टाप् । अनो बहुव्रीहेरिति डीप् न । सुधर्म॰ सुधर्माणौ इत्यादि । डाब भावे । सुधर्मा सुधर्माणौ सुधर्माण इत्यादि ॥

सुधा । स्त्री॰ पीयूषे । अमृते । मद्ये । सुरायाम् ॥ सुखेन धीयते । धेट पाने । आतश्चोपसर्गे इति कर्मण्यङ् । लेपने । क्षुरायाम् । मूर्व्याम् ॥ स्नुह्याम् ॥ गङ्गेष्टकायाम् ॥ गङ्गायाम् ॥ शालपर्ण्याम् ॥ विद्युति ॥ गुडूच्याम ॥ अस्ते ॥ तोये ॥ रसे ॥ धात्र्याम् ॥ आमलक्याम् ॥ पुष्परसे । मधुनि ॥ हरीतक्याम् ॥ सुष्ठु दधाति पुष्णाति । डुधाञ्॰ । विच ॥

सुधांशु । पुं॰ इन्दौ । चन्द्रे ॥ सुधायुक्ता अंशवो यस्य ॥

सुधांशुतैलम् । न॰ कर्पूरतैले ।

सुधांशुरत्नम् । न॰ मौक्तिके ॥ चन्द्रकान्ते ॥

सुधाकर । पु॰ चन्द्रे ।

सुधाक्षार । पु॰ लौहमूर्ध्नि । चूना॰ इ॰ भा॰ प्र॰ ॥ सुधाक्षारो ऽन्नसङ्काश पाकोक्तोदीविहार थ ॥

सुधाङ्ग । पु॰ चन्द्रमसि ॥

सुधाजीवी । पु॰ पल्लगण्डे । लेपके । राज॰ इ॰ भा॰ ॥ सुधया लेपनेन जीवति॰ तच्छील णिनि. ॥

सुधाधार । पुं॰ चन्द्रे । इन्दौ । अमृतपात्रे ॥ सुधाया आधार ॥

सुधानिधि । पु॰ चन्द्रे ।

सुधाभुक् । पु॰ गीर्वाणे । देवे ॥ सुधांभुङ्क्ते । भुज॰ । क्विप ॥

सुधामय । पु॰ सौधे । राजसदने त्रि॰ अमृतात्मके ॥

सुधामोदक । पु॰ यवासशर्करायाम् ॥

सुधामोदकज । पु॰ तवराजीखण्डे ॥

सुधावर्षी । पु॰ विधातरि । त्रिष्टद्भि । बुद्धभेदे ।

सुधावास । पु॰ चन्द्रे ॥ न॰ त्रपुषि ॥

सुधास्रवा । स्त्री॰ अपुष्प्याम् ॥

सुधासञ्चयोग. । पुं॰ अमृतसिद्धियोगे । यथा । हरावसुजईज्ये॰

जवं निजचं निजचं द्रकमोदं॰ दा समारे । ग्रमे चम् । भवेद्व्यधि पृथ्वसुधिर्षा॰ कथिप्य मनोषित दे व सुधास ग्रयोग ॥

सुधासिन्धु । पु॰ अमृतार्णवे ॥

सुधासूति । पुं॰ चन्द्रे ॥ यथा । प्रदोपज्वालाभिर्दिवसकरनोराजन विधि .॰ सुधासूतेश्चन्द्रोपलजल कवैरर्घ्यघटना । स्वकोयैरम्भोभि सलिलनिधिसौहित्यकरणं॰त्वदो याभिर्वाग्भिस्तवजननि वाचांस्तुति रियमिति॥ मलि । वड्डि ॥ पद्म ॥

सुधास्रवा । स्त्री॰ अधोजिह्विकाया म् । गलशुण्डिकायाम् । घण्टि कायाम् । कृडानाड्याम् ॥ रद शोद्भवे ॥

सुधाहर । ) पु॰ गरुडे ॥ देवे ।
सुधाहृत् । )

सुधिति । पुं॰ स्त्री॰ स्वधितौ । प रशौ ॥

सुधी । पु॰ विदुषि । सति । कोविदे । पण्डिते । न्यायशीलतको स्ताचार्यावलो ॥ सुष्ठु ध्यायति । ध्यै ॰ । ध्यायते . क्विपिसम्प्रसारणम ॥ स्त्री॰ सुन्दरबुद्धौ ॥ सुष्ठुधी वि॰ शोभनबुद्धियुक्ते ॥

सुधूप . । पु॰ सरलद्रवे ॥

सुधूम्य । पु॰ स्वादुनामगन्धद्रव्ये ॥

सुधोद्भव . । पु॰ धन्वन्तरौ । दिवो दासे ॥

सुधोद्भवा । स्त्री॰ हरीतक्याम् ॥

सुनन्द । पु॰ श्रीकृष्णअपार्षदविशेषे ॥ द्वादशविधराजगृहात्मकं सगृहवि शेषे ॥ सपदेर्घ्यराज सहस्रमाने नैकपञ्चाशद्धस्त परिणाहैश्चत्वारि शद्धस्तम ॥ यथा । यद्यत्वैोच्यते मान तत्रतेनैवकल्पना । राज्ञ सहस्रमेवाप्युदोर्घं सर्वतनि विधि त् ॥ आयामेनसुनन्द . द्वात्रिंश द्धस्तैरष्टभि . । परिणाहैश्चतुर्भि श्चराजवेश्मे प्रतिष्ठित . ॥ चत्वा धिदेवताभौमैरायतेभावसुन्धराम् ॥ राधिपैर्वि प्रतिष्ठाकरस्तैषिवाहता निच ॥ रत्नपट्टावृतोगेह सकला र्थप्रसाधक . । अतस्त्रिस्त्वामपोषा स सुचिरं पाति मेदिनीमितियु क्तिकल्पतरु ॥ दैर्घ्ये ५१ प्रस्थे ४० ॥ न॰ हलभृन्मुसले ॥

सुनन्दा । स्त्री॰ रोचनायाम् ॥ उमायाम् ॥ अङ्गनायाम् ॥ जनन्या म् ॥ उमासखीभेदे ॥ अर्कपत्रीक न्दे । वृश्विरमूल॰ वृ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

सुनन्दिनी । स्त्री॰ मञ्जुभाषिणीछ न्दसि ॥

सुनयन पु॰ मृगे॥ वि॰शोभननेत्र युक्ते ॥ शोभनेनयनेयस्य . ॥

सुनयना । स्त्री॰ नार्याम् ॥

सुन्द । पु॰ रामायणप्रसिद्धवानरवि
शेषे । राक्षसविशेषे ॥ चण्डाकी
परमेश्वरे । सुष्ठु उनत्ति । आर्द्रीक
रोति । उन्दी॰ । पचाद्यच् । शकन
ध्वादि ॥

सुन्दर । पु॰ कामदेवे । सुन्दरी॰
वृत्त॰ गौ॰ दे॰ भा॰ प्र॰ वृक्षे ॥
त्रि॰ रुचिरे । चारुणि । शोभने ।
मञ्जुले ॥ सद्रियते । दृङ्आदरे ।
घञर्थे कप् । पृषोदरादि ॥
यद्वा । सुष्ठु उनत्ति॰ चित्तमार्द्रीकरो
ति । उन्द क्लेदने । बाहुलकाद
र । शकन्ध्वादि ॥

सुन्दरिका । स्त्री॰ तीर्थविशेषे ॥

सुन्दरी । स्त्री॰ रूपलावण्यसम्पन्नाया
नार्याम् ॥ द्रुमान्तरे । त्रिपुरसुन्द
र्यां देव्याम् । योगिनीविशेषे ॥
हरिद्रायाम् ॥ कामाख्यम् ॥
छन्दोविशेषे । चतुर्थपादे जगौ
युजि सभरा लगौ यदि सुन्दरी तदा
। यथा । यदवोचदवेक्ष्य मानिनी प
रितः स्नेहमयेन चक्षुषा । अपि
वागधिपस्य दुर्वचं वचनं तद्विदधीत
विस्मयम् । यथा वसान्तरेपि । कु
सुमगन्धरसैरभिभूषिता चरणसङ्ग
तनूपुरमण्डिता । करसुवर्णलस
द्वलयान्विता कुरुतिकामनचेतसि
सुन्दरि । यथा । नसुलभोऽशरदि
न्दुमुखो प्रियामनसिकामविचेष्टि
तमोहरम् । शालग्रामात्पश्चादिग
मालतीवदिमलप्रकरैर्हतशासर ॥
सुन्दरशब्दात् गौरादित्वात् ङीष् ।
पार्वत्याम् ॥

सुन्वन । त्रि॰ सोमयाजिनि । सो
माभिषवकर्तरि ॥ सुनोतेर्लट
शतादेश ।

सुपक्व । पु॰ सुगन्धाम्रे ॥ त्रि॰
शोभनपरिपक्वे । परिपक्वे ॥

सुपक्षक । पु॰ सहकाराम्रे ॥

सुपत्र । पु॰ पक्षिराजगरुडे ॥ आदि
त्यपत्रे । न॰ ङिआ॰ । पत्रके ।

सुपत्रक । पु॰ शिग्रौ ॥

सुपत्रा । स्त्री॰ पालङ्क्याम् ॥ शताव
र्याम् । शम्याम् ॥ रुद्रजटायाम्
। शालपर्ण्याम् ॥

सुपत्रिका । स्त्री॰ जतुकायाम् ॥

सुपथ । पु॰ । शोभनमार्गे । सत्प
थे ॥ यथा । सत्पथस्त्वमन्या
स्सुपन्थाः सुपथोऽपि तच्छब्दः
तौ ॥

सुपन्था । पु॰ अर्चितेऽध्वनि । स
त्पथे । अतिपथि ॥ सु पूजा
याम् । कुगतीति समास । नपू
जनादिति समासान्तनिषेध । क्त
समासान्तनिषेधात् पथ सङ्ख्या
व्ययादेरिति नक्लीवत्वम् ॥

सुपथ्य । त्रि॰ पथ्याहारभोजना
दौ ॥

सुपथ्या । स्त्री० श्वेतचिल्ल्याम् ॥

सुपद्म । पुं० व्याकरणविशेषे ॥ पु० न० शोभनारविन्दे ॥

सुपद्मा । स्त्री० वचायाम् ॥

सुपर्ण । पु० पन्नगाशने । गरुडे ॥ शोभनानि पर्णानि यस्य स । स्वर्णचूडे । चाषे ॥ कृतमालके । राजवृक्षे ॥ सुष्ठु पर्णान्यस्य ॥ भगवति वासुदेवे ॥ शोभनानि पर्णानि छन्दांसि० संसारतरुरूपिणोऽस्य प्लक्षद्वीपस्थेऽद्रिविशेषे ॥ श्येनप्रभेदे । वेगवानल्पविग्रहः सुपर्ण इति व्याख्यातारः ॥ सप्तपर्णे ॥

सुपर्णक । पु० आरग्वधे सप्तच्छदवृक्षे ॥ गरुडे ॥

सुपर्णकेतु । पु० विष्णौ ॥

सुपर्णा । स्त्री० कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णाख्य । पु० नागकेसरे । तीर्थविशेषे । यथा । उत्पलावतीसुपर्णाख्ये इति ॥

सुपर्णिका । स्त्री० स्वर्णजीवन्त्याम् । पलाश्याम् ॥ बाकुच्याम् ॥ रेणुकायाम् ॥ शालपर्ण्याम् ॥

सुपर्णी । स्त्री० कमलिन्याम् ॥ विनतायाम् ॥

सुपर्णीतनय । पु० गरुडे । तार्क्ष्ये

सुपर्व्वा । पुं० सुमनसि । देवे । सुरे ॥ सुष्ठु पर्व अमावास्यादिचरितम्० अङ्गुल्यादिग्रन्थि उत्सवो वा यस्य ॥ शरे ॥ वंशे ॥ पर्वणि ॥ धूमे ॥

सुपर्व्वा । स्त्री० श्वेतदूर्व्वायाम् ॥

सुपर्व्वाङ्गना । स्त्री० देवललनायाम् । यथा । सुपर्व्वाङ्गनागानगम्भीरतानलवनत्स्वल्पशोभाविपञ्चीरवेण । कणत्किङ्किणीनादपूर्णं नतूर्णं सुविनाम्नसम्पूर्णघूर्णाञ्जरोहि ॥

सुपाकिनी । स्त्री० गन्धपत्रायाम् ॥

सुपाक्यम् । न० विडलवणे ॥

सुपात्रम् । न० दानयोग्यव्यक्तौ शोभनभाजने ॥ त्रि० उत्तमपात्रयुक्ते ।

सुपान । त्रि० पानयोग्ये ॥ सुखेन पीयते । पा० । कर्मणि ल्युट् ॥

सुपार्श्व । पु० प्लक्षवृक्षे ॥ दशार्हभेदे । सम्पाति पुत्रे० पक्षिविशेषे । पञ्चाशत्सहस्रयोजनोच्छ्राये० चरणपर्णमेरोः सौम्यदिशि० तस्य द्व्यर्थिख्याते० विष्कम्भशैले ॥ तत्र सहस्रयोजनोन्नतिमान्न्यग्रोधपादपोऽस्ति ॥

सुपार्श्वक । पु० गर्दभाण्डे । कन्दराले । कपीतने । प्लक्षे । पीलव० पीलवय० निर्गुण्डी० गौडी० भू० प्र० वृक्षे ॥ शोभनम्० पार्श्वमस्य ॥ भाव्यर्हद्विशेषे ।

सुपिङ्गला। स्त्री॰ जीवन्त्याम। ज्योतिष्मत्यां॥

सुपीतम। न॰ गर्जरे॥

सुपुट। पु॰ कोलकन्दे॥ विष्णुकन्दे॥

सुपुत्रिका। स्त्री॰ लताविशेषे। जतुकायाम्। जतुकार्याम्। तिर्य्यक्फलायाम्॥

सुपुष्करा। स्त्री॰ स्थलपद्मिन्याम्।

सुपुष्प। पु॰ राजतरुण्याम्॥ हरिद्रौ। शिरीषे॥ रक्तपुष्पके। पारिजातमन्दार॰ इ॰ गौ॰ दे॰भा॰ प्र॰॥ न॰ लवङ्गे॥ प्रपौण्डरीके॥ तूले। तूदे। पोश्वंपिप्पलाभिधे॥ स्त्रीणारजसि॥ आढ्ल्यं॥

सुपुष्पिका। स्त्री॰ पाटलायाम्॥ जीर्णदारुणि॥

सुपुष्पी। स्त्री॰ श्वेतापराजितायाम॥ कदल्याम्॰॥ जीर्णफञ्ज्याम्। जीर्णदारुणि॥ द्रोणपुष्प्याम्॥ मिश्रेयायाम्॥ शतपुष्प्याम॥

सुपूर। पु॰ बीजपूरे॥

सुपूरक। पु॰ बकपुष्पवृक्षे॥

सुपूर्व्वप्रवेशः। पु॰ यात्रानिवृत्त्यनन्तरङ्गृहप्रवेशे॥ यात्रावसानेतुसुपूर्व्वसंज्ञ॥

सुपेशल। त्रि॰ अतिरम्ये। सुन्दरे॥

सुपेशा। त्रि॰ सुकुमारे। कोमले॥ सुरूपे॥

सुप्तम्। न॰ साधिकायाम्। सुषुप्तौ॥ त्रि॰ निद्रिते। निद्राण। शयितेसुप्ता॰ इ॰ भा॰॥ षड्वेधनैविधिनिषेधीयथा। क्षुधितस्तृषित कामीविद्यार्थीकृषिकारकः। भाण्डारोचप्रवासीचसप्तसुप्तान् प्रबोधयेत्॥ मक्षिकाभ्रमरीसर्पीराजावैबालकस्तथा। परश्वापिचमूर्खश्वसप्तसुप्तान्नबोधयेत्इति॥ स्वापितेस्म। ञिष्वप्शये। क्त। सम्प्रसारणम॥

सुप्तघातक। त्रि॰ दृषेरे। हिंस्रे॥ इ॰ चि॰ ष॰॥

सुप्तजन। पु॰ अर्द्धरात्रे॥ निद्रितेजने॥

सुप्तज्ञानम्। न॰ सुप्तविज्ञाने। स्वप्ने॥

सुप्ति। स्त्री॰ स्पर्शाज्ञतारुजि॥ विस्रम्भे॥ शयने। निद्रायाम। स्वापे विज्ञानविरतौ॥ अस्यास्त्रैविध्यमुक्तं यथा। आहारादिविभेदेन॰ सात्त्विकीराजसीतथा। तामसीतिविधासुप्ति. सापरात्रिशयतेविधा॥ सुखमस्वाप्समथाखदु॰ खमस्वापसमथनु। गाढमूढोत्तम

भवेत्। तथाऽर्द्धकन्यकाचोढासुभगासुप्रियाभवेत इतिमाधव्य ॥

सुफल। पु॰ दाडिमे। बदरे। मुद्गे। कर्णिकारे। राजतरौ। आरग्वधविशेषे। छोटासोनालु॰ इ॰ गौ॰ दे॰ भो॰ प्र॰ ॥ कपित्थे ॥ मत्फले ॥ चि॰ शोभनफलवति। सुष्ठु शोभनानिफलान्यस्य ॥

सुफला। स्त्री॰ कुष्माण्डाभिषधौ ॥ इन्द्रवारुण्याम् ॥ कश्मर्याम। कदल्याम ॥ कपिलद्राक्षायाम् ॥

सुफेनम। न॰ समुद्रफेने ॥

सुबन्ध। पुं॰ तिले ॥

सुबलपुत्री। स्त्री॰ गान्धार्याम् ॥

सुबदरी। स्त्री॰ पुत्रदात्र्याम्॥

सुबल्ली। स्त्री॰ वाकुच्याम। सोमराज्याम् ॥ शोभनावल्लिरस्याः ॥ कट्व्याम् ॥

सुब्रह्मण्य। पु॰ ऋत्विग्विशेषे ॥ गुहे ॥ किरातादिदेशप्रसिद्धेसर्पाधिष्ठितेदेवे॰ सबन्धेसर्पराजेच ॥

सुब्रह्मण्या। स्त्री॰ निगदविशेषे॥

सुब्रह्मवासुदेव। पु॰ ब्रह्मरूपवासुदेवसुते ।

सुभग। पुं॰ चम्पके ॥ अशोके ॥ रक्तम्लाने। टङ्कणे ॥ चि॰ हृष्टे ॥ सुन्दरेऽवश्ये ॥ शोभनम्॰ भगश्रीर्यस्य ॥

सुभगा। स्त्री॰ दुर्गायाम् ॥ पतिप्रियायाम्। सुप्रियायाम ॥ शालिपर्ण्याम ॥ कस्तूर्याम् ॥ हरिद्रायाम ॥ सुवर्णकदल्याम। सम्याकदल्याम्। चम्याकिला॰ इ॰ भा॰ प्र॰ ॥ नीलदूर्वायाम ॥ प्रियङ्गौ। कन्यायाम् ॥ तुलस्याम। कैवर्त्तिकायाम ॥ शोभनम॰ भगश्रीर्यस्या ॥

सुभगासुत। पु॰ सौभागिनेये ॥ सुभगाया सुत ॥

सुभङ्ग। पु॰ नारिकेलवृक्षे ॥

सुभद्र। पु॰ विष्णौ। वासुदेवे। चि॰ सुभद्र मङ्गलयुक्ते ॥

सुभद्रक। पु॰ देवरथे। बिल्ववृक्षे ॥

सुभद्रा। स्त्री॰ श्रीकृष्णभगिन्याम् ॥ घृतमण्डायाम् ॥ श्यामालतायाम् ॥ काश्मर्याम् ॥ गम्भार्याम् ॥

सुभद्राणी। स्त्री॰ त्रायमाणायाम। बलुका इ॰ गौ॰ दे॰ भो॰ प्र॰ ॥

सुभद्रिका। स्त्री॰ दुर्गायाम् ॥

सुभद्रेश। पु॰ अर्जुने ॥

सुभानु। पु॰ वत्सरविशेषे ॥ तत्फलं यथा। सुभिक्षं क्षेममारोग्यं विग्रहश्चनिरुपद्रवम्। व्यवहारेभवेत्तुष्टः सुभानौदेवपूजिते ॥ १७ ॥

सुभाषित। पु॰ बुधे ॥ न॰ सुवचने ॥ हितोपदेशवचने ॥ यथा स्वर्गापवर्गसिद्ध्यर्थं भाषितयत्सु

शोभनम् । वाक्यमुनिवरे प्रति सर्वइन्द्रेय सुभाषितमिति

सुभिक्ष । त्रि० सुलभभक्षद्रव्ये ॥ सुलभभक्ष्ययुक्तकालादौ ॥

सुभिक्षा । स्त्री० धातकीपुष्पाम् ॥ शोभनायाम् ॥ भिक्षायाम् ॥ त्रि० लब्धान्ने ॥ सुष्ठु भिक्ष्यते० । भिक्ष याच्ञादौ । घञ् ॥

सुभीरव । पु० पलाशवृक्षे ॥

सुभू । त्रि० सुजन्मनि ॥

सुभूता स्त्री० कैलासात्मन, की भक्षोद्गमभागे ॥ भूतिभिर्गिरीशश्च रकुवेरादिभिरधिष्ठितत्वात् ॥

सुभूतिक । पु० बिल्ववृक्षे ॥

सुभूम । पु० कार्त्तवीर्ये ॥

सुभृशम् । अ० वाढमित्यर्थे ॥

सुभ्राता । त्रि० स्निग्धभ्रातरि । शोभन स्निग्धोभ्रातायस्य । नद्य तसोतिकप तुनभवन्ति । चन्द्रिते भ्रातुरितिनिषेधात् ॥

सुभ्रू । स्त्री० योषिति ॥ त्रि० शोभनभ्रूविशिष्टे ॥

सुमम् । न० पुष्पे ॥

सुमङ्गलम् । न० पुष्पादिद्रव्ये ॥ त्रि० सदाचारे ॥ अतिशयश्च मवति ॥

सुमङ्गला । स्त्री० वायसोल्याम् । अ ष्टमातरि ॥

सुमत: । त्रि० अनुमते । सुन्दरज्ञा नविषये ॥

सुमति । पु० भरतात्मजे ॥ दुत्ताई विशेषे । भूताद्देविशेषे ॥ स्त्री० शो भनमतौ विष्णुयशस पत्न्या म् । कल्किमातरि ॥ त्रि० सुबुद्धौ । निपुणे ।

सुमदन । पुं० अ स्रवृक्षे ॥

सुमदात्मजा । स्त्री० स्वर्गानन्दाया म् । अप्सरसि ॥

सुमधुर: । पु० जीवशाके ॥ न० अत्यर्थमधुरवाक्ये । सान्त्वे ॥ त्रि० अतिशयमधुररसयुक्ते ॥

सुमन । पुं० गोधूमे ॥ सुष्ठुमन्य ते । मनज्ञाने , अच् । धत्तूरे । त्रि० मनोहरे

सुमनपत्रिका । स्त्री० जातीपत्र्याम् जाफिवो० इ० भा० प्र० ।

सुमनफलम् । न० जातीफले । पु० कपित्थवृक्षे

सुमना । पु० देवे । सुरे । धीरे । पण्डिते ॥ शोभनमनोय स्य । पूतीकरञ्जे । महा करञ्जे ॥ निम्बे ॥ गोधूमे ॥ देवप्रायेषाबभूमि ॥ त्रि० प्रस न्नमनसि ॥

सुमना । स्त्री० सुमनस स्त्री० भूम्नि० पुष्पे । सुमना पुष्पमालत्यो । स्त्रियांमितिमेदिन्यादेरेकत्वम् । वै श्याःस्रयाणसुमनादयवन्त्यर्नीयेतिप्र कोत्तेश्च ॥ स्त्रिय सुमनस:

पुष्पसुप्रसूनकुसुमसुमनिव्यमरो क्तेः । भूम्निस्त्रियः सुमनसइति त्वलोपादाववहुत्वमपि ॥ सुष्ठुम न्यतेव्याभि . । मन० । असुन् । यद्वा । शोभनमनोऽस्याम् ॥ मालत्याम ॥

सुमन । न० पुष्पे ॥ पुष्पसुमन कुसुममितिनाममाला । अप्रत्याख्ये येदर्थिसुमनसोतिप्रयोगबाहुल्यो वश्येऽनुकूल । क्लीबत्वछान्दस मित्यके ॥

सुमना । स्त्री० मालत्याम् । जातीपु ष्पवृक्षे । अर्थलोतिभाष्यप्रसिद्धे सुमनायावपचावीतिसुश्रुतेदर्श नाङ्गवत्यापि ॥

सुमनोरज । न० परागे ॥ सुमनसा रज ॥

सुमन्तु । पु० मुनिविशेषे । अथर्वा ङ्गिरसान्धारकोव्यासशिष्ये ॥

सुमन्त्र । पु० कल्किदेवस्यज्येष्ठ भ्रातरि । यथा कल्केर्ज्येष्ठास्त्रय. शूरा कविप्राज्ञसुमन्त्रका । ता तमातृप्रियकरागुरुविप्रप्रतिष्ठिता इतिकल्किपु० २ऽ०य ॥ दशरथ भूपतेः सारथौ ॥

सुमन्त्रा । स्त्री० दुर्गायाम् ॥

सुमर्षण . । त्रि० सुसहे ॥ सुखे नमृष्यते । कर्म० । भाषायाशा सियुधीत्यादिनाखलर्थे युच ॥

सुमालतिका । स्त्री० वर्णवृत्तविशेषे ॥ यदाजगणद्विभवेदमलघु । म घोविततेऽतिसुमालतिकेति ॥ य था । मनोजशरेणविषमतरेण । अ थादितितेनभवद्वयितेन ॥

सुमित्र । पु० ईश्वरे ॥ सुष्ठुमि त्रं जीवपक्षिणः सखा ॥ इक्ष्वाकु नृपतिरि । कुलकुवर्शीयवृहत्वला न्वयेसुरथराजपुत्रे ॥ न० हिते ॥

सुमित्रभू । पु० जिनचक्रवर्ति वि शेषे । सगरे ॥

सुमित्रा । स्त्री० लक्ष्मणशत्रुघ्नयोर्ज नन्याम । दशरथराजपत्न्याम् । लक्ष्मणप्रसाम् ॥

सुमित्रानन्दवर्द्धन. । पु० लक्ष्मणे ॥ सुमित्रायाआनन्द वर्द्धयति । नन्दा दित्वाल्ल्यु ॥

सुमुख । पु० गरुडात्मजे ॥ नाग विशेषे ॥ शाकभेदे । पण्डिते ॥ हेरम्बे ॥ वनबर्वरिकायाम् ॥ बर्बरे । सितार्जके ॥ प्रागुदक्षिणपश्चिमद्वा रगृहे ॥ भगवतिवासुदेवे ॥ शोभ नमुखमस्य ॥ न० नखक्षतविशेषे ॥ उत्तमाङ्गे । त्रि० पण्डिते । म नोज्ञे । सुन्दरे ॥ सुन्दराननविशि ष्टे । सुन्दरवदने ॥

सुमुखा । स्त्री० तार्क्ष्यवध्याम् ॥

सुमुखी । स्त्री० देव्यन्तरे ॥ तार्क्ष्य व ध्वाम् । त्रिष्टुप्छन्दो ११ भेदे ॥

नजजलगैर्गदिता सुमुखी। यथा। तरणिसुतातटकुञ्जगृहे वदनविधुस्मितदीधितिभिः। तिमिरमुदस्य मुखं सुमुखी हरिमकरोत् क्वचिद् सुस्थचिरम्॥ सुन्दरवदनायाम्॥ स्वाङ्गाच्चोपसर्जनादसयोगोपधादिति ङीष्।

सुमुष्टि। पु॰ विषमुष्टिक्षुपे। डोडिकायाम्॥

सुमूल। पु॰ श्वेतशोभाञ्जने॥

सुमूलकम्। न॰ गर्जरे॥

सुमूला। स्त्री॰ शालपर्ण्याम्॥ पृश्निपर्ण्यां॥

सुमेखल। पु॰ मुञ्जे॥ त्रि॰ शोभनमेखलायुक्ते॥

सुमेधा। स्त्री॰ ज्योतिष्मत्याम्। त्रि॰ सुबुद्धौ। विदुषि। शोभना मेधाप्रज्ञायस्य। नित्यमसिच् प्रजामेधयोरित्यसिच समासान्तः॥

सुमेरु। पु॰ पर्वतविशेषे। मेरौ। हेमाद्रौ। रत्नसानौ। सुरालये। मिनोतिक्षिपति॰ उच्चत्वाज्ज्योतींषि। डुमिञ्प्रक्षेपणे। मि पीभ्यांरु। सुमेरुरित्युपसर्गान्तरनिवृत्त्यर्थम्॥

सुम्नम्। न॰ सुखे॥

सुम्पलुराठ। पु॰ कर्पूरके॥

सुम्भ। पु॰ देशविशेषे॥ असुरभेदे।

सुस्यम। न॰ रत्नौ। सुपूजितमोयते। मीङ गत्याम। एरच्। वा बहुलकादाद्यः॥ सुमेपुष्पे साधुर्वा। तत्रसाधुरितियत्॥

सुयन्त्रित। त्रि॰ शास्त्रीयनियमिते विप्रादौ॥

सुयामुन। पुं॰ वत्सराजे। प्रासादे। अद्रिविशेषे। अच्युते। श्रीकृष्णे। शोभनायमुनासम्बन्धिनः परिवेष्टारोऽस्य। यामुना परिवेष्टारः पद्मासनादयः शोभनायस्येतिवा॥

सुयोजित। त्रि॰ नियुक्ते॥

सुयोधन। पु॰ दुर्योधने॥ सुखेन युध्यतेसःसुयोधनः। भाषायांशासियुधिदृशिधृषिमृषिभ्योयुच्॥

सुर। पु॰ अमरे। निर्जरे। देवे। सुरति। षुरप्रसवैश्वर्ययोः। तुदादिः। इगुपधेतिकः। यद्वा। क्षीरसमुद्रोत्थासुरा॰ साचास्ति॰ अर्शआद्यर्थे॰ अर्शआद्यच्॥ सुरापरिग्रहाद्वासुरः। तथाचार्षेरामायणे। वरुणस्यततः कन्यावारुणी रघुनन्दन। उत्पपातरसात्तस्मान्मार्गमाणापरिग्रहम्॥१६॥ दितेः पुत्रानतांराम जगृहुर्वरुणात्मजाम्। अदितेस्तुसुताष्टौताम् जगृहुरनिन्दिताः। ताम् अगृह्णन्त ते सुराः॥२७॥ सुरापरिग्रहाद्देवाः सुराइत्यभिविश्रुताः। अपरिग्रहणात्तस्याद्दैतेया

ष्वासुरास्तथैव्याघ्रैः रामायणे आदि
काण्डे अस्मिन् त्वसितानामनिषट्च
त्वारिंशदध्याये श्लोकाः ॥ शोभन
राजते । राजृ दीप्तौ । अन्येष्वपि
दृश्यत इति डः । यद्वा । सुनोति । षुञ्
। सुसूधाञ्गृधिभ्य क्रन् ॥

सुरक । पु॰ पक्षिविशेषे ॥ सुरावर्णो
ऽस्ति । सुराया आहावतिक्रन ।

सुरकरीन्द्रदर्पापहा । स्त्री॰ गङ्गाया
म् ॥ यथा । भगीरथपथानुगा सुरक
रीन्द्रदर्पापहा महेशमुकुटप्रभा गिरि
शिर पताकासिता । सुरासुरनरो
रगैरजभवाच्युतैः संस्तुता विमु
क्तिफलदायिनी भगवती स्वयं राजते
॥ इति कल्किपुराणे ३४ ऽध्या
य ॥

सुरकार । पु॰ विश्वकर्मणि ॥

सुरक्तता । स्त्री॰ गुडूच्याम् ॥

सुरक्त । पु॰ रक्तचन्दने । त्रि॰ मधु
रकण्ठे ॥ अत्यन्तानुरक्ते । शोभ
नरागयुक्ते ।

सुरक्तक । पु॰ कोशाम्रे । स्वर्णगै
रिके ।

सुरगण । पु॰ इन्द्रादिदेवगणे ॥

सुरगण्ड । पु॰ रोगविशेषे । वर
ण्डे ॥

सुरगुरु । पु॰ बृहस्पतौ ॥

सुरग्रामणी । पु॰ इन्द्रे ॥

सुरङ्ग । पु॰ नागरङ्गे ॥ भूमौ गुप्त
मार्गात्मके गर्तविशेषे ॥ न॰ पत
ङ्गे । वकम्॰ इ॰ भाषा॰ प्र॰ ।
हिङ्गुले ॥

सुरङ्गकृत । पु॰ खनकेऽतिदुर्लिहा
सप्रथिते भूमौ गुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न॰ पतङ्गे ॥

सुरङ्गधातु । पु॰ गैरिके ॥

सुरङ्गयुक् । पु॰ सुरङ्गापहर्त्तरि ।
कुजम्भिले ॥

सुरङ्गा । स्त्री॰ लताविशेषे । कैवर्त्ति
कायाम् । दृशारुहायाम् ॥ तिर्य
ग्भूखाते । सन्धौ । सोध॰ इ॰
सुरङ्ग॰ इति च भाषाप्रसिद्धे ॥ सुबहुर
ज्यतेऽस्यामरजसा । रङ्गरागे । हल
श्चेति घञ् । चञ्जेरितकुत्व ॥

सुरङ्गिका । स्त्री॰ मूर्वायाम् ॥

सुरङ्गी । स्त्री॰ काकनासायाम् ॥ र
क्तशोभाञ्जने॰ इति रत्नमाला ॥

सुरजफल । पु॰ पनसवृक्षे ॥

सुरजनी । स्त्री॰ रात्रौ ॥

सुरज्येष्ठ । पु॰ ब्रह्मणि ॥ सुरा
णां सुरेषु वा ज्येष्ठ ॥

सुरञ्जन । पु॰ गोपदले । गुवाक
वृक्षे ॥

सुरतम् । न॰ निधुवने । मैथुने ॥
सुरतं द्विविधम् ॰ बाह्यमाभ्यन्तर
ञ्च । तत्र बाह्यं प्रेक्षणभाषणाश्लेष
चुम्बनाद्यनेकविधम् । आभ्यन्त
रञ्चासनादिभेदेनापि ॥ त्रि॰ दया

सुरपर्णिका । स्त्री॰ पुन्नागे ॥
सुरपर्णी । स्त्री॰ पलाश्याम्
सुरपादप । पु॰ कल्पवृक्षे ॥
सुरपुन्नाग । पु॰ पुन्नागभेदे । न॰ मेरौ ।
सुरपुरी । स्त्री॰ अमरावत्याम् ॥
सुरप्रिय । पु॰ अगस्त्यवृक्षे ॥
सुरप्रिया । स्त्री॰ जात्याम् ॥ स्वर्णरम्भायाम् ॥
सुरभि । पु॰ चम्पके ॥ वसन्ते ॥ जातीफले ॥ सुगन्धौ ॥ चैत्रमासे ॥ कणगुग्गुलौ ॥ धूनके ॥ कदम्बवृक्षे ॥ वकुलद्रुमे ॥ गन्धतृणे ॥ शमीवृक्षे ॥ न॰ स्वर्णे ॥ गन्धोपले । गन्धपाषाणे ॥ साधुगन्धे ॥ सुन्दरे ॥ स्त्री॰ शल्लक्यामोषधौ । गजभक्षायाम् ॥ मातृभिदि ॥ सुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नखाख्याम् ॥ जात्याम् । अपेतराक्षस्याम् । तुलस्याम् ॥ वर्वरीतुलस्याम् ॥ छायायाम् । मेदिन्याम् ॥ सुरायाम् । गवांमातरि ॥ यथा । गवामधिष्ठातृदेवीगवामाद्यागवांप्रसूः । गवांप्रधान सुरभि गोलोकेसासमुद्भवा ॥ त्रि॰ सुगन्धौ ॥ कान्ते । शोभने ॥ विख्याते ॥ सचिवे ॥ धीरे ॥ सुष्ठु रभते॰ रभ्यतेवा॰ सुष्ठुरभस्त रभसयुक्ताभवन्त्यनया । रभराभस्ये । सर्वधातुभ्यइन् । आगमानित्यत्वान्नुम् ॥
सुरभिका । स्त्री॰ स्वर्णकदल्याम् ॥
सुरभिगन्धा । स्त्री॰ मालत्याम् । चवेलौ॰ इ॰ भा॰ प्र॰
सुरभिगन्धि । त्रि॰ शोभनगन्धविशिष्टे । सुरभिर्गन्धोयस्य । गन्धस्येदुत पूतिसुसुरभिभ्य ॥
सुरभित । त्रि॰ वासिते ॥
सुरभित्रिफला । स्त्री॰ सुगन्धित्रिफलायाम् ॥
सुरभिवल्क । स्त्री॰ इलदेलायाम् ॥
सुरभिदारु । पु॰ सरलवृक्षे ॥
सुरभिपत्रा । स्त्री॰ जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥
सुरभिवल्कलम् । न॰ गुडत्वचि ॥
सुरभिस्रवा । स्त्री॰ शल्लक्याम् ॥
सुरभी । स्त्री॰ आमोदमाने ॥ सुरभौ । गवाप्रभृता ॥
सुरभीरसा । स्त्री॰ शल्लकीवृक्षे ॥
सुरभूरुह । पु॰ देवदारुणि ॥ कल्पवृक्षादौ ॥
सुरमृत्तिका । स्त्री॰ तुवर्याम् । काक्ष्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी॰ इ॰ भा॰ ॥
सुरमेदा । स्त्री॰ महामेदायाम् ॥
सुरराज । पु॰ इन्द्रे । सुराणाराजा । टच् ॥
सुरर्षि । पु॰ नारदादौ ॥ नारदा

पञ्चम ॥ ततो धेनुशतं दद्याद्ब्राह्मणानाञ्च भोजनम् । इति गारुडे २२६ अध्यायः ॥ तत्पानेऽशुद्धता यथा । सुरापानाद्वञ्चनां प्रापयित्वा संज्ञानाशं चैव तथातिघोरम् । दृष्ट्वा कचं चापि तथाभिरूपं पीतं तथा सुरया मोहितेन ॥ समन्युरुत्थाय महानुभावस्तदोशना विप्रहितं चिकीर्षुः । काव्यः स्वयं वाक्यमिदं जगाद सुरापानं प्रति वै जातशङ्कः ॥ यो ब्राह्मणोऽद्यप्रभृतीह कश्चिन्मोहात्सुरां पास्यति मन्दबुद्धिः । अपेतधर्मा ब्रह्महा चैव स स्यादस्मिन् लोके गर्हितः स्यात्परे च ॥ मया चेमां विप्रधर्मोक्तिसीमां मर्यादां वै स्थापितां सर्वलोके । सन्तो विप्राः शुश्रुवांसो गुरूणां देवा दैत्याश्चोपशृण्वन्तु सर्वे ॥ इति मात्स्ये २५ अध्यायः ॥ ब्राह्मणस्य विशेषविधिसुरापानप्रायश्चित्तादि यथा । सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् । तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः ॥ गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा । पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥ कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि । सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥ यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत् । अकार्यमन्यत्कुर्याद्वा ब्राह्मणो मदमोहितः ॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत् । तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति ॥ एषा विचित्राभिहिता सुरापानस्य निष्कृतिः ॥ इति मानवे ११ अध्यायः ॥ अथ ईश्वर कुलार्णवे । पीयमद्यपलं खाद्यं समालोक्य प्रियामुखम् । इत्थं वाचरण जप्य परप्राणमपरम्पदम् ॥ गुरुकारुण्यसुलभमीहमखण्डकुलदर्शनम् । त्वद्भक्ता एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ गुरूपदेशरहिता मद्यमात्रं वदीचन । मोहयन्ति जनान् कांश्चित्स्वयमप्येव विमोहिताः ॥ दुराचाररताः केचिद्दूषयन्ति हि पामराः । यथाभूता भवेत्स्वामी सेवकाः स्युस्तथाविधाः ॥ बहवः कौलिकं धर्मं मिथ्याज्ञानविडम्बकाः । स्वबुद्ध्या कल्पयन्तीत्थं पारम्पर्यविवर्जिताः ॥ मद्यपानेन मनुजा यदि सिद्धिं लभन्ति चेत् । मद्यपानरताः सर्वे सिद्धिं यान्तु समीहिताम् ॥

मांसभक्षणमात्रेण यदि पुण्या गतिर्भवेत्। लोके मांसाशिनः सर्व्वे पुण्यभाजो भवन्ति च ॥ स्त्रीसम्भोगेन देवेशि यदि मोक्षं व्रजन्ति चेत्। सर्व्वेऽपि जन्तवो लोके मुक्ताः स्युः स्त्रीनिषेवणात् ॥ कुलमार्गो महादेवि न मया निन्दितः क्वचित्। आचाररहिता येऽत्र निन्दितास्ते न चेतरे ॥ अन्यथा कौलिको धर्म्मो ह्याचारः कथितो मया। विचरन्त्यन्यथा देवि मूढाः पण्डितमानिनः ॥ कृपाणधारागमनाद्व्याघ्रकण्ठावलम्बनात्। भुजङ्गधारणान्नूनमशक्यं कुलवर्त्तनम् ॥ अथापानन्तु देवेशि सुरापानं तदुच्यते। तन्महापातकं ज्ञेयं वेदादिषु निरूपितम् ॥ अनाघ्रेयमनालोक्यमस्पृश्यञ्चाप्यपेयकम्। मद्यं मांसं पशूनान्तु कौलिकानां महत्फलम् ॥ अमेध्यानि द्विजातीनां मद्यान्येकादशैव तु। द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम् ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ सुरादर्शनमात्रेण कुर्य्यात् सूर्य्यविलोकनम्। तत्समाघ्राणमात्रेण प्राणायामत्रयं चरेत् ॥ आजानुभ्यां भवेत्स्नानं नाभ्यां चोपवसेद्दह। ऊर्द्ध्वं नाभेः शिराकन्तु मद्यस्पर्शने विधिः ॥ सुरापाणे कामकृते ज्वलन्तीं तामग्निनि क्षिपेत्। मुखे तथा विनिर्दग्धोऽसौ शुद्धिमवाप्नुयात् ॥ मद्यपानादिदोषस्य प्रायश्चित्तमितीरितम्। अविधानेन यो हन्यादात्मार्थं प्राणिनं प्रिये ॥ निवसेन्नरके घोरे दिनानि पशुरोमभिः सम्मितानि दुराचारस्तिर्य्यग्योनिषु जायते ॥ अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्त्ता चोपहर्त्ता च खादिता चाष्टघातकाः ॥ धनेन क्रयिको हन्ति खादिता चोपभोगतः। घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ मांसस्य दर्शनं त्यक्त्वा सुरादर्शनवच्चरेत्। तस्मादविधिना मद्यं मांसं सेवेत न क्वचित् ॥ विधिवत्सेविते देवि तरसा त्वं प्रसीदसि। नाशयस्यविधानेन सत्यमेतद्वरानने ॥ इदं शास्त्रविधानेन नच्छेदयेत्कदाचन। विधिमार्गाद्विजा वापि च्युत्वा पापैर्लिप्यते ॥ बहुनाऽत्र किमुक्तेन सारमेकं शृणु प्रिये। जीवन्मुक्तिसुखोपायः कुलशास्त्रेषु गोपितः ॥ यन्मुक्तौ फलं देवि कनकाब्जस्य सौरभम्। कुलज्ञोऽप्यूर्द्ध्ववित्तस्मात् अनस्तत्त्वादनुत्तम ॥ कुलशास्त्राणि सर्व्वाणि मयैवोक्तानि पार्व्वति। प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः ॥ देवताभ्यः पितृभ्यश्च मधुवाता ऋतायते। स्वा

दिव्यामदिव्यां क्षीरं सर्पिर्मधू
दकम् ॥ हिरण्यपात्रंस्थाहीति • वन्न
क्तं पुरुषं पशुम् । सद्योदीपयती
त्याद्या प्रमाणश्रुतय प्रिये ॥
इति श्रीकुलार्णवे द्वितीयोल्लास ॥
श्रीमहानिर्वाणतन्त्रे पिबोसदाशिव
वाक्यथा । सुराद्रवमयीताराजीव
निस्तारकारिणी । जननीभोगमो
क्षाणानाशिनीविपदारुजाम् ॥ दा
हिनीपापसङ्घानांपाविनीजगतां
प्रिये । सर्वसिद्धिप्रदाज्ञानबुद्धिवि
द्याविवर्द्धिनी ॥ मुक्तैर्मुमुक्षुभि ·
सिद्धै . साधकैः क्षितिपालकैः .
। सेव्यतेसर्वदादेवैरात्मेष्टसि
द्धये ॥ सम्यग्विधिविधानेनसुस
माहितचेतसा । पिबन्तिमदिरांम
र्त्यामर्त्याएवतेक्षितौ ॥ प्रत्येक
तत्त्वस्वीकाराद्विधिनाशाम्भवीन
र : । नजानेपञ्चतत्त्वानांसेवनात्
किंफलम्भवेत् ॥ इयन्तेवारुणीदेवि
निपीताविधिवर्ज्जिता । नृणांविना
शयेत्सर्वंबुद्धिमायुर्यशोधनम् । अ
त्यन्तपानान्मद्यस्यचतुर्वर्गप्रसाधिनी
। बुद्धिर्विनश्यतिप्रायो • लोकानाम
तचेतसाम् ॥ विभ्रान्तबुद्धेर्मर्त्या
नांकार्याकार्यमजानत । स्वाऽनि
ष्टपरानिष्ट जायतेऽस्मात्पदेपदे
॥ मतोन्मत्तोवाचक्रेशोमद्यमादद
बलाणु । अत्यासक्तजनानृकायधन

सुरा

दण्डेनशोधयेत् ॥ सुराभेदाद्याज्ञि
भेदान्नृणांनाप्यधिकेनवा । देश
कालविभेदेनबुद्धिभ्रंशोभवेन्नृणाम्
॥ अतएवसुरापाणादतिपानंनल
क्ष्यते । सुखञ्जहाक पाणिपद्दृग्भि
रतिपानंविवारयेत् ॥ मेन्द्रियाणि
वशेयस्यमदविह्वलचेतस । देवता
गुरुमर्यादाभङ्गिनोभयरूपिण ॥
निखिलानर्थयोग्यस्यपापिन शि
वघातिन । दहेज्जिह्वाहरेदर्थां
स्ताडयेत्सपार्थिव :॥ विचलत्
पादशाकृपाणि भ्रान्तमुन्मत्तमुन्नत
म् । तमुपयातयेद्राजाद्रविणञ्चा
हरेत्तत . । अपवाग वादिनक्रम
त्त लज्जाभयविवर्जितम् । धना
दानेनत शास्ताअशोप्रीतिकरोन
प ॥ शताभिषिक्त · कौलश्चेद
तिपानात्कुलेश्वरि । पशुरेवसम
न्तव्य कुलधर्मबहिष्कृत · ।
पिबन्नतिशयमद्य शोधितवाप्यशो
धितम् । त्याज्योभवतिकौलानां
दण्डनीयोपिभूभृत . ॥ ब्राह्मीभा
र्यासुरांमत्ता पाययन्तोद्विजात
य । शुद्ध्युर्भार्याशासाहेमपञ्चा
हहाणभोजनात् ॥ असंस्कृतसुरा
पानात्शुद्ध्येदुपवसत्र्यहम् । भु
क्त्वाप्यशोधितमांसमुपवासद्वयंचरे
त् ॥ असंस्कृतमीनमुद्रेखादयन्नुपव
सेदह । अवैधपशुमक्रुवंनृराज्ञो

दण्डेनशुद्ध्यति ॥ अपिच । वीर
घातीस्वथापायीचौराणांस्त्रीगमस्त
था । स्तेयीमहापातकिनस्तत्सस
र्गीचपञ्चम ॥ कुलवर्त्मकुलद्रव्य
कुलसाधकमेवच । येनिन्दन्तिदुरा
त्मानस्तेगच्छन्त्यधमागतिम् ॥ नृ
त्यन्तिरुद्रडाकिन्योनृत्यन्तिरुद्रभैर
वा । मांसास्थिचर्वणानन्दाः सु
राकौलद्विषानृणाम् ॥ दयालवः
सत्यशीला सदापरहितेप्रियाः
तान्गर्हयन्तोनरकोन्निष्कृतिया
न्तिनकचित्इति ॥ सुरामांसादि
भिर्देवीगङ्गापिसुप्रसीदति । अथ
प्रमाणंसीताया वाक्यसुस्पष्टमु
च्यते । तथाहि । मध्यन्तुसमनुप्रा
प्यभागीरथ्यास्त्वऽनिन्दिता । वैदे
हीप्राञ्जलिर्भूत्वातांनदीमिदमब्र
वीत् । पुत्रोदशरथस्यायमहाराजस्य
धीमत । निदेशपालयत्वेषगङ्गे त्व
दभिरक्षित । चतुर्दशहिवर्षाणि
समग्रान्युष्यकानने । भ्रात्रासहम
यावैवपुन प्रत्यागमिष्यति ॥ त
तस्त्वांदेविसुभगेक्षेमेणपुनरागताय
क्ष्येप्रमुदितागङ्गे सर्वकामप्रदायिनि
॥ त्वंहित्रिपथगेदेविब्रह्मलोकसमी
क्षसे । भार्याचोदधिराजस्यलोके
स्मिन्सम्प्रदृश्यते ॥ तांत्वांदेविनम
स्यामिप्रशसामिचशोभने । प्राप्त
राज्येनरव्याघ्रेशिवेनपुनरागते ॥
गवांशतसहस्राणिवस्त्राण्यन्नञ्चशोभ
ने । ब्राह्मणेभ्य प्रदास्यामितव
प्रियचिकीर्षया ॥ सुराघटसहस्रे
णमांसभूतोदनेनच । यक्ष्येत्वांप्रय
तादेविपुरींपुनरुपागता ॥ यानि
त्वत्तीरवासीनिदैवतानिचसन्तिहि
। तानिसर्वाणियक्ष्यामितीर्थान्याय
तनानिच ॥ पुनरेवमहाबाहुर्मया
भ्रात्राचसङ्गत । अयोध्यांवनवा
सात्प्रविशत्वनघोऽनघे ॥ तथा
सम्भाष्यमाणासासीतागङ्गामनि
न्दिता । दक्षिणादक्षिणन्तीरक्षि
प्रमेवाभ्युपागमत् ॥ इत्यार्षेरामा
यणे । अयोध्याकाण्डेद्विपञ्चाशत्
सर्ग ॥ पुनश्च । कालिन्दीमध्य
मायातासीतात्वेनामवन्दत । स्व
स्तिदेवितरामित्वांपारयेन्मेपतिव्र
तम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघ
टशतेनच । स्वस्तिप्रत्यागतेरामेपु
रीमिक्ष्वाकुपालिताम् ॥ कालिन्दी
मथसीतातुयाचमानाकृताञ्जलि ।
तीरमेवाभिसम्प्राप्तादक्षिणंवरव
र्णिनी ॥ इत्यार्षेरामायणेअयो
ध्याकाण्डेपञ्चपञ्चाशत्सर्ग ॥

सुराकरः । पुं० नारिकेलद्रुमे ॥ म
द्योत्पत्तिस्थाने ॥ यथा । आकरा
श्रय । सर्ववर्जयित्वासुराकर
म् ॥

सुराग्यम् । न० अमृतेसुराणामग्र्

श्रेष्ठम् ॥
सुराङ्गना । स्त्री॰ देवपत्न्याम् ॥ अप्सरसु ॥
सुराचार्य्यः । पुं॰ बृहस्पतौ ॥ सुराणामाचार्यः ॥
सुराजक । पुं॰ भृङ्गराजे ॥
सुराजा । पुं॰ शोभनेनृपे ॥
सुराजीवी । पुं॰ शौण्डिके ॥
सुरानन्द । पुं॰ हरौ ॥ सुरान् आनन्दयत्यमृतप्रदानेनेतितथा । कौ से सुरया॰सुरायांवानन्दोऽस्य ॥
सुराप । त्रि॰ मद्यपे । सुरापानकर्त्तरि ॥ सुरांपिबति । पा॰ । गापोष्टगिप्यच॰पिबते' सुराशी॰ध्वोरितिवार्त्तिकात्टक । टित्वात्स्त्रियाङीप् । सुरापी ॥ अस्यशब्दस्यार्थ तेयच्च सुराप ध्याबद्नकः । सुवर्णहारीकुनखोदुश्चर्मा गुरुतल्पग ॥
सुरापगा । स्त्री॰ गङ्गायाम् ॥
सुरापाणम् । न॰ मद्यपाने ॥ सुराया पानम् अदन्तमेव ॥ वाभावकरणयोरितिपक्षे णत्वम् ॥
सुरापाणा । पुं॰ भूम्नि॰प्राच्येषु । पूर्वदेशस्थेषु ॥ पीयतइतिपानम् । कर्म्मणिल्युट् । सुरापानं येषाम् । पानन्देशे॰इ॰णत्वम् ॥
सुरापानम् । न॰ सुरापाने । मद्यपाने ॥ सुरायाः पानम् । वाभावकरणयोरितिपक्षे णत्वाभावः । ब्रह्मोज्झितावेदनिन्दाकौटसाक्ष्यं सुहृद्वधः । गर्हितानाद्ययोर्जग्धिः सुरापानसमानिषट् ॥
सुराभाग । पुं॰ सुरायां । सुरायाः अभागे ॥
सुरामण्ड । पुं॰ सुरायाअग्रभागे । कारोत्तरे ॥ सुरायामण्डः ॥
सुरारि । पुं॰ दैत्ये ॥ सुराणाम् अरिः ॥
सुरारिहा । ) पुं॰ विष्णौ । श्रीहरौ ॥ सुरारीन्हन्ति ॥ सुरारीघातका ॥
सुरारिहन्ता । )
सुरार्हम् । न॰ हरिचन्दने ॥
सुरालय । पुं॰ सुमेरुपर्वते ॥ स्वर्गे । सुराणामालय ॥ सुरायानिलये ॥
सुराश्रय । पुं॰ इन्द्रे ॥
सुराष्ट्रः । पुं॰ देशविशेषे । सूरत॰ इ॰ भा॰ प्र॰ ॥ शोभनोपवर्त्तने ॥
सुराष्ट्रज । पुं॰ कृष्णामुद्गे ॥ विषविशेषे ॥ न॰ तुवरिकायाम् । सौराष्ट्रमृदि ॥ सुराष्ट्रेजातम् जनी॰ । सप्तम्याञ्जनेर्ड ॥ त्रि॰ तद्देशजाते ॥
सुराष्ट्रजा । स्त्री॰ तुवरिकायाम् । सौराष्ट्राम् ॥ टाप् ॥
सुराह्व । पुं॰ देवदारुणि ॥ मरुवके ॥ हरिद्रुवृक्षे ॥

सुरी । स्त्री० देवाङ्गनायाम पुर सुरीणामभवोविमानवी ॥

सुरुङ्ग । पु० शोभाङ्गे ॥

सुरुङ्गा । स्त्री० सुरुङ्गायाम् । सन्धिलायाम् । सन्धौ । सौंध० इ० प्र० खातविशेषे ॥

सुरुङ्गाहि । पु० सन्धिचौरे । कुजम्भिले ॥

सुरुच् । त्रि० अतिकमनीये ॥

सुरूप । त्रि० शोभनरूपयुक्ते । सुन्दरे । रुचिरे । मनोज्ञे । मनोरमे । शोभनं रूपं यस्य ॥ विदुषि । विपश्चिति । न० तूले ॥

सुरूपा । स्त्री० भार्ग्याम् । शालपर्ण्याम ॥ सुन्दर्याम । रुचिरायाम् । मनोरमायाम । शोभनरूपयस्या ॥

सुरूहक । पु० गर्दभाश्वे । इ० हि० चन्द्र ॥

सुरेज्य । पु० बृहस्पतौ ॥

सुरेज्या । स्त्री० तुलस्याम् ॥

सुरेन्द्र । पु० इन्द्रे ॥

सुरेन्द्रजित् । पु० गरुडे ॥ सुरेन्द्र जयति । जि० । क्विप् । तुक् ॥ इन्द्रजिति ॥

सुरेभ । पु० देवहस्तिनि ॥ शोभनशब्दे । न० रङ्गे । स्वङ्गे ॥

सुरेवट । पु० रामपूगे मुनिपूगे ॥

सुरेश । पु० भगवति । विष्णौ ॥ शिवे ॥ सुराणामीशः स्वामी ।

सुरेशलोक । पु० ब्रह्मलोके ॥ यथा । नयत्र वैकुण्ठकथासुधापगानसाधवोभागवतास्तदाश्रयाः । नयत्र यज्ञेशमखामहोत्सवाः सुरेशलोकोपिनवैससेव्यतामितिदेवीभागवत ॥

सुरेश्वर । पु० इन्द्रे ॥ शिवे । शङ्कराचार्यशिष्यविशेषे । वार्त्तिककारे ॥

सुरेश्वरी । स्त्री० दुर्गायाम् । मन्दाकिन्याम् ॥ सुराणामीश्वरी ॥

सुरेष्ट । पु० बकवृक्षे । शिवमल्लाम् ॥ शाले ॥ सुरपुन्नागे ॥

सुरेष्टा । स्त्री० ब्राह्म्याम् ॥

सुरोत्तम । पु० सूर्य्ये ॥ त्रि० देवश्रेष्ठे ॥

सुरोत्तर । पुं० चन्दने ।

सुरोद । पु० सुरासिन्धौ । सुरासमुद्रे ॥ सुरा० उदकं यस्य । उत्तरपदस्य उदकस्योदादेश ॥

सुलक्षण । त्रि० शोभनलक्षणविशिष्टे ॥

सुलक्षणा । स्त्री० उमायाः सखीविशेषे ॥

सुलभ । पुं० विष्णौ ॥ यथा । पत्रं पुष्पं फलं तोयं क्रीतलभ्यं सदैवसत् । भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै कथं न क्रियते प्रयत्न इति महाभारतम् ॥ त्रि० अनायासप्राप्ये । सुखेनलभ्यते० इति । ईष

दु सुश्रितिलभे : खल् ॥

सुलभा । स्त्री॰ तुलस्याम् ॥ धूम्रपत्रायाम् ॥ माषपर्ण्याम् ॥

सुललाट । त्रि॰ शोभनभालविशिष्टे । ललाटेयस्यहृश्यन्तेचतुरिस्त्रदृव्येकरेखिकाश्चयुक्तचतुर्लेखासौभाग्यविशिष्टे ॥

सुललितम् । न॰ मात्रावृत्तविशेषे ॥ द्विजवरयुगमिहरचयचिलघुकागणमथकलय । सुललितकलितरसपदिसरसिजमुखिभवतियदि । अगतिविदितसुललितमितिवरकविपतिरितिवदति ॥ यथा । प्रविचल कुवलयनयनजलनिधिकृतवरशयन । दितितनयनिवहदमनशमनविविधभयशमन । मयिवरमुपनयसुचिरमभिनवजलधररुचिर ॥ त्रि॰ अतिसुभगे ॥ सुकोमले ॥

सुलेखा । स्त्री॰ दुर्गायाम् ॥

सुलोचन । पुं॰ श्रीकृष्णे ॥ शोभन लोचन नयन • स्थान वास्य ॥ मृगे । हरिणे ॥ त्रि॰ शोभननेत्रविशिष्टे ॥ शोभनेलोचनेयस्य ॥

सुलोचना । स्त्री॰ सुनेत्रायाम् ॥ माधवराजपत्न्याम् ॥

सुलोमशा । स्त्री॰ काकजङ्घायाम् ॥ त्रि॰ शोभनलोमयुते ॥

सुलोमा । स्त्री॰ मांसच्छदायाम् ॥ ताम्रवल्याम् ॥

सुलोहकम् । न॰ पित्तले ॥

सुलोहित । पुं॰ सुन्दररक्तवर्णे ॥ त्रि॰ तद्वति ॥

सुलोहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥

सुवक्त्र । पुं॰ वनवर्वर्याम् । न॰ सुन्दराननि । त्रि॰ तद्वति ॥

सुवचनम् । न॰ सुप्रलापे । शोभनोक्तौ ॥ शोभन वचनम ॥

सुवचा । त्रि॰ वाग्मिनि ॥ सुष्ठुवक्ति । वच॰ । सर्वधातुभ्योऽसुन् ॥ यद्वा । मिथुनेऽसि । उपसर्गविशिष्टोधातुर्मिथुनम् । तत्रासुनोपवादोऽसि . । स्वरेभेद ॥

सुवदन । पुं॰ श्रीगणेशे । शोभनवदनमस्य ॥ त्रि॰ सुन्दराननवति ॥ न॰ शोभनानने ॥

सुवदना । स्त्री॰ सुन्दराननविशिष्टायानार्याम् ॥ कृतिच्छन्द २० प्रभेदे ॥ ज्ञेयासप्ताश्वषड्भिर्मरभनययुताभ्लौग सुवदना ॥ यथा । प्रत्याहृत्येन्द्रियाणित्वदितरविषयाण्यासाद्यनयना • त्वाध्यायन्तीनिकुञ्जे परतरपुरुष हर्षोत्थपुलका । आनन्दाश्रुप्लुताक्षीवसतिसुवदनायोगैकरसिका • कामारिन्यक्कृतकामानन्दनरकरिपोराधाममसखी ॥ सुष्ठुशोभन दननयस्याः . सा ॥

सुवन । पु॰ दिवानाथे । सूर्ये ॥ व ह्नौ ॥ सूति॰ सूयतेवा । षूङ्प्राणि गर्भविमोचने । भूसूधूभ्रसजिभ्य श्छन्दसीतिक्युन् ॥

सुवया । स्त्री॰ प्रौढायाम् ॥

सुवर्च्चक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चला । स्त्री॰ सूर्यपत्नीविशेषे । मत्स्याक्षायाम् । अतस्याम् ॥ ब्राह्मी याम् ॥ आदित्यभक्तायाम् । हुलहुल॰ इ॰ प्र॰ शाके ॥ अस्यागुणा यथा । सुवर्चलाहिमारूक्षास्वादु पाकरसागुरु । अपित्तलाकटुः क्षाराविष्टम्भकफवातजित् ॥ अ न्यातिक्ताकषायोष्णासराक्षालघु कटुः । निहन्तिकफपित्तास्रश्वा सकासारुचिज्वरान् ॥ विस्फोटकु ष्ठमेहास्रयोनिरुक्कृमिपाण्डुता ॥

सुवर्च्चस् । त्रि॰ दीप्तमति ॥ अति तेजस्विनि । शोभनवर्च्चोयस्य ॥

सुवर्च्चिक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चिका । स्त्री॰ जतुकायाम् । त रुवल्ल्याम् । जतुकायाम् । नि शाख्यायाम ॥ सर्ज्जिकाभेदे । सोरा॰ इ॰ भा॰ प्र॰ ॥ सुवर्च्चि कासर्ज्जिकावज्ज्ञेयागुणतोजनै ॥

सुवर्च्ची । स्त्री॰ सर्ज्जिकाक्षारे ॥

सुवर्ण । पु॰ स्वर्णकर्षे । विल्वे । हेमाह्वे । हेम॰ ऐडगजसुमाविषु ॥ वोडशमिर्माषैः परिमितिप्रदि माणविशेषे ॥ सुवर्णालौ ॥ सुव र्णनामनिष्के ॥ धत्तूरे ॥ लङ्का द्वीपवत्॰ समुद्रान्तर्वर्त्तिनिद्वी पविशेषे ॥ कर्णगुग्गुलौ ॥ न॰ सोना॰ इ॰ भा॰ प्र॰ धातुश्रे ष्ठे । तत्पर्य्यायायथा । स्वर्णसुव र्णकनक हिरण्य हेमहाटकम् । तपनीयशातकुम्भ गाङ्गेयभर्मकर्बु रम् ॥ चामीकरजातरूपमहारज तकाञ्चने । रुक्म कार्त्तस्वरजाम्बू नदमष्टापदोस्त्रियामिति ॥ तच्चथा यंस्वसर्वदेवतात्मकत्वञ्चोक्त रामाय णे॰ महाभारतेचपरशुरामप्रतिव शिष्ठवाक्यम् । सर्वरत्नानिनिर्म थ्यतेजोराशिसमुत्थितम् । सुवर्णं मेभ्योविप्रेन्द्ररत्नंपरमनुत्तमम् ॥ एतस्मात्कारणाद्देवगन्धर्वोरगराक्ष साः । मनुष्याश्चपिशाचाश्चप्रयता धारयन्तितत् ॥ तथा । तस्मात्स र्वपवित्रेभ्य पवित्रंपरमस्मृतम् ॥ तथा । अग्निर्वैसकलादेवा . सु वर्णञ्चतदात्मकम । तस्मात्सुव र्णंददताद्दत्ता स्युः सर्वदेवता । तस्मात्प्रदिनधार्यम् ॥ अस्योत्प त्तिर्वह्नि॰ गुणाश्चस्वर्णेद्रष्टव्या ॥ कृष्णागुरुणि ॥ हरिचन्दने ॥ स्व र्णगैरिके ॥ वित्ते । धने ॥ नाग केशरे ॥ पु॰ न॰ हेमाह्वे । धर्मो तिरक्षिकापरिमितेस्वर्णे ॥ त्रि॰

उत्कृष्टवर्णे ॥ शोभनोवर्णः स्तुतिर्वासुष्ठुवर्ण्यतेवा । वर्णवर्णने । घञ् । एरच् ॥

सुवर्णक । पु० आरग्वधवृक्षे ॥ पुष्पे शोभनोवर्णोऽस्य ॥ न० पित्तले ॥

सुवर्णकदली । स्त्री० कनकमोचायाम् । चम्पकरम्भायाम् । चम्पाकेला० हू० भा० प्र० ॥

सुवर्णकार । पु० स्वर्णकारे ॥

सुवर्णकेतकी । स्त्री० हेमकेतक्याम् ॥

सुवर्णगैरिकम् न० गैरिकप्रभेदे । स्वर्णधातौ । सुरक्तके । सन्ध्याभ्रे । धानीमाटी० पीलागेरु० हू० भा० प्र० ॥ सुवर्णगैरिकन्त्वन्यत्ततोरक्ततरं हितम् । ततोगैरिकात् ॥ अस्यगुणाः । गैरिकं मधुरं शीतं कषायं व्रणरोपणम् । विस्फोटार्शोऽग्निदाहघ्नवरं स्वर्णादिकं शुभम् ॥

सुवर्णनकुली । स्त्री० महाज्योतिष्मत्याम् ॥

सुवर्णपुष्प । पु० राजतरुण्याम् ॥

सुवर्णप्रसरम् । न० एलवालुके ॥

सुवर्णमाक्षिकम् । न० स्वर्णमाक्षिके ॥

सुवर्णयूथी । स्त्री० सुगन्धायाम् । हेमपुष्पिकायाम् । सोनजुही०हू० भा० प्र० ॥

सुवर्णवणिक् । पुं० अम्बष्ठाद्वैश्यकन्यायांजातेवर्णसङ्करजातिविशेषे । कश्चद्वणिग्विशेषस्तसंसर्गात्स्वर्णकारिण । स्वर्णचौर्यादिदोषेणपतितोब्रह्मशापत ॥

सुवर्णवर्ण । पु० विष्णौ । त्रि० रुक्मवर्णे ॥ सुवर्णस्यैववर्णोऽस्य ॥

सुवर्णवर्णा । स्त्री० काञ्चन्याम् । हरिद्रायाम् ॥

सुवर्णबिन्दु । पु० विष्णौ हरौ ॥ बिन्दवोऽवयवा सुवर्णसदृशाअस्य ॥ शोभनवर्णमक्षरम् । बिन्दुश्च यस्मिन्मन्त्रेतदात्मकोवा ॥

सुवर्णा । स्त्री० स्वर्णक्षीर्याम् ॥ हरिद्रायाम् ॥ वाह्यालके ॥

सुवर्णाह्व । पु० नागकेशरे । धत्तूरे ॥

सुवर्णी । स्त्री० आखुपर्ण्याम् ॥

सुवस्तुसम । न० कालिङ्गे ॥

सुवल्लि । स्त्री० सोमराज्याम् ॥ शोभनावल्लिरस्याः ॥

सुवल्ली । स्त्री० सोमराज्याम ॥ कट्व्याम् ॥

सुवसन्त । पु० मधूत्सवे चैत्राद्याम ॥

सुवसन्तक । पु० वासन्त्याम् । मदनोत्सवे ॥

सुवह । त्रि० सुखवाह्ये ॥ सुखेनवहति । वह० । पचाद्यच् ॥ पु०

वायौ प्रभेदे ॥
सुवहा । स्त्री० गोधापद्याम् ॥ सुष्ठु वहत्यामोदम् । वह० । अच् । टाप् ॥ सल्लकीद्रुमे ॥ एलापर्ण्याम् । तुलस्याम् ॥ वीणायाम् ॥ रास्नायाम् ॥ शेफालिकायाम् ॥ त्रिवृतायाम् ॥ नीलसिन्धुवारके ॥ रुद्रजटायाम् । हंसपद्याम् ॥ मुसल्याम् ॥
सुवास । पुं० शोभनगन्धे ॥ उत्तमनिवासे ॥
सुवासा । त्रि० । निर्मलवाससि ॥
सुवासिनी । स्त्री० ऊढाल्पवयःस्त्रियाम् । चिरण्ट्याम् ॥ सुष्ठुतीव वसति पितृगेहे० तच्छीला । सुप्यजाताविति णिनि । अथोत्तम्भानार्थे । विवाहिता अदेवेशिशाला एवकुमारिका । सुवासिन्योमहाप्रौढा संशयोनास्ति सुव्रते । इति ॥
सुविक्रम । पु० सुष्ठुपादविन्यासे ॥ विक्रमस्य सौष्ठवनामगजसिंहादिगतिसदृशत्वम् । त्रि० तद्वति ॥
सुविज्ञ । त्रि० अतिनिपुणे ॥
सुविज्ञेय । त्रि० सम्यग्ज्ञातुंशक्ये ॥
सुविदत्रम् । न० कुटुम्बे ॥ सुष्ठुवेत्ति । विदत्रम् । सुविदे कत्र ॥
सुविदित । त्रि० प्रख्याते ॥

सुविधि । पु० उत्तमविधाने ॥ अर्हद्विशेषे ॥
सुविनीत । त्रि० अतिविनयविशिष्टे
सुविनीता । स्त्री० सुकरायाम् ॥
सुवीजम् । न० खसखसे । त्रि० साधुवीजे ॥
सुवीर । पु० देशविशेषे । त्रि० सुष्ठुवीरे ॥ शोभनाविविधाद्धुरागतयोऽस्य ॥ शोभनवीर्यमिति ॥
सुवीरकम् । न० सौवीराञ्जने । पु० एकवीरवृक्षे ॥
सुवीरजम् । न० सौवीराञ्जने । सुवीरेजातम् । जनी० । ड ॥
सुवीराम्लम् । न० काञ्जिके । सुवीरेषु० अभिषुतमम्लम् । शाकपार्थिवादि ॥
सुवीर्यम् । न० बदरे ॥ उत्तमवीर्ये । त्रि० तद्वति ॥
सुवीर्या स्त्री० नाडीहिङ्गुनि ॥ वनकार्पास्याम् ॥ महाशतावर्याम् ॥
सुवृत्त । पु० शूरणे ॥ त्रि० सदाचारनिष्ठे । सुष्ठुवर्तुले । परिवर्तुले ॥
सुवृत्ता । स्त्री० काकलीद्राक्षायाम् ॥ शतपत्र्याम् ॥
सुवृष्टि । स्त्री० सम्यग्वृष्टिः शोभनवर्षणे ॥
सुवेगा । स्त्री० महाज्योतिष्मत्याम् ॥
सुवेल । पुं० त्रिकूटाचले ॥ त्रि०

प्रणती ॥ शान्ते ॥
सुवेश । पु॰ श्वेतेक्षौ ॥ वि॰ उचितशृङ्गारसम्पन्ने ॥
सुव्रत : । पु॰ ऋषौ । शोभनव्रतमस्य । यथा । सकृदेवप्रपन्नायतवास्मीतिचयाचते । अभयसर्वभूतेभ्यो ददाम्येतद्व्रतममेति ॥ यद्वा । शोभनव्रतयतिभुङ्क्ते सुदामादत्तपृथुकादीनीति॰ सुष्टुव्रतयतिभोजनान्निवर्त्तनरमारायणरूपेणतपश्चरन्निति वा । व्रताज्जीनिवृत्तौ इतिण्यन्तात्पचाद्यच् ॥ जिनमतल्याम् ॥ भाविकल्पीयाईद्विशेषे ॥ वर्त्तमानकल्पीयाईद्विशेषे ॥ वि॰ शोभनव्रतयुक्ते । सद्व्रते ॥
सुव्रता । स्त्री॰ सुखसन्दोह्यायाङ्गवि ॥ शोभनव्रतमस्याः ॥ सद्व्रतायाम् ॥ मस्याम् ॥ वर्त्तमानकल्पीयाईन्मातरि ॥
सुशर्मा । पु॰ भारतादिप्रसिद्धे नृपविशेषे ॥ शोभनशर्मास्ति । मू॰ । अन्येभ्योपिदृश्यतइतिमनिन् ॥ मिथुनेमनिरितिमनिवी ॥
सुशल्य । पु॰ खदिरे ॥
सुशाक : । पु॰ तण्डुलीये ॥ पिण्डाराम् ॥ चञ्चौ । पत्रशाकविशेषे । विजनायाम । चञ्चुपर्णे ॥ न॰ आर्द्रके ॥
सुशाला । स्त्री॰ कालिकापुराणप्रसिद्धायाम् अग्निध्वजराजपत्न्याम् ॥
सुशिख । पु॰ वह्नौ ॥ वि॰ उत्तमशिखावति ॥
सुशिखा । स्त्री॰ मयूरशिखायाम ॥
सुशीत : । पु॰ प्लक्षवृक्षे ॥ न॰ पीतचन्दने ॥
सुशीतलम् । न॰ गन्धतृणे ॥ वपुषि । खौरा॰ काकडो॰ हू॰ प्र॰ ॥ कत्तृणे ॥ वि॰ । अतिशीतगुणविशिष्टे ॥
सुशीता । स्त्री॰ शतपत्र्याम् ॥
सुशील : पु॰ विष्णोर्दूतविशेषे ॥ वि॰ सद्वृत्ते । शोभनशीलयुक्ते ॥ शोभनशील यस्यस ॥
सुशीला । स्त्री॰ श्रीकृष्णस्याष्टमहिष्यन्तर्गतमहिषीविशेषे ॥ इतिपद्मपुराणम् ॥
सुश्राव्यम् । न॰ नकारामयुधिष्ठिरादीनांयशसि ॥ शोभनवाक्ये ॥
सुश्री : । वि॰ सुन्दरे ॥ शोभनाश्रीयस्य ॥
सुश्रीक : । वि॰ शोभनश्रीविशिष्टे ॥
सुश्रीका । स्त्री॰ शल्लक्याम् ॥
सुश्रुत : । पु॰ विश्वामित्रमुनिपुत्रे॰ चिकित्साशास्त्रकर्त्तरि ॥ चिकित्साग्रन्थविशेषे । सुश्रुतेनकृतं तस्य सुष्ठु त बहुभिर्यत् । तस्मात्तत्सुश्रुत नामविख्यातञ्चितिम कृती ॥
सुश्रुवान् । वि॰ सुश्रुतवति ॥ सुश्रो

दिनासन नित्वाद्यविस्तृपोष्यादि नासम्प्रसारणम् ॥

सुषुम्णा । स्त्री॰ नाडीविशेषे ॥ सा च । इडापिङ्गलयोर्मध्ये वर्त्तमाना॰ पृष्ठवंशान्तर्गतानाडी॰ सुषुम्णेत्युच्यते ॥ शोभन सुम्न सुखं यस्याम् ॥ पृ॰ ॥

सुषेण । पु॰ करमर्द्दे ॥ विष्णौ ॥ सुग्रीववैद्ये ॥ ताराया वालिभार्य्याया पितरि ॥ वेतसे ॥ शोभना सेना यस्य । एतिस ञ्ज्ञायामगादि तिषत्वम् । रषाभ्यामिति णत्वम् ॥

सुषेणिका । स्त्री॰ कृष्णत्रिवृतायाम् ॥ सुष्ठु सेनयति । सेनाशब्दात्॰ सत्यापपाशेति णिच । पचाद्यच् । एतिसञ्ज्ञायामगादितिषत्वम् । णत्वम् । स्वार्थे कन् ॥

सुषेणी । स्त्री॰ त्रिवृति ॥

सुषोमा । स्त्री॰ नदीभेदे ॥

सुष्ठु । अ॰ प्रशसने ॥ अत्यर्थे ॥ सुतिष्ठति॰ सुस्थाने वा॥ छा॰ । अपदुस्सुषुस्थइतिकु । सुषामादित्वात्षत्वम् ॥

सुसंयत । त्रि॰ कृतसंयमे । यथाविधिसंयमविशिष्टे ॥

सुसंवृत । त्रि॰ सिद्धे ॥ अतिनिगूढे । आकारनिहारविहारयोगा सुसंवृताधर्म्मविदातु कार्य्या ॥

सुसंस्कृत । त्रि॰ घृतादिनानाद्रव्येणप्रयत्नत सुपक्वे व्यञ्जनादौ । प्रयत्ने ॥ सुष्ठुसंस्क्रियतेस्म । कर्म्मणिक्त । सम्परिभ्यामितिसुट् ॥

सुसस्थान । त्रि॰ शोभनाकृतौ ॥

सुसन्ध्या । स्त्री॰ अनवमार्य्यायाम् ॥

सुसम्पत्॰द् । स्त्री॰ परभागे ॥

सुसम्पृष्ट । त्रि॰ अलङ्कृते ॥

सुसह । त्रि॰ दु सहभिन्ने ॥

सुसाध्य । त्रि॰ सुकरे ॥

सुसार । पु॰ रक्तखदिरे ॥ मणिविशेषे ॥ त्रि॰ अतिशयसारवति ॥ शोभन सारोऽस्य ॥

सुसारवत् । न॰ स्फाटिके ॥

सुसिकता । स्त्री॰ शर्करायाम् ॥ शोभनवालुकायाम् ॥

सुसीमा । स्त्री॰ साधुसीम्नि ॥ दशार्हमातरि ॥

सुसेव । त्रि॰ सुष्ठुसेवितु योग्ये ॥

सुस्थ । त्रि॰ नीरोगे । स्वस्थे ॥

सुस्थता । स्त्री॰ आरोग्ये ॥

सुस्थिर । त्रि॰ आस्थत्यरहिते । स्थिरतरे ।

सुस्रा । स्त्री॰ खञ्जकारी । खिसारी॰ इ॰ प्र॰ शमीधान्ये ॥ सुस्रादुर्वातारुच्याकषायाविषदागुरुरिति राजनिघण्ट ॥

सुस्नात । पु॰ यज्ञान्तस्नानकर्त्तरि । त्रि॰ सुन्दरकर्मकृतस्नाने ॥

सुस्नातक : । पु॰ शोभनस्नातके ।

सुस्मित । त्रि० सुन्दरेषद्धास्ययुक्ते ॥

सुस्वादु । त्रि० सुमधुरे ॥

सुहस्ति । पुं० बौद्धभेदे ॥

सुहित । त्रि० त्रिप्ते ॥ हृप्ते ।

सुहिता । स्त्री० अग्नेर्जिह्वाविशेषे ॥

सुहृत्तम । त्रि० उपकारानपेक्ष्योपकारके ॥

सुहृत्प्राप्ति । स्त्री० अप्यकाख्यायां सिद्धौ । सुहृदागुरुशिष्यसब्रह्मचारिणां सदेकान्तप्राप्तिः । न्याये नसदय परीक्षितमप्यर्थ तावन्नश्रद्दधते । यावद्गुरुशिष्यसब्रह्मचारिभिसहनसवाद्यते ।

सुहृत् । पु० मित्रे । सदैवानुगतेषकार स्वपरभूरिकथानाप्रायशो हिसुहृदो सदयास ॥ शस्तचित्ते ॥ प्रत्युपकारनिरपेक्षतयोपकारिणि । प्रत्युपकारमनपेक्ष्य पूर्वं स्नेह सम्बन्धसुविशेषेणोपकर्त्तरि । कृतोपकारे । सम्बन्धिनि । शोभन हृदयमस्य । सुहृद्दुर्हृदाविति साधु ॥ सहाये ॥ यथा ॥ सुविचार । चन्द्रचन्दनमिन्दुधामधवलाराम्योविरिफवधोभङ्कारिन्मुरदाविलासविपिनोपान्तायसम्मोदया । मन्द्रध्वानघनोदृशाद्रिरसाम्नदा । वाद्यानिला शृङ्गारप्रसुखायया । मसुहृदो नार्योजितार्याजिता : ॥ कामस्य सुहृद सहाया नार्योजितार्याजिता । सर्वेषात दुपरज्जकत्वात् ॥ सर्वाभिर्यामिथि ॥

सुहृदय । त्रि० सुचेतसि । सहृदये । हृद्याली ॥ शोभन हृदयमस्य । भित्रत्वाविवक्षयाप्ययहृदयस्य हृद्भाव ॥

सुहृद्य । पुं० शुचिताद्यौ० मित्रस्य गुणे । यथा । शुचिताल्यागिताशौर्यं समानसुखदु खिता । अनुरागस्तद्दाक्षिण्य सत्यता च सुहृद्गुणा ॥

सुहेल । पु० वानरविशेषे ॥ चन्द्रवशोयकुहद्विराजपुत्रे ॥

सुह्म । पु० जातिविशेषे ॥ पु० भूम्नि० नीवृद्विशेषे । सुह्मानां निवासोजनपद० सुह्मा । अप्पोलुप् । लुपियुक्तवद्भाव ॥

सू । पु० प्रसवे सवनम षूङ प्राणिप्रसवे । क्विप् ॥

सूक । पु० वाये ॥ वाते ॥ उत्पन्ने ॥

सूकर । पु० वराहे । शूकरे । कुम्भकारे । मृगविशेषे ॥ सवनम् । पूङ प्राणिगर्भविमोचने । सम्पदादि । सुर्वप्रसवकरोति । स्त्रो वृत्तिर्णिट् ॥

सूकरी । स्त्री० क्षुपविशेषे ॥ वराहक्रान्तायाम् ॥ शूकरस्त्रियाम् ॥

सूक्षम् । न० प्रयत्ने ॥ त्रि० गको

रार्थे ॥ शोभनोक्तिविशिष्टे ॥ वेदोक्तस्तोत्रमन्त्रादौ ॥
सूक्तवाक । पुं॰ इदंद्यावापृथिवीभद्रमभूदित्यादिकेमन्त्रे ॥ सन्नमात्रे । सुभाषिते ॥ सूक्तवक्ति । वच॰ । घञ् ॥
सूक्ता । स्त्री॰ चित्राख्याम् । शारिकायाम् ॥
सूक्ति । स्त्री॰ शोभनोक्तौ ॥
सूक्ष्म । पुं॰ अणौ ॥ कतके सूक्ष्मात्मनि ॥ जातिक्रियादिप्रवृत्तिनिमित्तशून्यत्वात्मनोवागाद्योन्द्रियाणामगोचरेपरमात्मनि ॥ चात्मा सूक्ष्मोऽणुपरिमाणइतिकश्चित् । तन्न । युगपदशेषशरीरव्यापिवेदनानुसन्धानासिद्धेः ॥ न॰ कैतवे । शाठ्ये अध्यात्मे । सूक्ष्मशरीरे ॥ अलङ्कारविशेषे । यथा । कुतोपिलक्षित सूक्ष्मोप्यर्थोन्यस्मै प्रकाश्यते । धर्मेण केनचिद्यत्रतत्सूक्ष्मपरिचक्षते ॥ कुतोप्याकारादिङ्गिताद्वा सूक्ष्म॰ स्तोक्यमतिसंवेद्य॰ । उदाहरणम् । वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वाभिन्नं कुङ्कुमं कापि कण्ठे । पुंस्त्वं तन्व्या व्यञ्जयन्तीवयस्या स्मित्वापाणौखड्गलेखांलिलेख ॥ अत्राङ्गनिमालोक्यकयापिविदितं तत्पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतं पुंसा

मेवक्तपाणपालितायोग्यत्वात् । यथावा । सङ्केतकालमनसं विटं ज्ञात्वाविदग्धया । ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ अत्र जिज्ञासितसङ्केतकाल॰ क याचिदिङ्गितमात्रेणविदितोनिशासमयशंसिनाकमलनिमीलनेनलीलयाप्रतिपादित ॥ त्रि॰ अल्पे । स्तोके ॥ इन्द्रियागोचरे ॥ सूच्यते । सूचपैशुन्ये । सूचि स्मक् ॥
सूक्ष्मकृष्णफला । स्त्री॰ मध्यमजम्ब्वाम् ॥
सूक्ष्मतण्डुल । पुं॰ खसखसे ॥
सूक्ष्मतण्डुला । स्त्री॰ पिप्पल्याम् ॥
सूक्ष्मदर्शी । त्रि॰ प्रशिडते ॥ कुशाग्रीयमतौ । प्रत्युत्पन्नमतौ ॥ विशेषज्ञे । इन्द्रियेभ्य परा ह्यर्था इत्यादिप्रकारेणसर्वविशेषसूक्ष्मतापारम्पर्यदर्शनेन॰ परं सूक्ष्मं द्रष्टुं शीलमस्यतस्मिन् ॥
सूक्ष्मदल । पुं॰ देवसर्षपे ॥
सूक्ष्मदला । स्त्री॰ दुरालभायाम् ॥
सूक्ष्मदारु । न॰ किलिञ्जे ॥ तनुकाष्ठे ॥
सूक्ष्मपत्र । पुं॰ धान्यके ॥ वनजीरके । देवसर्षपे ॥ लघुवदरे ॥ सुरपर्णे ॥ वनबर्बर्याम् ॥ क्षीरितेष्टौ । ताम्रचूडे । कुकुरद्रौ । कुकुरौ भा॰ कु॰ भा॰ प्र॰ ॥ बालतृणे

। स्वर्णपुष्पे । न० पितुन्नके । सूक्ष्मपर्णे ।

सूक्ष्मपत्रक । पुं० सूक्ष्मपत्रे ॥ स्वार्थे कः ।

सूक्ष्मपत्रा । स्त्री० क्षुद्रजम्बूम् ॥ जीवन्त्याम् । दीर्घपत्रायाम् । डोडाम् ॥

सूक्ष्मपत्रिका । स्त्री० शतपुष्पायाम् ॥ शतावर्याम् । क्षुद्रोपोदिकायाम् दुरालभायाम् । आकाशमांस्याम् ॥ लघुब्राह्म्याम् ॥

सूक्ष्मपत्री० स्त्री० आकाशमांस्याम् ॥

सूक्ष्मपर्णी । स्त्री० जीर्णदारुणि । जीर्णफलञ्याम् ॥ डोडाम् ॥

सूक्ष्मपर्णी । स्त्री० रामदूत्याम् । नागदन्तिकायां ॥

सूक्ष्मपिप्पली । स्त्री० वनपिप्पल्याम ॥

सूक्ष्मपुष्पी । स्त्री० यवतिक्तायाम् ॥ गर्भे ॥

सूक्ष्मप्रपञ्च । पुं० हिरण्यगर्भे ॥

सूक्ष्मफल । पु० भूकर्बुदारे ॥

सूक्ष्मफला । स्त्री० तामलक्याम् ॥

सूक्ष्मबदरी । स्त्री० भूबदर्यां ॥

सूक्ष्मभुवनाष्टकम् । न० अमरपुरविशेषु ॥ यथा । सूक्ष्मासरपुराण्यष्टौ तुरीयेशावमादितः । राक्षसंज्ञा ज्ञात्यवैताहिन्द्रमवर्णिमत् ॥ सौम्यं प्राजेश्वरं ब्राह्म हौमं परमशाश्वि वेति । इति कुलिकार्णवे सूक्ष्मभुवनाष्टकम् । तेषु पैशाचमादितकृत्वादौ पैशाचम् । ततो राक्षसादि । ब्राह्म० हौमपरमशाश्वेति । महर्षिमतो म इन्द्रादप्यतिशयाय । अधिककान्ति ॥ शु० स्मृ० स० ता ॥

सूक्ष्मभूतम् । न० अपञ्चीकृताकाशादिभूते ॥

सूक्ष्ममक्षिक । पु० मशके ॥

सूक्ष्ममूला । स्त्री० जयायाम् । वैजयन्तिकायाम् । जाहि० शु० प्र० पुष्पवत्ते ॥ सूक्ष्ममूलमध्या ॥

सूक्ष्मबदरी । स्त्री० भूबदर्याम् ॥

सूक्ष्मवल्ली । स्त्री० जतुकायाम् ॥ ताम्रवल्ल्याम् ॥

सूक्ष्मवसनम् । न० सूक्ष्मवसने ॥

सूक्ष्मवीज । पु० खसखसे ॥

सूक्ष्मव्रण । पु० किणे ॥

सूक्ष्मशरीरम् । न० सप्तदशावयवे लिङ्गशरीरे ॥ विज्ञानमयमनोमयप्राणमयकोशाः ज्ञानेच्छाक्रियाशक्तिप्रधानाः एतत्कोशत्रयमिलितसत् सूक्ष्मशरीरमित्युच्यते । यथाह भगवती हिमाद्रिप्रति देवीगीतायाम् । ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च । प्राणादिपञ्चकञ्चैव धिया च सहितं मनः ॥ एतत् सूक्ष्मशरीरं स्यान्मम लिङ्गं यदुच्यते । इति । सूक्ष्मशतन० शरीरम ॥

पुं॰ न॰ पारदे ॥ त्रि॰ प्रसूते ॥ रिति ॥ सुबति॰ सुयतिक्षचाभिषे न । सूर्य्ये । ता : ॥

सूतक । पुं॰ न॰ पारदे । रसे ॥ न॰ जनी । जन्मनि ॥ जनना शौचे ॥ यथा । यावन्नच्छिद्यते नाल तावन्नाप्नोति सूतकम् । छिन्ने नाले तत पश्चात् सूतकन्तु विधीयते ॥ अपिच । मृतेन सूतकगच्छेन्नेतरत्सूतकेनतु । इदमनुरपि । मासस्योपरि याबेतु सूतकोपरिसूतके । शेषाहोभिर्विशुद्धि स्यादुदर्क्यां सूतक विनेति ॥ मरणाशौचे ॥ यथा । सर्वेणाचमसंस्पृश्य तनस्यात्सूतकेसति । दध्येपि सूतकेद्वद्यात् पिण्डान्प्रेतक्षहृमयद्धृति ॥ प्रति बन्धके ॥ यथा । व्रतयज्ञविवाहेषु श्राद्धेहोमेऽर्च्चनेजपे । आरब्धे सूतकंनस्यादनारब्धे तु सूतकमिति ॥

सूतका । स्त्री॰ सूतिकायाम । सूता शब्दात् स्वार्थेकन् । सूतकापुत्रिका वृन्दारकाश्चेतिसाधु : ॥

सूतकागृहम् । न॰ सूतिकागृहे ॥ सूतकायागृहम् ॥

सूततनय : ।
सूतनन्दन: ।
सूतपुत्र : ।
सूतपुत्रक: । } पु॰ कर्णे । कुन्त्यां सूर्य्याद्भवे ॥

सूतराट् । पु॰ पारदे । रसे ॥

सूति । स्त्री॰ प्रसवे ॥ सोमाभिषवभूमौ ॥

सूतिका । स्त्री॰ सूतकायाम् । नव प्रसूतायाम् ॥ तद्गर्भोजनप्राय श्चित्त यथा । चाण्डालान्न भुमिपा न्नमनजोविश्वजीविनाम् । शौण्डि कान्न सूतिकान्नंभुक्त्वामासव्रतीभवेदितिमत्स्य. ॥

सूतिकागारम् ।
सूतिकागृहम् ।
सूतिकागेहम् ।
सूतिकाभवनम् । } न॰ प्रसवालये । अरिष्टे ॥ तल्लक्षणं यथा ।
सूतिकावास . । पुं॰ अष्टहस्तायतं चाष्टचतुर्हस्तविशालकम् । प्राचीद्वारमुदग्द्वारं विदध्यात्सूतिका गृहम् । तथाविधाचार्यावासीय था । सर्वयत्नप्रतिष्ठान्सूतिका गृहसेविन. । पूष्ठत पाणिपादौ च पृष्ठयोवान्सुरक्षस । एवंविधा न्पिशाचांश्चदृष्ट्वा न्नाशनुवन्प्रया । अन्तर्हीनवरप्रादात्कामस्यापि स्वमे वचेतिवह्निपुराणम् ॥ अपिच । सूतिकावासनिलया जन्मदानाम्न देवता । तासांयागनिमित्तन्तुशुद्धि र्जन्मनिकीर्त्तिता । षष्ठेह्निरात्रि यागन्तुजन्मदानान्तुकारयेत् । इति सूते स्वार्थेकन् । सूतिकापुत्रिके तिपक्षेऽसद्रूस्तम् । सूतिकाया ॰

पूरित्य ॥ कुसुयुभ्यश्चेत्यपपचतउ त् ॥ अट्नीरित्यत्रदीर्घनिर्देशा दन्यत्राप्युदितिवा ॥ यथा । सव तिरसम् । पुप्रसवाद्वी । सुभ्यश्चा निश्चे तिपीद्दीर्घश्च ॥

सूपकार । पु॰ पाककर्त्तरि । व ल्लवे । चाराविकौ ॥ चौदनिकौ ॥ तल्लक्षण यथा । कुलीनोकारतत्त्व ज्ञोवल्लवानृमिष्टपाचक । शूरश्च कठिनश्चैवसूपकार सउच्यते । अपिच । पितृपैतामहोदक्ष । शा स्त्रज्ञोमिष्टवाचक : । शौचयुक्तो धभक्तश्चसूपकार सउच्यते ॥ अपि सुशीभिका स्निग्धा सूपकारा. प्रमागता . । धृतोपचीनाश्च भुव यस्ययात्रै च्छमशिक्षिता ॥ चन्योपित यमीविषयरक्षितपरिचारका. । तेपि चैवविधाएवतदच्यत्तोपिताद्वरङ्- ति ॥ सूपकारीति । स्त्री॰ । पा सं वयण् । मुद्यापीपजीविनि ॥

सूपकारपति । पु॰ पाकाध्यक्ष । तल्लक्षण यथा । सूपकारपतिस्तत्र प्रायोभ्रेषगुणान्वित' । तत्तद्य ञ्जनतत्त्वज्ञस्तत्प्राधानतत्पर । जी वनजीवनामञ्च तज्ञ्ता विधिपारि तम् । तदेवाविधिनाभुक्त परिणा मेविषोपमम् ॥ सूपकाराणांप तिः ॥

सूपधूपनम् । न॰ हिङ्गुनि ॥

सूपपर्णी । स्त्री॰ मुद्गपर्णाम् ॥

सूपश्रेष्ठ । पु॰ मुद्गे ॥

सूपाङ्गम् । न॰ हिङ्गुनि ॥

सूप्य . । पु॰ वैदले । शमीधान्ये ॥

सूमम् । न॰ पु॰ क्षीरे ॥ नभसि ॥ सूते । षूङ्प्रोणिगर्भविमोच ने । सूयतेमा । षूङ्प्राणिप्रसवे । कृषियुधीधिदसिप्यधूसूभ्योम क् ॥ पु॰ चन्द्रे ॥

सूर । पु॰ सूर्ये । रवौ ॥ सुवति प्रेरयतिकर्मणिलोकम् । सूप्रेर णे । सुसूधागृधिभ्य : क्रन् ॥ आद्यवे । वसुदेवजनके । द्वताम्र तृपितवियोपि ॥

सूरण .। पु॰ अर्शोघ्ने । शूरणे । कन्दे ॥ सूयते । सूरीति सात्रम । बहुलमन्यत्रापीतियुच् । कार्त्ति रित्युज्वल ॥ बाहुलीसूरणना चाद्दम् ।

सूरत . । त्रि॰ कृपालौ ॥ सुष्ठुरम ते । रम॰ । क्त '। बाहुलकात् पूर्वपदस्यदीर्घ ॥ सूरोकर्षुरत यतिवा । ड ॥ उपमाने ॥ सौ रते ' सौरते ' पूर्वपदस्यदीर्घ । क्वित्वादनुनासिकलोप ॥

सूरसूत । पु॰ अरुणे । गरुडा ग्रजे ॥ सूरस्ययवे यत सारथि ॥

सूरि । पु॰ धीरे ॥ पण्डिते । सञ्ज्ञावति ॥ सूते॰ सूयतेवा । षू

ङ्प्राणिगर्भविमोचने । प्राणिप्रसवे वा । सूङ् क्लि॰ । आदवे । सूर्य्ये ।
सूरी । पु॰ पण्डिते । विदुषि । सूर । सूर्य्योऽस्त्युपास्यत्वाऽस्य । अ तदस्मिन्नस्तीति । न॰ धूमे ।
सूरी । स्त्री॰ कुन्त्याम् । पृथायाम् । सूर्य्यस्त्री । पुंयोगादिति ङीष् । सूर्य्यतिष्यागस्त्येति यलोपः । राजसर्षपे । राजिकायाम् ।
सूर्य्यम् । न॰ आदरे । सूर्य्या आदरे । ल्युट् ।
सूर्य्य । पु॰ माषे ।
सूर्प । पुं॰ प्रस्फोटने । शोधितभाजने । कुम्भपरिमाणे । द्रोणद्वयपरिमाणे । इति वैद्यकपरिभाषा । सर्पिः । रुगतौ । सुपृभ्यामूङ् चेति द्वापाद्दीत्यपाठात् प ।
सूर्पणखी । स्त्री॰ रावणस्य भगिन्याम् । सूर्पं शोधितभाजनम् । नखविदूषणं । सूर्प्यं च शोधितभाजने नख आदिसन्निधानवयतिदूषयतीति सूर्पणखी ।
सूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् । पूर्वपदादिति णत्वम् ।
सूर्पारकम् । न॰ तीर्थविशेषे । रामतीर्थे ।
सूर्मी । स्त्री॰ अयः प्रतिमायाम् । शोभमाजानुं । बहुव्रीहिर्वा । सर्वतोऽक्तिन्नर्थादिति॰ गौरादित्वात् ङीष् । सूर्मी ज्वलन्तीमाश्लिष्य मृत्युवेगुरुतल्पगः ।

सूर्य्य । पु॰ अर्कपर्णे । सूरे । अर्यम्णि । आदित्ये । तपने । सवितरि । रवौ । अष्टाध्यायिभिः पूजोक्ताः वराहपुराणे । यथा । उदयाद्रिं स्मृत एवं यस्तु भक्त्या नरोत्तम । दृष्ट्वा तान् अञ्जलिभिस्तु तं हि पूजयेच्छुचिः । तस्य भावप्रपन्नस्य शुभं यत् समुपार्जितम् । तत्क्षणादेव निर्दग्धं भस्मीभवति तत् स्मृतमिति ॥ रश्मीनां प्रकाशनाद् रसानामाकर्षणात् सूर्यः ॥ यद्वा । सरत्याकाशे । सृ॰ । कर्तरि क्यप् । निपातनादुत्वम् । तस्य रपरत्वाद् हलिचेति दीर्घः । यद्वा । सुवति॰ कर्मणि लोकान् प्रेरयति । षूप्रेरणे । कर्तरि क्यप् । निपातनात् क्यपि रुडागमः । उभयत्र राजसूयसूर्य्येत्यादिना निपातनम् । स्वतेजसा अपतिसर्वं जगदिति वा । षूङ् प्राणिगर्भविमोचने । पूर्ववन्निपातनम् सर्वावभासके ॥ पौर्णमासो चन्द्रः ॥ यथा । परीतन्तु दिवा प्रोक्तं विपरीतन्तु शर्वरी । पौर्णमासी गतश्चन्द्रः सूर्यश्चाभिधीयत इति ॥
सूर्य्यकान्त । पु॰ अग्निमणौ । अग्निगर्भे । सूर्य्यमणौ । सूर्याश्मनि । पुष्पवृक्षविशेषे । सूर्य्यमणौ

सूर्य्यभक्ता । स्त्री॰ सुवर्चलायाम । आदित्यभक्तायाम् । कुल् कुल॰ कू॰ भा॰ ॥

सूर्य्यमणि । पु॰ सूर्य्यकान्तमणौ ॥ पुष्पवृक्षविशेषे । मधतृपुटे । पुष्परक्ते ॥

सूर्य्यमण्डलम । न॰ अर्कविम्बे ॥ सूर्य्यसमण्डलम् ॥

सूर्य्यमण्डलभेदी । पुं॰ परिव्राजि । योगिनियम्यरणे ऽभिमुखेऽभिमुखत्वात्तस्मिन् ॥

सूर्य्यमता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्यमुखी । स्त्री॰ सूर्य्यमुखीतिख्यातेपुष्पवृक्ष ॥ सूर्य्यमुख्याहरेत्स्फोटयोनिरुक्तक्रमिपाण्डुताम् । अर्कद्रुतिशेष ॥

सूर्य्यलोक । पु॰ सौरभुवने ॥

सूर्य्यवंश । पु॰ सूर्य्यसन्ताने ।

सूर्य्यसञ्ज्ञम् । न॰ कुङ्कुमे ॥

सूर्य्यसारथि । पु॰ अरुणे ।

सूर्य्यहृदयम् । न॰ सूर्य्यस्तवविशेषे ॥

सूर्य्या । स्त्री॰ सूर्य्यस्येदंताया मयेतिति सूर्य्यस्यादेवता । सूर्य्याहे ब्रह्मायाचाप् । इन्द्रवारुण्यामोषधौ । विशालायाम् ॥ नवोढायाम् ॥

सूर्य्यार्घ्यम । न॰ सूर्य्यसम्प्रदानकार्घ्ये ॥

सूर्य्यालोक । पु॰ आतपे ॥

सूर्य्यावर्त्त । पु॰ कुल् कुल॰ क्षुपप्रसिद्धेक्षुपविशेषे । सुवर्चलायाम् ॥ सूर्य्यावर्त्तोविषघ्न ॥ सुमन्त्रिधा॰ कू॰ गो॰ दे॰ भा॰ प्र॰ शाकविशेषे अञ्जपथ ॥ यथा । पार्वतेयस्तकरभोवशिर कपिपिप्पली । आमातासौकाञ्चितृप्रोक्ता सूर्य्यावर्त्त.सितोऽपरइतिरत्नमाला ॥ अशाख्यालोकाथित सूर्य्यावर्त्तसुधान्दि कोरितिह राहलोशिरोरोगविशेषे ॥ यथा । सूर्य्योदय याप्रतिमन्दमन्दम क्षिभ्रुवरुक समुपैतिगाढम् । विवर्द्धतेचांशुमताऽहैव सूर्य्यावर्त्तोविनिवर्त्ततेव ॥ शीतेनशान्तिलभते कश्चिदुष्णेनजन्तु सुखमाप्नुयाद्वा । सर्वत्मके कष्टतम विकारसूर्य्यावर्त्तमुदाहरन्ति ॥ सूर्य्योदयमितिस्थोकाद्यारम्भं तिद्यावत् । सूर्य्यावर्त्तो॰ सूर्य्यस्याधोगतो ॥ इति ॥

सूर्य्यावर्त्ता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्याश्मा । पुं॰ सूर्य्यकान्तमणौ ।

सूर्य्याश्व । सूर्य्यघोटके ॥ सूर्य्याश्वेसाताटकदितोसमाविरितिचिकाण्डशेष ॥

सूर्य्याह्नम । न॰ ताम्रे ॥ पु॰ अर्कवृक्षे ॥ त्रि॰ सूर्य्यनामके ॥

सूर्य्येन्दुसङ्गम । पु॰ दर्शे । अमा

नावस्थादिसेवने । कृतौ । षि
वुतन्तुसन्ताने ल्युट् ॥ सेवसेव
नेवा ।
सेवना । स्त्री॰ परिचर्यायाम् । सेवा
याम् ॥
सेवनी । स्त्री॰ सूच्याम ॥ शरीरावय
वसंयोगविशेषे ॥ यथा । सेवन्य
सम्मतासास्नुभवेयु पञ्चमस्तके ।
एकाशिफासिजिह्वायामेकाविवर्जि
ता क्वचिदितिभावप्रकाश ॥
सेवन्ती । स्त्री॰ शतपत्र्याम् ॥
सेवा । स्त्री॰ । सेवने । भक्तौ ॥ से
व्यचित्तानुवृत्तौ । सर्वभावेनसेव्या
नुकूलकारितायाम् । वृत्तौ ॥ वे
तनग्रहणेनाज्ञाकरणसेवेतिव्याख्या
तार । सेवातुहीनहष्टिसन्दर्शन
स्थामितमनोचक्रियादिधर्मयो
गात्॰शुनद्वृत्तिर्भवति । ब्राह्मणे
नसानकार्या । सेवाश्ववृत्तिराख्या
तातस्मात्तांपरिवर्जयेदितिमनुवच
नात् ॥ सेवनम् । सेव॰ । गुरोश्च
लहल्ल । टाप ॥ सेवनमाराधन
मुपभोगमाश्रयणञ्चेति । यथा । विष्णु
सेवती॰ सुखसेवती॰ तीर्थसेवतीसा
धुरिति ॥ परस्मैपदपक्षतु । नीच
सक्त्वमपिसेवतिनीचएव । स्वामी
मेविभवेष्वतोनरपतिसेवतिकिमा
निन । इत्यादुदाहरन्ति ॥
सेवि । न॰ सेवे । सेविते । मुष्टि
प्रमाणबदरे ॥
सेविका । स्त्री॰ दुग्धपक्वाल्पपिष्टके ।
सिमऔ॰ सेवीं॰ इ॰ भाषा॰ प्र॰
॥ यथा । समितावर्त्तिका ऋ
क्ष्णासुसूक्ष्मायवसन्निभा । शुष्का
क्षीरेषससाध्या भोज्याघृतसिता
न्विता ॥ सेविकातर्पणी बल्या
गुर्वीपित्तानिलापहा । याहिणी
सन्धिकृद्रुच्यातारार्देऽप्रातिमात्र
या ॥
सेविकामोदक । पु॰ लड्डुकविशे
षे । सेवकालड्डू॰ इ॰ भा॰ प्र॰ ॥
तत्प्रक्रियायथा । घृताढ्ययासमि
तयाकृत्वासूत्राणितानितु । नि
पुणोभर्जयेदाज्ये खण्डपाकेनयोज
येत् । युक्तेनमोदकान्कुर्यात्तेगु
णेमंठकायथा ॥
सेवितम् । न॰ सेविबदरे । सैंधफवे
॥ त्रि॰ समुपासितेगुर्वादौ । वरि
वसिते ॥ अनुष्ठिते ॥ उपभुक्ते ॥
आश्रिते ॥
सेव्य । पु॰ अश्वत्थवृक्षे ॥ हि
ज्जलद्रुमे । न॰ उशीरे । वीरण
मूले ॥ त्रि॰ सेवार्हे । सेवि
तुमर्हे । विहसेवने । यत् ॥
सेव्या । स्त्री॰ वन्दाकयां ॥
सैंह । त्रि॰ सिंहसम्बन्धिनि ॥ सि
हस्थाऽयम् । अण् ॥
सैंहली । स्त्री॰ सिंहपिप्पल्याम् ।

सप्तदशाध्यायाम् । कुशव्याम् ॥ त्रि॰ सिकताशीपजे ॥

सैंहक । पु॰ राहौ ॥ द्रु॰ म॰ र॰ वली ॥

सैंहिकेय । पु॰ विधुन्तुदे । राहौ । स्वर्भानौ । सिंहिकायाअपत्यम् । ढक् ॥

सैकतम् । न॰ वालुकामयतटे । सिकतामये ॥ त्रि॰ सिकतामये । सिकतावति । सिकतिले । सिकताः सन्त्यऽस्मिन । सिकताशर्कराभ्यां चेति मत्वर्थेऽण् ॥ सिकतैववा । शर्करादित्वात् ॥

सैकतिक । पु॰ सन्यस्ते ॥ क्षपण के । न॰ मङ्गलसूत्रे ॥ त्रि॰ भ्रान्तिजीविनि । सन्देहजीविनि ॥

सैकतेष्टन् । न॰ आर्द्रके , त्रि॰ सैकतिलप्रिये ॥

सैतवाहिनी । स्त्री॰ नदीविशेषे । बाहुदायाम् ॥ सितानिवाहनानियस्याः जुनस्य॰तस्ययम् । तस्येदमित्यणि टिड्ढेतिङीप् ॥ यद्वा सितस्यार्जुनस्येयसैतौ । सैतीवासौवाहिनी नदीच ॥

सैद्धान्तिक । त्रि॰ सिद्धान्तज्ञे ॥

सैनापत्यम् । न॰ सैनापतेः कर्मणि ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ यद्वा । दित्यदित्यादित्य पत्युत्तरपदाण्ण्य ॥ सेनापतिसम्बन्धिनि ॥ सेनापतेः कर्म॰ सेनापतेरिदं वा ॥

सैनिक । पु॰ सेनारक्षे । प्रहरकादौ ॥ सेनांरक्षति । रक्षतीति ठक् ॥ सैन्ये । सेनायांसमवेते ॥ सेनांसमवैति । सेनायावैतिच्योऽभावे॰ ठक् ॥

सैन्धव । पु॰ अश्वदृश्यमे ॥ सिन्धुदेशजाश्वे । सिन्धुरभिजनोऽस्य । सिन्ध्वादित्वादण् ॥ पु॰ न॰ लवणोत्तमे । मणिमन्थे । सिन्धुजे ॥ षड्गुणायथा । सैन्धवलवणं स्वादुदीपनपाचनलघु । स्निग्धरुच्यहिमवृष्य सूक्ष्मनेत्र्य त्रिदोषहृत् ॥ सैन्धवधिविधर्चेयसितरक्तमिति क्रमात् । रसवीर्यविपाकेषुगुणाढ्य कथितं सितम् ॥ अपिच । पूर्वाह्लकालेचाऽभ्यावर्त्तप्रायशोलवणेहितम् । शूलानाहविबन्धघ्न लवणं सैन्धवंवरम् ॥ त्रि॰ सिन्धुदेशभवे । सिन्धुजे ॥ सिन्धुजातो भनेदश्वः ॥ कच्छादिभ्यश्चेत्यण् । अण्ओवेतिवा ॥ पु॰ सिन्धुदेशे ॥ स्वार्थेऽण् । लङ्काप्रदेशमारभ्यमक्का परमेश्वरि, सैन्धवाख्योमहादेशः पर्वतेतिष्ठतिप्रिये ॥

सैन्धी । स्त्री॰ तालादिमद्ये । हालायाम् ॥ सैन्धीशीताकषायाम्लापि

सदाङ्गविनाशिनी । यत्तद्राराजनि
घंष्टेनरसिंहेनवर्णिता ॥

सैन्यम् । न० बले । सेनायाम् ॥ से
नैव । चतुर्वर्णादित्वात् ष्यञ् ॥ त्रि०
सेनासमवेते । सैनिके ॥ सेनासम
वेत । सेनायावेतिष्य ॥ सेना-
यांसमवेतायेसैन्यास्तेसैनिकाश्चते
इत्यमर । द्विगुणितप्ययुरथपा
दातसेना० तत्रयेसमवेताएकदेशी
भूतास्तेसैन्या , सैनिकाश्च ॥

सैन्यनियाशिका । स्त्री० चक्रयष्ट्या
म् । मेरचाकृतियष्ट्यायवनभाषा ।

सैन्यपृष्ठम् । न० प्रतिग्रहे ॥ यत्रस्थि
तीराजास्वसैन्यप्रतिग्रहंपाति ॥

सैरन्ध्री । स्त्री० सैरिन्ध्र्याम् । सीरंधर
ति । धृञ० । मूलविभुजादित्वा
त्क । वाहुलकाद्लुक । सीरन्ध्र
स्येयम् । तस्येदमित्यण् । शिल्प
कारणात्स्वपरकीयत् ॥ यद्वा ।
सैरंस्वाच्छन्द्यंधरति । प्राग्व
त्क । पृषोदरादि । । गौरादि
चतुःषष्टिकलाभिज्ञाशीलरूपादि
सेवनी । प्रसाधनोपचारज्ञासैर
न्ध्रीपरिकीर्त्तितादृतिकाश्य . ॥ द्रौ
पद्याम् ॥

सैरिक । पुं० हालिके० इपि । लाङ्ग
लिके । त्रि० सीरसम्बन्धिनि । सी
रंवहति । सैनदीव्यतिखनतीति
ठक् सीरस्येदंवा । हलसीराट्ठक् ।

सैरिन्ध्र । पुं० वागुरावृत्तौ० सङ्कीर्ण
जात्यन्तरे ॥ यथाहमनुः । प्रसाध
नोपचारज्ञमदासंदासजीवनम् ।
सैरिन्ध्रंवागुरावृत्तिंसूतेदस्युरयो
गवे० वृत्ति ॥

सैरिन्ध्री । स्त्री० सैरन्ध्र्याम् । परवे
श्मस्थशिल्पकारिण्यांस्वतन्त्रस्त्रियाम् ॥ सै
रन्ध्रीपरवेश्मस्थास्ववशाशिल्पकारि
केत्यमर ॥ चतुःषष्टिकलाभिज्ञा
शीलरूपादिसेविनी । प्रसाधनोप
चारज्ञासैरन्ध्रीपरिकीर्त्तितेतिका
श्य . ॥ वर्णसङ्करसम्भूतस्त्रियाम् ॥
महल्लिकायाम् ॥ द्रौपद्याम् । शि
ल्पयोषायाम् । याज्ञसेन्याम् ॥
सीरंधरति । धृञ० । मूलविभुजा
दित्वात्क । वाहुलकाद्लुक ।
सीरन्ध्रस्येयम् । तस्येदमित्यण् ।
शिल्पकरणात्स्वपरकीय । पृषो
दरादि ॥ यद्वा । स्वैरंस्वाच्छन्द्यं
धरति । प्राग्वत्क । पृषोदरा
दि । गौरादित्व ॥

सैरिभ । पुं० लुलाये । महिषे ।
कासरे ॥ सीरोऽस्त्येषाम् ; चत
र्थि । सीरिणांकर्षकाणामिभ
इव । शकन्ध्वादि । प्रज्ञाद्यण् ॥
यद्वा । सीरस्यसूर्यस्यकुमारत्व० पुत्र
वाहनत्वात् । पूर्ववत् । ममभव
ने । स्वर्गे ॥

सैरीय । पुं० भिण्टाम् ॥ सौरेभ

माघिपता.सोपप्लवा : स्मृता : ॥ इति ॥

सोपप्लव । पु॰ राहुग्रस्ते॰ इन्दौ । राहुग्रस्ते पूषणि । राहुग्रस्ते त्रि स्त्रीय॰ पूष्णि च । सोपप्लवोपर क्तौ हावित्यमर । राहुकतं कायव्यवकर्मीभूतचन्द्रे पूषणि च । उपर क्तौ ॥ सह उपप्लवेन राहुणा॰ इति सोपप्लव । तेनसहेतीतिसमास : । वोपसर्जनस्येतिसहस्य स ॥ त्रि॰ आपद्गते ॥

सोपमर्द । त्रि॰ तिरस्कारसहिते ॥

सोपवास । त्रि॰ उपवासविशिष्टे ॥

सोपाक । पु॰ चाण्डालेनपुक्कस्यां नितोऽन्त्यजविशेषे । भङ्गोतिप्रसिद्धे ॥ मारवोचितापराधे॰ राजादेशेनमारयम्॰ तेनास्यवृत्ति । यथा । चाण्डालेनतुसोपाकोमूलव्यसनवृत्तिमान् । पुक्कस्यांजायते पाप सदासज्जनगर्हित ॥ इतिमनु ॥

सोपाधि । त्रि॰ उपाधियुक्ते ॥ प्रतिज्ञाभेक्षादिमादृामादौ ॥

सोपानम् । न॰ पाषाणादिरचितेषु सौधाद्यारोहणे । आरोहणे । पैडी॰ इ॰ भा॰ प्र॰ । सहविद्यमानउपरिचायोगसममनेन ॥ आरोहन्त्यसोपानं पैडोइतिसमाह्वये । सोपानिकाछवटिर्तेति ॐ त्रि

स्त्वधिरोहिणीतिशब्दरत्नावली ॥

सोभाञ्जन । पु॰ शोभाञ्जने ॥

सोम । पु॰ शिवे ॥ उमयासहित । हिमदीधितौ । चन्द्रे ॥ सोमेऽमावास्यायामरुणोदयमारभ्यस्नानकालपर्यन्त मौनोभूत्वास्नानाद्गोसहस्रदानफलम्भवतीत्याह व्यास । सिनीवालीकुहूर्वापि यदिसोमदिनेभवेत् । गोसहस्रफलदद्यात्स्नानयन्मौनिनाकृतमिति ॥ अमृतसौति॰ सोम । षुप्रसवैश्वर्ययो । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति मन् ॥ वानरे ॥ कुबेरे ॥ पितृदेवे । यमे ॥ समीरणे ॥ वसुप्रभेदे । नीलपत्री ॥ कर्पूरे ॥ सोमलतौषधौ ॥ सोमलतारसे ॥ सोमलतासाधनकेयागे ॥ दिव्यौषध्याम् ॥ अमृते ॥ पर्वतविशेषे ॥ न॰ नीरे । जले ॥ काञ्जिके ॥ स्वर्गे ॥

सोमगर्भ । पु॰ विष्णौ ॥ सोमोगर्भोऽस्य ॥

सोमज । पु॰ बुधे ॥ न॰ दुग्धे ॥ त्रि॰ चन्द्रजे । सोमाज्जात । जनी॰ । ड ॥

सोमतीर्थम । न॰ प्रभासतीर्थे ॥

सोमधारा । स्त्री॰ देवपथे । नभसरिति ॥

दे।यवलीकट्, तिक्त।रसायनीति ॥ अपिच। सोमवल्लीमहागुल्मावस्थ अ्रे ह।धनुर्ल ता । सोमार्हागुल्मवल्ली यवक्षग्रक्षीरदृ्विजप्रिया । सोमक्षीरा चसोमायचक्षा।क्ता।रुद्रसङ्ख्यया । सोमवल्लीकट्, श्रीतामधुरापित्त दाहहृत ॥ तृष्णाविशोषशमनी पावनीयज्ञसाधनीतिरा० नि०व्ट ॥ ब्राह्मीवधी ॥

सोमवतिका । स्त्री० गुडूच्यां । सोम वल्लयाम् ॥

सोमवंश । पुं० युधिष्ठिरे अजात शत्रौ चन्द्रवंशे । सोमस्यवंश ॥

सोमवल्क । पु० धवलकट्फले । खदिरे । रोठावारक्षे । वारक्षे ॥ सोमवृववल्कोवल्कलमस्य ॥

सोमवल्कल । पु० कदरे । श्वेत खदिरे ॥ सोमइववल्कलमस्य ॥

सोमवल्लरी । स्त्री० ब्राह्म्यांसोमधौ ॥ सोमव्रवल्लरी ॥ सोमलतायाम् ॥

सोमवल्लिका । स्त्री० सोमराजिनि ॥ सोमस्यवल्ली । स्वार्थेकन् ॥

सोमवल्ली । स्त्री० बल्मादन्याम । छि न्नरुहाकाम् । गुडूच्याम् ॥ सोम स्यवल्ली ॥ वाराह्याम् । सोमलता याम् ॥ सोमवल्लीत्रिदोषघ्नीकट्, स्तिक्तारसायनी ॥ पातालगरुड्या म् ॥ ब्राह्म्याम् ॥ सुदर्शना याम् ॥

सोमवार । पु० सोमस्यवासरेदिने ॥

सोमविक्रयी पु० सोमलताविक्र यिकर्त्तरि ॥

सोमवृक्ष । पु० कट्फलवृक्षे ॥ श्वे तखदिरे ॥

सोमशकला । स्त्री० शशाङ्कखण्ड्याम् ॥ चन्द्रखण्डविशिष्टायाम् ॥

सोमसञ्ज्ञम् । न० कर्पूरे ॥

सोमसद । भ०स्त्रि० पितृगणान्तरे ॥ विराटसुता सोमसद साध्या नांपितर, स्मृता ॥

सोमसवन । पु० ब्रह्मसोकस्थाश्व त्थवृक्षे ॥ श्रोमोऽमृतसवतीति । युच ॥

सोमसार । पु० खदिरे ॥

सोमसिद्धान्त । पु० बौद्धविशेषे ॥

सोमसिद्धान्ती । पु० सोमसिद्धा न्तवेत्तरि । कापालिके ॥ तल्लक्षण यादिकयथा । नरास्थिमालाकृतचा रुभूषण श्मशानवासीनृकपा लभोजन । पश्यामियोगाञ्जनशु द्धदर्शनोजगन्मिथोभिन्नमभिन्न- मीश्वरात् ॥ अपिच । मस्तिष्कान्त्र वसाऽभिघारितमहामांसाहुतीर्जु ह्वता० वह्नौब्रह्मकपालकल्पितसु रापानेनन पारणा ॥ सद्य ब्र ह्मकठोरकण्ठविगलत्कीलालधारो ज्ज्वलै रच्योमे पुरुषोपहारबलिभि र्देवोमहाभैरव ॥

आदित्वादण् ॥
सौमदत्ति : । पुं० क्षत्रियविशेषे । भूरिश्रवसि ॥ सोमदत्तस्याऽपत्यम् । अतइञ् ॥
सौमनसा । स्त्री० जातिपत्न्याम् ॥
सौमनसायनी । स्त्री० जातिपत्न्याम् । मालतीपत्रिकायाम् । जाविची । ० शू० भा० प्र० ॥
सौमनस्यम् । न० शोभनमनोभवे ॥ कुसुमसमूहे ॥ श्राद्धेपिण्डदाना नन्तरंब्राह्मणहस्ते पुष्पदानमन्त्रे
सौमनस्यवान् । त्रि० प्रीतिमति ॥
सौमनस्यायनी । स्त्री० मालतीकलिकायाम् ॥ यथा । मालतीपुष्पकलिकांसौमनस्यायनींविदुरितिविकाण्डशेष : ॥
सौमिक : । पुं० सोमरससाध्येऽग्निष्टोमादियागे ॥
सौमिकी । स्त्री० दीक्षणीयेष्टौ ॥ शू० दे० चन्द्र ॥
सौमित : । पुं० लक्ष्मणे ॥
सौमित्रि । पुं० रामानुजे । लक्ष्मणे ॥ सुमित्रायाअपत्यम् । बाह्वादित्वादिञ् ॥
सौमी । स्त्री० ऋग्विशेषे ॥ सोमो देवताऽस्या: । सोमाट्ट्यण् । ङीप् । यलोप: ॥
सौमेधिक । पुं० सिद्धे ॥
सौमेरव । त्रि० सुमेरुसम्बन्धिनि ॥
सौमेरुकम् । न० सुवर्णे ॥
सौम्य । पुं० सोमात्मजे । बुधे ॥ वत्सरविशेषे ॥ तत्फलंयथा । सुभिक्षक्षेममारोग्यसुखसनिरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजासौम्ये सौख्यंप्रकीर्त्तितमिति ॥ ४२ ॥ भास्करे ॥ द्युतिधरणीविप्रे ॥ उदुम्बरद्रुमे ॥ भूखण्डविशेषे ॥ कृच्छ्रव्रतविशेषे ॥ न० मृगशिरोनक्षत्रे ॥ तीर्थविशेषे ॥ करमध्ये सौम्यतीर्थम् ॥ त्रि० मनुष्ये ॥ साधौ ॥ मनोज्ञे ॥ सोमदेवते ॥ सोमद्रवसोम्य । शाखादिभ्यो य । तत । प्रज्ञाद्यण् ॥ सोमो देवताऽस्य । सोमाट्ट्यण् ॥ यद्वा । सोमद्रवसोम । ततश्चतुर्वर्णादित्वात्ष्यञ् ॥
सौम्यकृच्छ्र । पुं० व्रतविशेषे ॥ यथा । पिण्याकाचामतक्राम्बुसक्तूनांप्रतिवासरम् । एकैकमुपवासश्चकृच्छ्र सौम्योयमुच्यते ॥
सौम्यगन्धी । स्त्री० शतपत्न्याम् ॥
सौम्यग्रह । पुं० शुभग्रहे ॥ यथा॥ अर्द्धक्षीणेन्दुर्कसौरारा पापा: सौम्यास्तथापरे । पापयुक्तोबुध: पापैराहुकेतूचपापदौ ॥
सौम्यता । स्त्री० प्रियदर्शनतायाम् ॥
सौम्यत्वम् । न० सौमनस्ये ॥ स

वंशीकास्थितेपित्वे ॥ प्रतिषिद्धधा त्विमते ॥
सौम्यधातु । पुं॰ कफे । श्लेष्मणि ॥
सौम्यवपुः । न॰ अनुग्रशरीरे ॥
सौम्या । स्त्री॰ अनुग्रायाम ॥ मनो ज्ञायाम् ॥ दुर्गायाम् । गौर्य्याम् ॥ आलपर्ण्याम् ॥ महाज्योतिष्म त्याम् ॥ गुञ्जायाम् ॥ उत्तरदि शि ॥ ब्राह्मयाम् ॥ मल्लिकायाम् ॥ रुद्रजटायाम् ॥ मुष्याम् ॥ म हेन्द्रवारुण्याम् ॥ मल्लिपत्रल्या म् ॥
सौम्या । स्त्री॰ बहुत्वे॰ मृगशिर शिर स्थासुपञ्चतारकासु । इल् वलासु ॥
सौम्यायनम् । न॰ उत्तरायणे ॥
सौर । पुं॰ शनैश्चरे ॥ मासविशेषे । सूर्य्यकराशिभोगावच्छिन्नेमासि ॥ यथा । आदित्यराशिभोगेनसौरो मास प्रकीर्त्तितइति । एकस्मा त्सङ्क्रमाद्यासङ्क्रान्ति सौरोभिधी यतइतिच ॥ दिनविशेषे ॥ वर्ष विशेषे । तुम्बुरुवृक्षे ॥ त्रि॰ सू र्य्यसम्बन्धिनि ॥ न॰ उपपुराण विशेषे । त्रि॰ सूर्य्योपासके ॥ सू र्य्यस्यार्कस्यायम् । तस्येदमित्य ण् ॥
सौरज । पुं॰ तुम्बुरुवृक्षे ॥ फलवि शेषे ॥ त्रि॰सौरजाते ॥

सौरदिनम् । न॰ सौरदिवसे ॥
सौरनक्तम् । न॰ व्रतविशेषे ॥ यथा । हस्तयुक्तेर्कदिने सौरनक्तं समाच रेत् । सप्तार्कसमभ्यर्च्य नीरो गोबहुजीवति ॥ आत्मनोद्विगुण च्छाय यदास तिष्ठतेरवि । सौर नक्तं विजानीयान्नक्तं निशिभोज नमितिनारसिंहे ६४ अध्याय ॥
सौरभम् । न॰ कुङ्कुमे । वोले । सु गन्धितायाम् । विषमवृत्तान्तरे ॥ अयमुज्ज्वलस्तवसप्तमिवषट्कमिन्द्रलोक मन्यथा । जायतेरनभगैर्यथित कथयन्तिसौरभमिदन्तदीदृशम् ॥ य था । परिभूतकुङ्कुमतपत्रवनविस्ट तगधविभ्रमा । कस्यचन्नहरतीह हरिसुखपद्मसौरभकथातशङ्कृता ॥
सौरभेय । पुं॰ वृषे ॥ सुरभ्याअपत्य म् । स्त्रीभ्योढक् ॥
सौरभेयी । स्त्री॰ माहेय्याम् । गवि । उस्रायाम् ॥ सुरभ्यो . स्यपत्य म् । ढक् । ङीप् ॥
सौरभ्यम् । न॰ मनोज्ञत्वे ॥ सौग न्ध्ये । सुगन्धितायाम् ॥ गुणगौर वे । पुं॰कुबेरे ॥
सौरमास । पुं॰ सूर्य्यकराशिभोगा वच्छिन्नकाले ॥ यथा । एकराशौर विर्यावत्कालं मास समास्कर । अयषडभि सौरमासैरयनं परि कीर्त्तितम् ॥

सौरसम्वत्सर । पु॰ सूर्य्यस्य द्वादश राशिभोगावच्छिन्नकाले । यथा । सौरसम्वत्सरस्यान्ते मानेनाभिजितेन तु पञ्चाहानि तिरिच्यन्ते दिनानि भृगुनन्दन ॥

सौरसेन । पु॰ देशविशेषे । यथा । मागधादुत्तमा गौतुन्दिस्यात्पश्चिमस्तु शिवे । सौरसेनाभिधो देशः सूर्य्यवंश प्रकाशकः ॥

सौरसेय । पु॰ कार्त्तिकेये । स्कन्दे ॥ सुरसायाअपत्ये ॥

सौरसैन्धव । त्रि॰ गङ्गासम्बन्धिनि ॥ सुरसिन्धोरयम । अण् । हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य चेत्युभयपदवृद्धिः ॥

सौराष्ट्र । पु॰ देशविशेषे ॥ कोङ्कणात्पश्चिमतीर्थं समुद्रप्रान्तगोचरम् । हिङ्गुलाजान्तको देवि देशस्तु योजनदेशकः । सौराष्ट्रदेशो देवेशि सस्मात्तु गुर्ज्जराभिधः ॥ कुन्दुरुके ॥ न॰ कांस्ये ॥

सौराष्ट्रकम । न॰ पञ्चलौहे ॥

सौराष्ट्रमृत्तिका । स्त्री॰ काक्ष्याम् । तुवर्याम् । फटकरी॰ इ॰ भा॰ प्र॰ ॥

सौराष्ट्रा । स्त्री॰ तुवर्याम् ॥

सौराष्ट्रिकः । पु॰ विषप्रभेदे । सौमल्खार॰ सङ्खिया॰ इ॰ भा॰ प्र॰ ॥ सुराष्ट्रविषयेजातत्वात्सौराष्ट्रिकउच्यते ॥ त्रि॰ सुराष्ट्रजे सुराष्ट्रदेशविशेषभवे । अध्यात्मादित्वात् ठञ् ॥

सौराष्ट्री । स्त्री॰ सौराष्ट्रमृत्तिकायाम ॥ स्फटिकायांतुवरा सर्वसौराष्ट्राअपिकीर्त्तिता ॥ सुराष्ट्रेभवा । अण् । ङीप ॥ सौराष्ट्रीकफपित्तघ्नीविसर्पव्रणनाशिनी ॥

सौरि । पु॰ शनैश्चरे । शनिग्रहे ॥ सूरस्यार्कस्यापत्यम् । अतइञ् । श्रीकृष्णे । सूरो यादवेन्द्रस्तस्य नप्तृतिमधुमाधवौ । सचवसुदेवस्यापिता । तद्वयस्यात्॰ सौरिः कृष्णः । कृष्णस्त्वेपितामहादेराकृतिगणत्वादिञ् असनवर्णे ॥ आदित्यभक्तायाम् ॥

सौरिकः । पु॰ स्वर्गे ॥ न॰ सुरानिमित्तधने ॥

सौरिरत्नम् । न॰ नीलमणौ ॥

सौरी । स्त्री॰ रश्मौ । सूर्य्यकरणे ॥ सूर्य्यस्येयम् । अण । ङीप् । सूर्य्यतिष्येतियलोप ॥

सौव । त्रि॰ स्वकीये ॥ स्वस्येदम । अण् ॥

सौवर्चलम । न॰ सर्ज्जिकाक्षारे ॥ सुवर्च्चलायाइदम् । तस्येदमित्यण् ॥ सचार॰ इ॰ प्र॰ लवणं । कृष्णलवणे । अक्षे । रुचिके । सुवर्च्चले । वर्च्चके । इषादित्वात्कलच ।

प्रज्ञाद्यण् ॥

सौवर्ण । त्रि० सुवर्णस्य विकारे कटकादौ ॥ तस्य विकार इत्यर्थे जातरूपेभ्यः परिमाणे इत्यण् ॥

सौवर्णभेदिनी । स्त्री० प्रियङ्गौ ॥

सौवर्णी । स्त्री० गाम्भार्य्याम् । सुवर्णपुष्प्याम ॥

सौवस्तिक । पु० पुरोहिते ॥ त्रि० स्वस्तिकृति ॥

सौविद । पुं० राज्ञामागारे वर्षधराधिकृते । सौविदल्ले । कञ्चुकिनि । स्थापत्ये ॥ यद्वि सम्प्रश्नोनामत्त पुरस्त्रीणां प्रेक्षकपुरुषान्तर वारणाय राज्ञामागारे ये वर्षधरा नियुक्तास्ते वर्षसंज्ञका सौविदल्लादि शब्दवाच्याः । सुष्ठु वेत्ति । विदज्ञाने । इगुपधेति कः । सुविदएव । प्रज्ञादित्वात्स्वार्थेऽण् । यद्वा । सुविदस्य तुराः स्त्रियस्तासामयं रक्षकः । तस्येदमित्यण् ॥

सौविदल्ल । पु० सौविदे ॥ सुष्ठु विदन्त विदांसमपि० लान्तिवर्षवर्णिन कुर्वन्ति सुविदल्ला । तासामय रक्षक । तस्येदमित्यण् ॥

सौवीर । पु० देशान्तरे । कुमायश्च ॥ शूरसेनात्पूर्वभागे गङ्गाया पश्चिमेऽत्रैव । सौवीरदेशादेवेविसर्वदेशा धर्मात्रस. ॥ न० काञ्जिके ॥ यथा । सौवीरस्तुयवैरामैः पक्वैर्वानिस्तुषैः कृतम् । गोधूमैरपिसौवीरमाचार्याः केचिदूचिरे । सौवीरन्तुग्रहण्यर्शः कफघ्नभेदिदीपनम । उदावर्त्ताङ्गमर्द्दास्थिशूलानाहेषु शस्यते ॥ स्रोतोञ्जने । सौवीराञ्जने ॥ बदरीफले । मधुरे ॥ यथाह । पच्यमानं सुमधुरं सौवीरं बदरं महत् । सौवीरं बदरं शीतं भेदनं गुरुशुक्रलम । बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणमिति ॥ सुवीरदेशभवम् । तत्र भवइत्यण् ॥

सौवीरक । न० सुवीराम्ले । काञ्जिके ॥ पु० बदरवृक्षे ॥

सौवीरसारम् । न० स्रोतोञ्जने ॥

सौवीराञ्जनम् । न० स्रोतोञ्जने । सुरमा इति भा० प्र० । सौवीरइतदञ्जनञ्च ॥ यथा । सौवीराञ्जनमिद ममवत्स्वपार्श्वे विन्यस्त [illegible] कयाचयत् । तन्नून मलिनमपिस्व दयितस्य [illegible] मिवाथितिवाङ्करोमानसोपूजा ॥

सौशब्द । पुं० गुणविशेषे ॥ लक्षणं यथा सुप्तिङन्तपरंवृत्ति सौशब्दमिति ॥

सौष्ठवम् । न० सुष्ठुतायाम ॥ सुष्ठु भाव । युवादित्वादण् ॥

सौस्नातिक । त्रि० सुस्नातप्रश्नकर्त्तरि ॥ सुस्नातं पृच्छति । पृच्छतौ सुस्नातादिभ्यइतिठक् ॥

सौहार्द्द । पुं० मित्रतनये ॥ सुहृ

रादिषु स्थितवराङ्गीस्तनयुगमुपधत्ते य
त्स्तनालिङ्गनतदिति ॥

स्तनितम् । न॰ गर्जिते । मेघनिर्घोषे ॥ स्तनगदौ देवशब्दे । भावे क्त ॥ त्रि॰ शब्दिते ॥

स्तनितफल॰ । पु॰ विकङ्कटवृक्षे ॥

स्तन्यम् । न॰ दुग्धे ॥ स्तने भवम् । शरीरावयवाद्यत् ।

स्तब्ध । त्रि॰ साभिमाने । अविनीते । अप्रगल्भभावे । अनम्रे । गुरुदेवतादिष्वप्यनम्रे ॥ स्तम्भिते । जडीकृते ॥ स्तम्भ॰ । क्त ॥

स्तब्धरोमा । पुं॰ वराहे । सूकरे । घोषिणि ॥ स्तब्धानि॰ अनम्राणि रोमाण्यस्य ॥

स्तम्ब । पुं॰ गुल्मे । स्कन्धरहिते॰ अप्रकाण्डद्रुमे ॥ तृणधान्यादिगुच्छे ॥ व्रीह्यादीनामप्रकाण्डे ॥ आलाने ॥ तिष्ठति॰ अचया । ष्ठा॰ । अस्तोऽम्बजवकाविस्थम्बच्॰ तिष्ठते स्तादेशश्च ॥ घञादौ ॥

स्तम्बक । पु॰ स्तम्बे ॥ स्वार्थे॰ यावादिभ्य॰ कन् ॥

स्तम्बकरिः । पुं॰ धान्ये ॥ स्तम्बं करोति । स्तम्बशकृतोरिन् । व्रीहिवत्सयोरिति वक्तव्यम् ॥ त्रि॰ स्तम्बकर्त्तरि ॥

स्तम्बकार । पु॰ गुच्छकारके ॥

स्तम्बघ्न । पु॰ स्तम्बघ्ने ॥

स्तम्बघन॰ । पुं॰ स्तम्बघ्ने । तृणादिगुच्छोन्मूलनसाधने ॥ स्तम्बस्तुच्छ स्तम्बघन॰ हन्यतेऽनेन । घञर्थे कः॰ मूर्धन्यत्वम् । स्तम्बस्य घातकत्वात् । हन्तेर्घनादेशः ॥ स्तम्बकर्णे शब्देषु अप्यत्र इति धात्वादेश ॥ नीवारादिग्रहणार्थं क्षुद्रपात्रे ॥

स्तम्बघ्न । पुं॰ तृणाद्युन्मूलनखनित्रादौ । स्तम्बघने ॥ स्तम्बो हन्यते॰ येन । स्तम्बे कर्षिणि क॰ ॥ नीवारादिग्रहणार्थं खनित्रपात्रे ॥

स्तम्बपुर् । स्त्री॰ पुरीभेदे । ताम्रलिप्ते । विष्णुगृहे । तमोलुक्॰ कू॰ भा॰ प्र॰ देशि ॥

स्तम्बहननम् । } न॰
स्तम्बहननी । } स्त्री॰ स्तम्बघ्ने ॥

स्तम्बेरम । पु॰ दन्तिनि । हस्तिनि । कृभे । स्तम्बे रमते । रमु॰ । स्तम्बकर्णयोरमिजपोरित्यच् । हस्तिसूचकयोरिति वक्तव्यम् । अन्यत्र स्तम्बरन्ता । तत्पुरुषे कृतीति॰ हलदन्तादिति सप्तम्या अलुक् ॥

स्तम्भः । पु॰ स्थूणायाम् । थम्भ॰ भा॰ ॥ जडत्वे । आश्चर्ये ॥ स्तम्भाति । स्तम्भुधने । पचाद्यच् । भावे घञ् ॥ गतिनिरोधे । निष्कृतिभक्तायाम् ॥ गर्वे ॥

स्तम्भकर॰ । पु॰ वेष्टने ॥ त्रि॰ स्थूणाकारके ॥ जाड्यकारके ॥

स्तेयम् ... कौशितम् ॥ अपि च। अन्यायेन परस्वग्रहणं स्तेयम्। इति स्मृतिः ॥ स्तेनस्य भावः कर्म वा। स्तेनाद्यन्नलोपश्च ॥ महापातकेषु ब्राह्मणस्वर्णहरणं ॥ निचोपपातकेषु रत्नरजतस्वर्णभूमिवज्रमणीनाम् रत्नस्तेयसञ्ज्ञकम् ॥

स्तेयफल । पु॰ काण्टकी । तेजफले ॥

स्तेयी । पुं॰ चौरे ॥ स्वर्णकारे ॥ स्तेयमस्यास्ति । अतइनि ॥

स्तैनम् । न॰ स्तेये ॥

स्तैन्य । पु॰ चौरे ॥ न॰ स्तेनस्य भावे कर्मणि च । चौर्ये ॥ स्तेनस्य भावः कर्म वा । स्तेनाद्यन्नलोपश्चेत्यत्र॰ स्तेनादिति योगविभागात् ष्यञ् ॥

स्तैमित्यम् । न॰ जडतायाम् ॥ शरीरस्याद्रर्चर्मावगुण्ठितत्वमिति वैद्याः ॥

स्तोक । पुं॰ चातके ॥ त्रि॰ अल्पे ॥ स्तुच्यते । ष्टुच प्रसादे । घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ स्तूयते वा । बाहुलकात्तुन् क ॥

स्तोकक । पु॰ चातके ॥ स्तोकं जलमस्य ॥ स्तोकं कायति वा । कै शब्दे । आतोनुपेति क ॥

स्तोतव्य । त्रि॰ स्तवनीये । स्तुत्ये ॥

स्तोता । त्रि॰ स्तवकर्त्तरि ॥ स्तौति ष्टुञ् । तृच् ॥

स्तोत्रम् । न॰ स्तवे ॥ स्तूयतेऽनेन ष्टुञ् । दाम्नीतिकरणे ष्ट्रन् । तितुत्रेतिनेट् ॥ प्रगीतमन्त्रसाध्यायां स्तुतौ । छन्दोगादिनागीयमानेऋग्जाले । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रमिति याज्ञिकानां व्यवहारः ॥

स्तोभ । पु॰ न॰ अर्थशून्ये वर्णे ॥ स्तोभ आत्मानं विच्छेदहेलनेऽस्तम्भेऽपि चेति हेमचन्द्रः ॥ साङ्ख्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुरित्यत्र॰ स्तोभः गीतालापपूरणार्थोऽक्षरमिति श्रीधरस्वामिनः ॥

स्तोभित । त्रि॰ प्रोत्साहिते ॥

स्तोम । पुं॰ समूहे । यज्ञे । स्तोत्रे ॥ स्तूयतेऽनेन । ष्टुञ् । अर्त्तिस्तुसुहुतिमन् ॥ सोमयागे छन्दोगैः क्रियमाणायां पृष्ठादिसञ्ज्ञकायां स्तुतौ ॥ मन्त्रसमूहे ॥

स्तोमचारः । पु॰ सर्षपारे ॥

स्तोमवल्ली । स्त्री॰ काण्डीरे । नासासवेदने । काण्डवेल॰ इ॰ गौ॰ भा॰ प्र॰ लताप्रभेदे ॥

स्तौपिकम् । न॰ बुद्धद्रव्ये । चीना॰ इ॰ भा॰ प्र॰ ॥

स्त्यानम् । न॰ स्निग्धे ॥ प्रतिध्वानि ॥ घनत्वे ॥ आलस्ये ॥ स्त्यैष्ट्यै शब्दसङ्घातयोः । क्तः ॥ अकर्म

ग्यतायाम् । गुरुणाभिख्यमाणस्या ष्यासमाद्दिकर्मनिहृ॑तायामितिया वत ॥ निरुये ॥

स्त्येन । पु॰ चेरि । अस्तृते । सुधायाम् । स्त्यायति । स्त्यै॰ । स्या स्त्याहृतविभ्यश्नच ॥

स्त्री॰ । स्त्री॰ स्तनकेशवत्याम् । अस्या पर्यायायथा । स्त्रीयोषिदवलायोषानारीसीमन्तिनी-वधू । प्रतीपदर्शिनीवामावनितामहिलातथेति ॥ स्त्यायतिगर्भोऽस्याम् । स्त्यै॰ । स्त्यायतेड्रट् । टिलोप । यलोप । टिड्ढेतिङीप ॥ वृषकर्कन्याद्वश्चिकमकरमीनराशिषु ॥ छन्दःकथ मेदे ॥ गीस्त्री । यथा । शैपस्त्रीभि । क्लृप्तोरिमे ॥ देवतिर्यङ्मनुष्येषुपुन्नामाभगवान्हरि॰ । स्त्रीनाम्नीलक्ष्मीमैत्रेयनान्येविद्यतेपरमितिविष्णुपुराणम् ॥ प्रजनार्थंमहाभागा पूजार्हागृहदीप्तय । स्त्रिय श्रियश्चगेहेषु नविशेषोस्तिकश्चन ॥

स्त्रीकरण । न॰ रतबन्धे ॥

स्त्रीगवी । स्त्री॰ धेनौ ॥

स्त्रीचित्तहारी । पु॰ मिग्री ॥ त्रि॰ नारीमनोहारिणि ॥

स्त्रीचिह्नम् । न॰ भगे । योनौ॥ स्त्रीणामवाच्यदेशश्मश्रुराहित्यादिवच्च । चभेदेपिभगेमेद्रोत्मन : प्रायेणवजस्यते । चम्मखण्ड द्विधाभिन्नमपानोद्गारधूपितम् । येरमन्तेनमस्तेभ्य साहसकिमत परम् ॥ नारीलक्षणे ॥ स्त्रिया चिह्नम्

स्त्रीचेष्टितम् । न॰ स्त्रीणांव्यवहारे ॥ नासाग्रातिविषमचेष्टितत्वमुक्त यथा । सहंसाश्चैयोविनिगूहितेनविदूरथवैमहिषोजघान । विषप्रदिग्धेनचनुपुरेणदेवीविरक्ताकिलकाशिराजमिति ॥ तस्यास्त्ररितन्तुब्रह्मवैवर्ते प्रकृतिखण्डे १४ ऽध्याये द्रष्टव्यम् ॥

स्त्रीचौर । पु॰ कामुके । रतहिण्डके ॥ त्रि॰ योषिद्धर्षणे ॥ स्त्रिया चौर ॥

स्त्रीजित । पु॰ स्त्रैणे । स्त्रीवशीभूते ॥ वस्तुगत्यास्त्रीजितोयोनिन्दित सर्वथैवहि । यथा । सनिन्दितश्चाप्यशुचिश्च पुमांश्चस्त्रियाजित । निन्दन्तिपितरोदेवाबान्धवा । स्त्रीजितनरम ॥ स्त्रीजितमनसामातापिताभातावनिन्दतीति ॥ अपिच । शुध्येद्विप्रोदशाहेनजातकेमृतकेयथा । भूमिपोद्वादशाहेनवैश्य पञ्चदशाहत । शूद्रोमासेनवेदेषुमातृवद्गोनसङ्कर । अशुचि स्त्रीजित शुध्येच्चितादग्धमृतात ॥ नएहृगन्तीच्छयातस्य पितर पिण्डतर्पणम् । नगृहन्

न्तिवटेवाश्वत्थपुष्पफलादिकम् ॥ स्नानेनचि किं तपसा जपहोमप्रपूजने । विधवाचैव यच्च सा स्त्रीभिर्यं स्य मोक्तमिति श्रीदेवीभागवतीतुलस्युपाख्यानम् ॥ तत्र स्वर्गोऽपि निषिद्धः । यथा । स्त्रीजितस्य च मात्र पातकं पुण्यं प्रणश्यति । नभसोपातकोपापात् पापिनां स्त्रीजितात परः ॥ इति । स्त्रियाजितः ॥

स्त्रीधनम् । न० स्त्रियाः स्वं स्त्रीधनम् तद्धर्मे । यस्मिन् धने पतिनिरपेक्षतया स्त्रियाअधिकारस्तद्धनम् ॥ तद्विधा । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति ॥ मनुश्च । अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ नारदोपि । अध्यग्न्यध्यावाहनिकं भर्त्तुर्दायस्तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥ याज्ञवल्क्यः । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम् ॥ तदेवमव्यवस्थितसङ्ख्यस्त्रीधनकीर्त्तनान्न षट्त्वसङ्ख्याविवक्षिता । किन्तु स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि । तदेव च स्त्रीधनं यत्र दत्तं स्वातन्त्र्यपदानविक्रय भोगान् कर्त्तुमधिकरोति । यदिद किञ्चित् सङ्क्षिप्याह कात्यायनः । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः । भर्त्तुः स्वाम्यं भवेत्तत्र शेषं तु स्त्रीधनं स्मृतम् । अन्यतइति । पितृमातृभर्तृकुलव्यतिरिक्तात् । यल्लब्धम् । शिल्पेन व्यापारेणार्जितम् । तद्भर्त्तुः स्वाम्यम् । स्वातन्त्र्यम् । अनापद्यपि भर्त्ता ग्रहीतुमर्हति । तेन । स्त्रियाश्च पि धनं न स्त्रीधनमस्वातन्त्र्यात् । एतद्व्यतिरिक्तधनन्तु । स्त्रिया एव । दानाद्यधिकारात् ॥ कुलार्णवसंहितोक्तमहानिर्वाणे श्रीसदाशिव । पितृभिः श्वशुरैर्वापि दत्तं यद्धर्म्मसम्मतम् । स्वशक्त्योपार्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितमिति ॥ स्त्रियाः । धनम् ॥ न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णव इति दायभागः । प्रभविष्णवः । प्रभवः ॥

स्त्रीधर्म्मः । पुं० । ऋतौ । पुष्पे । आर्त्तवे । रजसि ॥ स्त्रीणामनुष्ठेये ॥ तत्र मनुः । बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि ॥ बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने । पुत्राणां भर्त्तरि प्रेते न भजेत्

स्त्रीस्वतन्त्रताम् ॥ पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः । एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे कुले ॥ सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः । तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥ मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः । प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ अनृतावृतुकाले च मन्त्रसंस्कारकृत् पतिः । सुखस्य नित्यं दातेह परलोके च योषितः ॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्ज्जितः । उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम् ॥ कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । नतु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे । न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥ पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते । निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते ॥ व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् । शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ पतिं या नाभिचरति मनोवाग्देहसंयता । सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥ अनेन नारी वृत्तेन मनोवाग्देहसंयता । इहाग्र्यां कीर्त्तिमाप्नोति पतिलोकं परत्र च ॥ इति मानवे धर्म्मशास्त्रे ५ अध्यायः ॥

स्त्रीधर्म्मिणी । स्त्री॰ ऋतुमत्याम् ॥ स्त्रीधर्म्मो रजोऽस्त्यस्याः । अतइनिठनाविति इनिः । ङीप् ॥

स्त्रीधव । पुं॰ पुरुषे ॥

स्त्रीपर । पुं॰ कामुके । षिड्गे ॥

स्त्रीपण्योपजीवी । पुं॰ सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तद्धनोपजीविनि ॥

स्त्रीपुंसौ । पुं॰ २ मिथुने । द्वन्द्वे ॥ स्त्री च पुमांश्च । अचतुरेत्य॰ ॥

स्त्रीपुंसलक्षणा । स्त्री॰ पेटायाम् ॥

शाय्यसौ । स्थण्डिलेकुशाय्यावतीस्थ
ण्डिलेशेते । व्रते॰ णिनि ॥

स्थण्डिलसितकम् । न॰ वेद्याम् ॥
शु॰ हा॰ वी ॥

स्थण्डिलेशय । पुं॰ स्थाण्डिले ॥
व्रतेनस्थण्डिलेशेते । शीङ्॰ अधि
करणेशेतेरित्यच् । अलुक् ॥

स्थपति । पु॰ बृहस्पतौ । बृहस्पति
सवकर्त्तरि । जीवेष्टियाजके । स
मीष्पतीष्ट्यास्थपतिरित्यमर । स
यजेतिसम्बन्ध ॥ कुबेरे । कञ्चु
किनि । सौविदे । यज्वनि ॥ का
रुभेदे । शिल्पिविशेषे । राज॰ था
मो॰ शु॰ भा॰ प्र॰ ॥ तल्लक्षणं य
था । वास्तुविद्याविधानज्ञोलघुह
स्तोजितश्रम । दीर्घदर्शीचशूरश्च
स्थपति परिकीर्त्तित इति ॥
स्थानस्थ । सुपिस्थ इत्यच॰ स्थ
इतियोगविभागात्क । स्थप
ति । यद्वा । तिष्ठन्त्यस्मिन् ।
ष्ठा॰ । घञर्थेक । स्थासौपति
श्च ॥ त्रि॰ असमे ॥

स्थपुट । त्रि॰ विषमोन्नते ॥ विष
मसञ्चारजीविनि ॥

स्थलम् । न॰ जलशून्याकृत्रिमभूभा
गे । स्थल्याम् ॥ स्थलति । स्थल॰
। पचाद्यच ॥ वस्त्रगृहे ।

स्थलकन्द । पु॰ वन्याख्यकन्दे । वन
शोलङ्घितभावप्र॰ ॥

स्थलकमलम् । न॰ स्थलपद्मे ॥

स्थलकुमुद । पु॰ करवीरे ॥ शु॰
रा॰ वट ॥

स्थलपद्म । पुं॰ मानके । मान
कच॰ शु॰ भा॰ । न॰ पुष्प
प्रभेदे । छत्रपत्रे । तमालके ॥ प्र
पौण्डरीके ॥ स्थलपद्म साधुपुष्प
इष्टिकान्तपुण्डरीयकमितिरभस ॥

स्थलपद्मनी । स्त्री॰ स्थलपद्म्यां ॥

स्थलपाकजम् । न॰ पक्वमांसविशेषे
॥ यथा स्थलेनपाचयन्मांसतज्
ज्ञेयं स्थलपाकजम् ॥

स्थलमञ्जरी । स्त्री॰ अपामार्गे ॥

स्थलविहङ्गम । पु॰ मयूरादौ ॥
स्थलश्चविहङ्गम ॥

स्थलशृङ्गाट । ) पु॰ गोक्षुरे ।
स्थलशृङ्गाटक । )

स्थलसीमा । पु॰ स्थण्डिले ॥

स्थला । स्त्री॰ पुरुषेणाकृतायां
भूमौ । स्थलति । स्थल॰ । प
चाद्यच् । टाप ॥

स्थली । स्त्री॰ अकृत्रिमायाम्भूमौ
॥ जानपदेत्यादिङीष् ॥

स्थलेरुहा । स्त्री॰ घृतकुमार्याम् ।
दग्धायाञ्च । त्रि॰ स्थलजाते ।
स्थलेरोहति । रुह॰ । इगुपधेति
क । तत्पुरुषेकृतीत्यलुक ॥

स्थलेशय । पु॰ कृताद्दौ ॥ स्थ
लेशेते । अधिकरणेशेतेरित्यचोऽ

टितत्वेन स्थातमितमलमासत्वम् ॥

स्थालीबिलम । न० पाकपात्रस्याभ्यन्तरे । तथाख्यात शून्यभागे ॥

स्थालीबिलीय । ) स्थालीबिल्य । ) त्रि० पाकयोग्यतण्डुलादौ ॥ स्थालीबिलमर्हतीत्यर्थे । स्थालीबिलादिति० छ्रमेणच्छयतौ ॥

स्थालीवृक्ष । पु० मन्दोदक्ष । अश्वत्थभेदे । बेलियापीपर० इ० भा० प्र० ॥

स्थावर । पु० पर्वते ॥ न० धनुषि । कोदण्डे ॥ त्रि० जङ्गमेतरे । अचलवस्तुनि ॥ स्थितिशीले ॥ स्थानशील अर्थे अभासि तिवरच् ॥

स्थावरमुस्त । पु० एकस्थानस्थितिपद्मातसमूहे । धाना० इ० भा० प्र० ॥ स्थावरसारमुस्तम ॥

स्थावरादि । न० वत्सनाभविषे ॥

स्थाविरम् । न० स्थविरत्वे ॥ ततुसमस्थविरोत्तर भवति । यथा । अषिः छगाङ्गवितातस्तरणास्ततव्यति । हह स्थातृसमतेरूदृ वर्षोयानृनश्रती परमितासम्मृति ॥ स्थविरस्य भाव कर्म वा । युवादिश्वादण् ॥

स्थासक । पु० चार्चिक्ये ॥ जलादिबुद्बुदे ॥ बुद्बुदाकारमण्डले ॥ हस्तविम्ब तत्र निर्मीयमद्राया

म् । सांवा० इ० भा० प्र० ॥ तिष्ठति । ष्ठा० । बाहुलकात् स्वार्थे कन् ॥

स्थास्नु । त्रि० स्थिरतरे ॥ स्थानशील । ग्लाजिस्थश्चगस्नुः ॥ स्थायिनि ॥ भ्राजते इत्यर्थे ॥

स्थिक प० स्फिटप्रोथे । इ० म० र० ली ॥

स्थित । त्रि० प्रतिज्ञातवति । सप्रतिज्ञे । ऊर्ध्वे । निश्चले । स्थिरे । वर्त्तमाने । समुत्थिते ॥ ष्ठा० । क्त । द्यतिस्यतिमास्थामित्तिकारान्तादेश. ॥ मर्यादयान्विते ॥ निवृत्तिगतिकोयोस्तस्थित. प्रोच्यते जन ॥

स्थितधी । त्रि० स्थितप्रज्ञे । स्थिता निश्चला धीर्यस्य ॥

स्थितप्रज्ञ । त्रि० असम्मूढ । परमात्मयाथात्म्यविदुषि ॥ स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य ॥ स्थिता निश्चला० अहं ब्रह्मास्मीति प्रज्ञा यस्य वा । अथ च श्रूयते ॥ भगवद्वाक्यम् । प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥

स्थिति । स्त्री॰ अवस्थाने । ऊर्द्ध्वावस्थाने ॥ मर्यादायाम् । न्यायपथस्थितौ । सत्तायाम ॥ ईश्वरेच्छानिरुद्धस्य सर्वेषामवस्थानेऽधरेनियोगस्थापने ॥ विद्यमानतायाम् सृष्टिप्रलययोर्मध्ये ॥ सीमनि ॥ स्थानम् । क्षा॰ । स्थानापायाभावे॰ ष्ठितिशिन् ॥ तिष्ठ अवधा । बाहुलकाद्धिकरणे क्तिन ॥

स्थितिस्थापक । पु॰ संस्कारविशेषे । अन्यथाकृतस्य पुनस्तदवस्थापादके घटादिपृथिवीवृत्तौ ॥

स्थिर: । पुं॰ शनैश्चरे । मोक्षे ॥ देवे ॥ नगे । पर्वते ॥ वृक्षे ॥ कार्त्तिकेये ॥ धववृक्षे ॥ वृषे ॥ वृषसि वृक्षविकुम्भरादिषु ॥ न॰ नक्षत्रविशेषेषु ॥ यथा । उत्तरात्रयरोहिण्योम्भास्करस्य भुव स्थिरम् । तत्र स्थिरबीजगेह शान्त्यारामादि सिद्ध्यतीति ॥ त्रि॰ कठिने ॥ अचले ॥ दृढप्रयत्ने ॥ रसाद्यैरनश्वरत्वात्स्थायिनि शरीरे ॥ तिष्ठति । ष्ठा॰ । अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा॰ । इतिकिरच्॰ टिलोप ॥ षड्भावविकाररहितसद्रूपे ॥

स्थिरकर्म्मा । त्रि॰ आफलोदयकारिणि ॥

स्थिरगन्ध: । पु॰ चम्पके ॥ त्रि॰ स्थिरस्थायिसौरभयुक्ते । स्थिरोगन्धो यस्मिन् ॥ *

स्थिरगन्धा । स्त्री॰ पाटलायाम् ॥ केतक्याम ॥

स्थिरचक्र । पु॰ मञ्जुघोषाभिधेजिनविशेषे ॥ त्रि॰ सुस्थसैन्ये ॥

स्थिरच्छद । पु॰ भूर्जपत्रे ॥ स्थिरा छदायस्य ॥

स्थिरच्छाय । पु॰ देवद्रुमे ॥ स्थिरा अचलाछाया यस्य ॥ वृक्षमात्रे ॥ छायावृक्षे ॥

स्थिरजिह्व । पु॰ मत्स्ये ॥

स्थिरजीविका । स्त्री॰ स्थिरवृत्ती ॥ शाल्मली ॥ त्रि॰ स्थिरवृत्तिमति ॥

स्थिरजीविता । स्त्री॰ शाल्मलिवृक्षे ॥

स्थिरतर । त्रि॰ स्थाणौ । स्थेयसि । अतिस्थिरे ॥ अतिशयेनस्थिर । द्विवचनविभज्येतितरप् ॥ एकरूपतयातिस्थिरे ॥

स्थिरदंष्ट्र । पु॰ भुजङ्गमे ॥ वराहाकृतिविष्णौ । ध्वनाविच्चजय: ॥

स्थिरदारु । पु॰ शाकवृक्षे ॥

स्थिरपत्र । पु॰ हिन्तालै ।

स्थिरपुष्प । पु॰ चम्पके ॥ बकुले ॥

स्थिरपुष्पी । स्त्री॰ तिलकद्रुमे ॥

स्थिरफला । स्त्री॰ कूष्माण्डाम ॥

स्थिरबुद्धि । त्रि॰ स्थिरप्रज्ञे । लब्धश्रवणमननफले ॥ सुस्थिरानिश्चलासन्यासपूर्वकवेदान्तवाक्यविचार

परिपाकेणसर्वं सम्बयशून्यत्वेनवि विधिशास्त्रानिषिद्धानाम्बुद्धि र्यस्य ॥

स्थिरमति । स्त्री॰ निश्चलायांबुद्धौ ॥ परमार्थवस्तुविषयायामतौ ॥ त्रि॰ तद्वति ॥ स्थिरापरमार्थव स्तुविषयामतिर्यस्य ॥

स्थिरयोनि । पु॰ द्रुमे ॥

स्थिरयौवन । पु॰ विद्याधरे ॥ त्रि॰ चिरस्थायितरुणावस्थे ॥ स्थिरयौव नमस्य ॥

स्थिररङ्गा । स्त्री॰ नील्याम् ॥

स्थिररागा । स्त्री॰ दारुहरिद्रायाम् ॥

स्थिरश्री । पु॰ विष्णौ ॥ त्रि॰ नि श्चलश्रीविशिष्टे ॥ स्थिराश्रीर्यस्मि न्॰ यथावा ॥ स्थिरोपायोहिवृक्ष स्य, स्थिरश्रीरेवजायते । पंचतु नैवयत्क्रीतिचपलाचपलाश्रियमिति मत्स्यपुराणम् ॥

स्थिरसाधनक । पुं॰ सिन्धुवारवृक्षे ॥

स्थिरसार । पुं॰ शाकवृक्षे ॥

स्थिरा । स्त्री॰ भुवि । धरित्र्याम् । विश्वम्भरायाम् ॥ शालपर्ण्याम् ॥ शाल्मलिवृक्षे ॥ तिष्ठति । इा॰ । अजिरशिशिरेत्यादिनाकिरच्॰ टि लोप । टाप् । काकोल्याम ॥

स्थिराङ्घ्रिप । पुं॰ ताललवृक्षे ॥

स्थिरायु । स्त्री॰ शाल्मलिद्रुमे ॥ त्रि रमायुर्यस्याः ॥ वर्षित्रयं सहस्रा

णिवनेजीवतिशाल्मलिरितिवचना त् ॥

स्थूणा । स्त्री॰ गृहस्याधारभूतेस्तम्भे काष्ठमयोहिस्तंपिं[illegible] काष्ठ्[illegible] भवति । स्थूणी॰ कू॰ भा॰ प्र॰ गृहपूर्व. स्थूणाशब्द स्त्रावि । यथागृहस्थू णमिति ॥ सूर्म्याम् ॥ तिष्ठति । इा॰ । रास्नासास्नेतिसाधु ॥ कृशम्यरे ॥ इतिहेमचन्द्र ॥

स्थूर । पुं॰ मनुष्ये ॥ तिष्ठति । इा॰ । स्थ किच्चेत्यूरन् ॥ स्थू रक्षरायइतिमर्ज्जतुयोगपुरस्कारात् स्थिरमेत्यर्थ ॥

स्थूरी । पु॰ खरवृषभवत्पृष्ठेनभा रवाहकेऽश्वे ॥

स्थूल । पु॰ शिरालि ॥ पनसे ॥ न॰ कूटे । समूहे ॥ त्रि॰ निषुप्र र्ज्जे ॥ जडे ॥ उपचितावयवे । पौ नि । पीवि । पीवरे । मोटा॰ कू॰ मा॰ ॥ सच्चूलशरीरे । चा त्मनउपाधिविशेषे ॥ स्थूलोदेहो ऽहमप्रत्ययादात्मेतिलोकायतभेद । तन्न । मृतसुषुप्तयोरपिसङ्घा ताविशेषाच्चेतन्यप्रसङ्गात् । एको वस्याचभूतस्यचैतन्यादर्शनात् । सङ्घातश्चावस्तुत्वात् ॥ स्थूलय ति । स्थूलपरिवृंहणे । चुरादर ल । पचाद्यच् ।

स्थूलक । पुं॰ तृणविशेषे । सूच्य

षे। खरच्छदे। उलुखड॰ वृ॰ नी॰ टै॰ भा॰ प्र॰॥ त्रि॰ स्थूले॥
स्थूलकङ्गु। पु॰ वरकधान्ये॥
स्थूलकणा। स्त्री॰ स्थूलजीरके॥
स्थूलकण्टक। पु॰ जालबर्बूरे॥
स्थूलकण्टकिका। स्त्री॰ शाल्मलिवृक्षे॥
स्थूलकण्टा। ) स्थूलकण्टिका। ) स्त्री॰ वृहत्याम्॥
स्थूलकन्द। पुं॰ हस्तिकन्दे॥ शूरणे॥ मानकन्दे॥ रक्तलशुने। रक्तसूरणे॥
स्थूलकाय। पुं॰ स्थूलशरीरे॥
स्थूलकाष्ठधृक्। पु॰ वृहत्काष्ठाग्नौ। स्कन्धानले॥
स्थूलकाष्ठाग्नि। पु॰ स्कन्धाग्नौ।
स्थूलच्चञ्चु। पुं॰ वार्षे॥
स्थूलकेश्वर। पु॰ सिद्धस्थानविशेषे॥ स्थूलाख्यात्स्थूलकेश्वरे॰वृ॰ तिदेवीगीता॥
स्थूलग्रन्थि। स्त्री॰ वचाप्रभेदे। महाभरा॰ वृ॰ भा॰॥
स्थूलचञ्चु। पु॰ महाचञ्चुशाके।
स्थूलचाप। पु॰ तूलपरिष्कारार्थे धनुषि। तूलचापे॥ वृ॰श॰र॰ली॥
स्थूलजीरक। पुं॰ कृष्णजीरके। उपकुञ्चिकायाम्। कलोञ्जो॰ मं॰गरैला॰ वृ॰ भा॰ प्र॰॥
स्थूलताल। पु॰ हिन्ताले॥
स्थूलत्वचा। स्त्री॰ काश्मर्याम्। गम्भार्याम्।
स्थूलदण्ड। पु॰ देवनले॥
स्थूलदर्भ। पु॰ मुञ्जे॥
स्थूलदला। स्त्री॰ घृतकुमार्याम्॥
स्थूलनाल। पु॰ देवनले॥
स्थूलनास। ) स्थूलनासिक। ) पु॰ शूकरे॥ त्रि॰ पीननासायुक्ते॥
स्थूलपट। पु॰ स्थूलशाटके। पटेति। पटगतौ॰ पटविस्तारेवा। पचाद्यच्। स्थूलश्चासौपटश्च॥ त्रि॰ स्थूलवस्त्रवति। यथा। कृश्यता स्थूलपटायवनौधूम्राशिन। प्रजायैपिनसीदन्तिवद्दिन्यानजायते॥
स्थूलपट्ट। पु॰ कार्पासे॥
स्थूलपट्टाक। पु॰ स्थूलवस्त्रे॥
स्थूलपाद। पुं॰ हस्तिनि॥ व्याधिनास्थूलचरणे॥
स्थूलपुष्प। पु॰ वकद्रुमे॥
स्थूलपुष्पिका। स्त्री॰ गिरिकापराजितायाम॥
स्थूलप्रपञ्च। पु॰ विराजि।
स्थूलफल। पु॰ शाल्मलिवृक्षे॥
स्थूलफला। स्त्री॰ शणपुष्प्याम्॥
स्थूलभद्र। पु॰ श्रुतकेवलिनामनि

ञ्जनभेदे ॥

स्थूलभुक । न० अद्दयुषितचैतन्ये० विश्वशब्दाभिधेये ॥ स्थूलान्विषयान्भुङ्क्ते । भुज० । क्विप् ॥

स्थूलभूतम् । न०पञ्चीकृताकाशादिभूते अपञ्चीकृतानामेवभूतानांपरस्परव्यवहार्योग्यनिकायव्यवहारनिर्वाहकतदीयधर्माधर्मापेक्षपरमेश्वरसान्निध्यादिनिमित्तापेक्षयाविभागेनमिलितानांस्थूलतापन्नौ । पञ्चीकृतभूते ॥

स्थूलमरिचम् । न० कक्कोलि ॥

स्थूलमूलम् । न० चोरकयमूलके ॥

स्थूलल्लक्ष' । त्रि० बहुदान्ये ॥ स्थूलैर्महद्भिर्लक्ष्यते । लक्ष० । कर्मणिघञ् ॥

स्थूललक्ष्य । त्रि० दानशौण्डे । बहुप्रदे । बहुदान्ये ॥ स्थूलकूट लक्ष्यम् ॥ स्थूलैर्महद्भिर्लक्ष्यतेवा । लक्ष० । कर्मणियत् ॥

स्थूलवल्कलम् । पु० ब्रह्मयष्ट्याम् ॥

स्थूलवल्कल । पु० रक्तलोध्रे ॥

स्थूलवृक्षफल । पु० मदनवृक्षविशेषे । शिग्धविधशोलके ॥

स्थूलवैदेही । स्त्री० गजपिप्पल्याम ॥

स्थूलशर । पु० महाशरे । सुरपर्णे ॥

स्थूलशरीरम् । न० आत्मनउपाधिविशेषे । अन्नमयकोषे ॥ यथा । रसादिपञ्चीकृतभूतसम्भव भोगालयं सुखदुःखादिकर्मणाम् । शरीरमाद्यन्तवदादिकर्मज मायामयं स्थूलमुपाधिरात्मन ॥

स्थूलशाटक । पु० स्थूलवस्त्रे । वराशौ ॥ शटति । शटरुजादौ वल् । स्थूलश्चासौशाटकश्च ॥

स्थूलशाटका । )
स्थूलशाटिका ) स्त्री० स्थूलवस्त्रे
स्थूलशाटि । )

। वराशौ ॥

स्थूलशालि । पु० महाशालौ । स्थूलतण्डुले ॥

स्थूलशिरा । पु० ऋषिविशेषे ॥ न० वृहन्मस्तके ॥ त्रि० तद्युक्ते ॥ स्थूलशिरोयस्य ॥

स्थूलशीर्षिका । स्त्री० क्षुद्रपिप्पलिकायाम् ॥

स्थूलषट्पद । पु० वरोलि । वोलता० कृ० गौ० भा० प्र० ॥

स्थूलस्कन्ध । पु० लकुचे ॥

स्थूलहस्त । पु० करिशुण्डायाम् । हस्तिहस्ते ॥ त्रि० पीनभुजे ।

स्थूला । स्त्री० स्थूलैलायाम् । कृष्णपिपीलिकायाम् । गन्धपत्रायाम । एर्वारौ ॥ गजपिप्पल्याम् ॥ स्थूलशीश्वरकार्यादिकायाम् ॥

स्थूलांशा । स्त्री० गन्धपत्रायाम ॥

स्थूलाक्ष : । पु॰ महाराजाम्रे ॥

स्थूलास्य । पु॰ सर्पे । त्रि॰ बृहन्मुखे

स्थूलैरण्ड । पु॰ महैरण्डे ॥ स्थूलैरण्डोगुणाढ्य स्याद्रसवीर्यविपाकिषु ॥

स्थूलैला । स्त्री॰ बृहदेलायाम् ॥ अस्यागुणायथा । स्थूलैलाकटुका पाकेरसेचानलकृल्लघु । रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा ॥ हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत् ॥

स्थूलोच्चय । पु॰ गण्डोपले । गण्डाश्मनि । स्थूलोपले ॥ असाकल्ये । अकात्स्न्र्ये ॥ वरण्डे ॥ गजानांमध्यमगतौ ॥ नीचैर्गतम्॰ स्थूलोच्चय॰ वीथिमार्ग इतिति कोहस्तिगतय ॥ उच्चयनम् । चिञ्॰ । एरच । स्थूलस्योच्चय । गजानांदन्तरन्ध्रे ॥

स्थेमा पु॰ स्थैर्ये । स्थिरस्यभावः पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिस्थादेश ॥

स्थेय । पु॰ विवादपदस्यनिर्णेतरि । अचहरिणि । प्राड्विवाके ॥ तिष्ठत्यस्मिन्विवादपदनिर्णयार्थम् । ष्ठा॰ । बाहुलकादधिकरणे॰ अचोयत् । ईद्यति ॥ पुरोधसि । त्रि॰ अतिस्थिरे ॥

स्थेयान् । त्रि॰ स्थास्नौ । स्थिरतरे ॥ अयमनयोरतिशयेनस्थिर । द्विवचनविभज्योपपदेतरबीयसुनावितीयसुनि॰ प्रियस्थिरेतिस्थादेश ॥ स्त्री॰ स्थेयसी ॥

स्थेष्ठ त्रि॰ स्थिरतमे ॥ अयमेषामतिशयेनस्थिर । अतिशायनेतमबिष्ठनावितीष्ठनि॰ प्रियस्थिरेतिस्थादेश ॥ सुस्थिरे ॥

स्थैर्य्यम् । न॰ स्थिरत्वे । अचञ्चलत्वे । मोक्षसाधनेप्रवृत्तस्यानेकविधविघ्नप्राप्तावपितदपरित्यागेनपुनःपुनर्यत्नाधिक्ये ॥ स्थिरस्यभाव । ष्यञ् । स्तब्धत्वे ॥

स्थोरी । पुं॰ भारवाहितुरगे ॥

स्थौणेयम् । न॰ गन्धपर्णप्रभेदे । कुक्कुरौंधास्यौषधौ । गांठयाला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यपर्यायागुणाश्चयथा । ईषत्सुगन्धिस्थौणेयगुनेर॰ इतिकि । स्थौणेयकं वर्हि वर्ह शुकवर्हं कुक्कुरम् । ग्रन्थिपर्णं राम शुकस्वापिशुकपुष्पं शुकच्छदम् ॥ स्थौणेयकं कटु स्वादुतिक्तं स्निग्धं त्रिदोषनुत् । मेधाशुक्रकर त्वच्यरक्षोऽग्निज्वरजन्तुजित् ॥ हन्तिकुष्ठास्रदाहतृष्णागन्धतिलकालकान्॰ इतिभा॰ प्रका ॥

स्थौणेयकम् । न॰ सुगन्धद्रव्यभेदे ।

वर्हिशिखि । स्त्रोणेये ॥

स्त्रौरी । प० खरवृषभवत् पृष्ठेनभार वाहकोऽश्वो । पृष्ठ्ये । स्थ वस्त्रो द म् । तथ्ये दृमित्यय । रलयोरेक त्वम् । स्त्रौरवलमस्यास्ति । इति ॥

स्त्रौलल्यम् । न० वहुप्रदत्त्वे ॥ ॥

स्त्रौल्यम् । न० स्थूलत्वे ॥ स्थूलस्य भाव० । ष्यञ् ॥

स्नपनम् । न० अभिषिञ्चने ॥ स्नाने ॥ यथा । मूलनात् स्नपन श्रेष्ठ स्न पनात्तर्पं या स्मृतम् । तर्पणात्मा सद्दानन्तु मध्याजनिपातनमिति दुर्गोत्सवप्रकरणे तिथ्यादितत्त्वम् ।

स्नपित । त्रि० क्षालिते ॥ सिक्ते ॥ स्नातेण्यन्तात् क्तः । अभिषेकोत्या दिनाप्युक्त । मिताक्षरा । ॥ आ प्लुते ॥

स्नव : । पुं० स्रवे । स्रवणे । क्षरणे ॥ स्नवनम् । आप्रस्रवणे । स्नुदो रप् ॥

स्नसा । स्त्री० स्नायौ ॥

स्नात । त्रि० आप्लुते । कृतस्नाने ॥ यथा । स्नातोऽधिकारीभवतिदेवे पैत्रेचकर्मणि । अस्नातस्यक्रिया : सर्वा भवन्तिहियतोऽफला : ॥ प्रात : समाचरेत् स्नानमतोनित्य मतन्द्रित. ॥ इतिप्रायश्चित्ततत्त्वम् । स्नात्वाकर्माणिकुर्वीत । शिर : स्नातश्चकुर्वीतदैवंपित्र्यमथापिवेति

स्मृति . ॥ आप्लोवे । भावेक्त : ॥

स्नातक : । पुं० आप्लुतव्रतिनि । स मासवेदपाठे० अदृश्य । आश्र मान्तरगतेसमाप्तवेदव्रते । कृत स्नाने ॥ अत्राहहारीत : । त्रय : स्नातका भवन्ति । विद्यास्नातको० व्रतस्नातकोविद्याव्रतस्नातकश्चेति । तत्र य . समाप्यवेदमसमाप्यव्रता निसमावर्त्तते० सविद्यास्नातक : । य : समाप्यव्रतानि० वेसमाप्य वेद समावर्त्ततेसव्रतस्नातक : । य उभयं समाप्यसमावर्त्ततेसविद्याव्र तस्नातकोभवति ॥ अत्रभवन्तिच य पक्षा : । यथा । मन्त्रब्राह्मणा त्मक वेदमधीत्यावबुद्ध्यचस्नाया दित्येक पक्ष : । साङ्गवेदमधी त्यावबुद्ध्यचस्नायादित्यपर : । य त्समाक्षमप्यधीत्ययत्नविद्यास्नातकस्न स्नायादितितृतीय : पक्ष : । यच्च विद्याविरक्तोयत्समाप्तोऽधीतैनस्ना यादितिनिषेध : । यतोवेदाध्ययन वेदविहिताग्निहोत्रादिकर्मादानुष्ठा नप्रयोजनमिति ॥ स्नातिस्म । आ० । गत्यर्थाकर्मकेतिक्त : । स स्ना शांकन् ॥ यावादिषु० स्नातवेद समाप्ताविति पाठाद्वाकन् ॥ दृश्य ब्राह्मणे ॥

स्नानम् । न० मज्जने । आप्लावे । आ प्लवे ॥ स्नान षड्विध भवति । यथा

कारञ्जे । गुच्छकरञ्जे ।

स्निग्धपत्रा । स्त्री॰ बदर्याम् ॥ पालङ्क्याम् । काश्मर्याम् ॥

स्निग्धपर्णी । स्त्री॰ गम्भार्याम् ॥

स्निग्धपिण्डीतक । पु॰ मदनवृक्षविशेषे । स्थूलवृक्षफले ॥

स्निग्धफला । स्त्री॰ कर्कटीप्रभेदे । बालुङ्क्याम् । मूत्रलायाम् ॥

स्निग्धा । स्त्री॰ मेदायाम ॥

स्नु । पु॰ प्रस्थे । सानौ । पर्वतसमभूभागे । स्नौति जलम॰ । स्नुत वा । ष्णुप्रस्रावणे॰ आगमौचेभ्य । मितद्र्वादित्वात्॰ डु ॥ स्त्री॰ स्नयौ ॥

स्नुकछद । पुं॰ वीर । स्नुकीवृक्षे ।

स्नुत । त्रि॰ स्यन्न । स्नुतजलादौ । स्नुयतेस्म॰ । ष्णु॰ क्त ॥

स्नुषा । स्त्री॰ सुतस्त्रियाम् । पुत्रवध्वाम् । स्नौति । ष्णु॰ । स्नुनक्षि कृष्युषिभ्य षिदिति स॰ ॥ स्नुषाम् ॥

स्नुक् स्त्री॰ स्नुहाम् ॥ स्नुह्यति । ष्णुहउद्गिरणे । क्विप् । वाहुहेति कुत्वम । तदभावे हो ढ इति ढत्वे स्नुट स्नुड ॥

स्नुहा । स्त्री॰ स्नुहीवृक्षे ॥ भागुरिमते॰ स्नुहटाप् ॥

स्नुहि । स्त्री॰ स्नुहाम् । स्नुह्यति । ष्णुह॰ । सर्वधातुभ्यइन् ॥

स्नुही । स्त्री॰ सिहुण्डे ॥ इन्नन्तात्स्नुहि कृदिकारादितिपक्षे ङीष् ॥

स्नेह । पु॰ सौहृदे । प्रेम्णि । प्रियतायाम् ॥ तामसीय चित्तवृत्तिविशेष॰ यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते । अन्यविषय प्रेमापरपर्याय स्नेह ॥ यथा । स्मृत्वावियोगजदुःखं त्यज स्नेह प्रियेजने । अतिस्नेहपरिष्वङ्गाद्वर्त्तिरार्द्रापि दह्यतेइति । स्नेहयति प्रीणयति पुरुषम् । ष्णिह॰ । पचाद्यच् । स्निह्यन्ति पुरुषा यस्मिन् । अधिकरणार्थे॰ घञ ॥ घृतादिरसविशेषे ॥ यथा स्नेहश्चतुर्विध प्रोक्तोघृत तैल वसातथा । मज्जाच॰ तं पिबेन्मर्त्यं किञ्चिदभ्युदितेरवौ ॥ स्थावरोजङ्गमश्चैव द्वियोनि स्नेहउच्यते । तिलतैल स्थावरेषु जङ्गमेषु घृतं वरमिति ॥ द्रव्याश्रितस्तु भेदा॰ यमकाल्लिक्येमहान् ॥ न्यायमते॰ चूर्णादिपिण्डीभावहेतौ॰ गुणविशेषे॰ जलमात्रवृत्तौ ॥ जलीयपरिमाणवन्नित्योऽन्यत्वनित्य । तैलादावप्युत्कर्षोऽस्य तस्यैवाद्धि भवति । यथोक्तं भाषापरिच्छेदे । स्नेहोजलेऽसौनित्यो यमनित्योऽवयविन्यसौ । तैलान्त

इत्यत्प्रकर्षाद्दहनस्यानुकूलतेति ॥

स्नेहनम् । णिह॰ । भावेघञ ॥ स्निह्यतेऽनेन वा ॥ स्नेहस्यद्दुःखमूलत्वमुक्तगारुडे ११४ऽध्याये । यथा स्नेहाद्भयत स्नेहाद्दुःखभाजनम् । स्नेहमूलानिदुःखानि तस्मिंस्त्यक्ते महत्सुखमिति ॥ स्निग्धतायाम ॥ यथा । स्नेह प्रश्नसु लक्ष्मीर्वाग् जिह्वादन्तेषु नखस्य । सुतधनसौभाग्ययुता स्निग्धैस्तेनिर्धनारूक्षैरिति ॥

स्नेहा । पु॰ व्याधिप्रभेदे ॥ सहृदि ॥ चन्द्रे ॥ स्निह्यति । णिह॰ । श्वन्नुक्षनपूषन्निह्यादिना॰ कनिन॰ निपातनाद्बधश्च ॥

स्नेहनम् । न॰ तैलमर्द्दने । स्नेहने । अभ्यङ्गे ॥ स्निह्यतेऽनेन । णिह॰ । ल्युट ॥

स्नेहपानम् न॰ कुल्याम् । चर्मम ये तैलादिभाण्डे ॥ स्नेहस्य तैलघृतादेः पानम् ॥

स्नेहप्रिय । पु॰ प्रदीपे ॥ त्रि॰ तैलादिप्रिये ॥

स्नेहफल । पु॰ तिले । पादपे ॥

स्नेहभू । पु॰ श्लेष्मणि ॥ त्रि॰ स्निग्धभूमौ ॥

स्नेहरङ्ग । पु॰ तिले ॥

स्नेहवती । स्त्री॰ मेदायाम ॥ स्नेहोऽस्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । ङीप् ॥

स्नेहाश्रय । प॰ प्रिये । प्रदीपे ॥

स्नेहवस्ति । स्त्री॰ अनुवासनवस्तौ । तैलपिचकारी॰ इ॰ भा॰ ॥ यथा । वस्तिर्द्विधाऽनुवासाख्यो निरूहश्च तत परः । यः स्नेहैर्दीयते सस्यादनुवासननामक ॥

स्नेहबीज । पु॰ पियालवृक्षे ॥ त्रि॰ स्नेहकारणे ॥

स्नेहाश । पु॰ प्रदीपे । दीपे ॥

स्नेही । पु॰ वयस्ये ॥ त्रि॰ स्नेहयुक्ते ॥

स्नेहु । पु॰ व्याधिभेदे ॥ चन्द्रे ॥ स्निह्यति । णिह॰ । भृमृशीङ्स्निही त्यादिनाउ ॥

स्पन्द । पु॰ स्पन्दने । प्रस्फुरणे ॥ स्पन्दते । स्पदि किञ्चिच्चलने । पचाद्यच ॥

स्पन्दनम् । न॰ स्पन्दे । किञ्चिच्चलने ॥

स्पर्द्धक । त्रि॰ स्पर्द्धाकारे ॥

स्पर्द्धा । स्त्री॰ सङ्घर्षे । पराभिभवेच्छायाम् ॥ स्पर्द्धतेऽस्मिन्नस्ती ॥ साम्ये ॥ क्रमसमुन्नतौ ॥ स्पर्द्धसङ्घर्षे ॥ भिदाद्यङ् ॥

स्पर्द्धालु । त्रि॰ स्पर्द्धायुक्ते ॥ स्पर्द्धालाति । ला॰ । मितद्वादित्वात् डु ॥

स्पर्श । पु॰ रुजायाम ॥ सम्पर्के ॥

सन्तापे ॥ सपृशात । सपृशता धनसर्शनयो । पदरुजेत्यत्र॰ सपृशउपतापइतिकर्त्तरिघञ ॥ यथा, सपर्शनसपर्शं भाविघञ् ॥ दाशि ॥सपर्शके । काद्मिामामावर्गाचरे । उपतापे । रोगविशेषे । स्पर्शके ॥ मणिविशेषे । पारस॰ इ॰भा॰ प्र॰ ॥ त्वगिन्द्रियविषये । स्पर्शने । त्वगिन्द्रयमात्रग्राह्यो गुणविशेषे ॥ सचत्रिध । शीतोष्णानुष्णाशीतभेदात् । पृथिव्यपतेजोमात्रवृत्ति । तत्र शीतस्पर्श उष्णस्तेजसि । अनुष्णाशीत पृथिवीवायवो । रूपरसगन्धस्पर्शा पृथिव्यापाकजा ॰ अनित्याश्च । जलादावपाकजा ॰ नित्या अनित्याश्च । नित्यगतानित्या ॰ अनित्यगताअनित्या अयाहु । कठिन पार्थिव स्पर्श शीतो पाेजलवह्निजो । मृदुर्वायोरिति स्पर्शविशेषाद्गुणकीर्त्तिता ॥ स्पर्शसामान्येस्पर्शविशेषाालवइति ॥ इन्द्रिये स्पृश्यन्ते॰ इतिव्युत्पत्त्या॰ शब्दादिविषयेषु ॥ मात्रामात्र॰ । ॰ ॥ स्पर्शनम् । स्पृशस्पर्शने । अकर्त्तरिचकारकेस ज्ञायामितिघ ॥ पुराणे॰ एकादशविध स्पर्शउक्तोयथा । उष्णशीत सुखोदु ख'स्निग्धोविशदएवच । खरोमृदुश्लक्ष्णाश्चलघुर्गुरुरितिक्रमात् ॥ कामिनस्तु । शब्दादीनाम्पञ्चानामध्यंस्पर्शसुखवरम् । । आनन्दरसमूलमेनान्यदस्तिसुखकिलेत्याहु ॥

स्पर्शक । पु॰ स्पर्श ॥ त्रि॰ सपर्शनकर्त्तरि ॥

स्पर्शज्ञानम् । न॰ त्वाचप्रत्यक्षे ॥

स्पर्शन । पु॰ श्वसने । वायौ ॥ स्पृशति । स्पृश॰ । बहुलमन्यत्रापीतियुच् ॥ न॰ दाने । स्पर्शे ॥ स्पृशेर्भावेल्युट् ॥

स्पर्शमणि । पु॰ सपर्श । पारस॰ इ॰ प्र॰ मणौ ।

स्पर्शमणिप्रभवम्॰ । न॰ काञ्चने । स्वर्णे ॥

स्पर्शलज्जा । स्त्री॰ लज्जालुवृक्षे ॥

स्पर्शशुद्धा । स्त्री॰ शतमूल्याम् ॥

स्पर्शस्पन्द । पु॰ भेके ॥

स्पर्शा । स्त्री॰ कुटलायां ॥

स्पर्शानन्दा । स्त्री॰ रतिमदायाम् ॥ अमर सु ॥ स्पर्शेन॰ सपर्शमात्रेणानन्दोऽस्या ॥

सपर्शित । त्रि॰ प्रतिपादिते ॥

स्पश । पु॰ सम्पराये । युद्धे ॥ प्रणिधौ । चरे । हेरिके । अस्यपर्यायायथा । यथार्हवर्ण प्रणिधिरपसर्पश्चर स्पश । चारश्च गूढपुरुषश्चइति ॥ स्पशति । सप

पूर्णेन्दुकरसस्पर्शादमृतं स्रवति क्षणात । चन्द्रकान्तं तदाख्यातं दुर्लभं तत्कलौ युगे ॥ अग्निकणप्रवेकाय दाडिमीबीजसन्निभम् । विन्ध्याटवितटे देशे जायते मन्दकान्तिकाम ॥ सिंहले जायते कृष्णमाकरे च घनीलकं । पद्मरागभवेश्चानेहि विध स्फटिकं भवेत् ॥ अम्बराम्बरनिर्मलं स्वच्छं स्रवती स्वजलं शुचि । ज्योतिर्ज्वलनमाश्लिष्ट सूताज्योतीरसमिज ॥ तदेवलोहिताकारराजावर्त्तमुदं हृतम् । आनील तत्पाषाणं प्रोक्ता राजमयशुभम् । ब्रह्मसूत्रमयश्च प्रोक्तं ब्रह्ममयं द्विजेति स्फटिकपरीक्षा । इति भोजराजकृतयुक्तिकल्पतरु ॥

स्फटिका । स्त्री० स्फन्धाम् । रङ्गदायाम् । स्फटिकायाम् । फटकरी० इ०भा०प्र०पाषाणे ॥

स्फटिकाचल । पु० स्फटिकेऽभ्रिति । कैलासे ॥

स्फटिकात्मा । पु० स्फटिके ॥

स्फटिकाभ । पु० कर्पूरे ॥

स्फटिकारि । स्त्री० स्फटिकायाम् ॥

स्फटिकारिका । )<br>स्फटिकारी । ) स्त्री० स्फटिकायाम् ॥

स्फटी । स्त्री० स्फटिकायाम् ॥

स्फुरणम् । न० स्फुरणे ॥ स्फुर्स्फुरण

कृत्यकारीपथ केचित्पठन्ति० स्वार्थं ल्युटाद्यान्युत् ॥

स्फाटिकम् न० स्फाटिकोपले ॥

स्फाटिका । स्त्री० स्फटिकोपले । फटकरीतिख्यातेपाषाणे ॥ अस्यागुणा यथा । स्फाटिकातुकषायोष्णावातपित्तकफव्रणान् । निहन्तिश्वित्रवीसर्पान्योनिसङ्कोचकारिणीति ॥

स्फाटिकोपल । पु० स्फटिकायाम् ॥ स्फटिके ॥

स्फाटिकोऽभ्रित । पु० कैलासे ॥

स्फाति । स्त्री० वृद्धौ । स्फायनम् । स्फायीवृद्धौ । क्तिन् ॥ * ॥

स्फायित । त्रि० वृद्धिकृते ॥

स्फार । पु० विकटे ॥ करकादेर्बुद्बुदे ॥ त्रि० विपुले । विशाले ॥ यथा । तस्मिन्निद्रपर्णे स्फारसमस्तावस्तुदृष्टय । इमास्ता प्रतिविम्बन्तिसरसीवतटद्रुमा ॥ स्फायते । स्फायी० । स्फायितश्चीतिरक ॥ यद्वा । स्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञोश्चेत्यात्वम् ॥

स्फिगघातनक पु० कटफले ॥

स्फगदेश । पु० नालधिमूलप्रदेशे ॥

स्फिक् । स्त्री० कटिप्रोथे । कटिदेशस्थमांसपिण्डे । स्फायते । स्फायी० । बाहुलकाद्गिक प्रत्यय ॥

स्फेटति । स्फिट हिंसायाम् । क्वि
प । स्फिगपूतेतिनिपातनात् टस्य
चटूतिमुकुट ॥
स्फिर । त्रि० प्रचुरे ॥ स्फायते
। स्फायी० । अजिरशिशिरेतिकि
रचटिलोपश्च ॥
स्फीत । त्रि० समृद्धे ॥ विकसि
ते ॥ स्फायतेस्म । स्फायी० ।
क्त । स्फाय स्फीनिष्ठायाम् ॥
अथ स्फोतिकामधूतिस्फोतमाच-
ष्टे० धूतिश्च तादृचट । अल्लोप
णिलोपौ ॥
स्फुट । स्त्री० ईर्वारौ । पादस्फोटे
। स्फुटति । स्फुट० । क्विप ॥
स्फुट । त्रि० व्यक्ते । स्पष्टे । सप
घटादीनांविषयेन्द्रियसन्निकर्षज
न्यहसिद्धायाप्रमाणमिदाज्ञवतीति
प्रसिद्धमेव । प्रफुल्ले ॥ व्याप्ते ॥
सिते । शुक्ले । स्फटति । स्फुटवि
कसने । इगुपधेतिक । ॥ स्फुटते
। भिन्ने ॥
स्फुटता । स्त्री० विशदार्थतायाम् ॥
स्फुटनम् । न० विदरे । विदरणे ॥
स्फुट० । कुटादि० । ल्युट् । वि
कसने ॥
स्फुटबन्धनी । स्त्री० ज्योतिष्मत्याम् ।
पारावताङ्घ्र्याम् ॥
स्फुटल । पु० तुम्बुरुवृक्षे । शू
लघ्ने ॥

स्फुटा । स्त्री० फणायाम् ॥ स्फुट०
क । टाप ॥
स्फुटि । स्त्री० पादस्फोटामये । विपा
दिकायाम ॥ निर्भिन्नकर्कटीफले
। दूर्वाकशुक्तिकायाम् । फूट०
इ० भा० प्र० ॥
स्फुटित । त्रि० विकचे । विकसिते
॥ दीर्णे । भिन्ने ॥ स्फुटत् ।
स्फुट० । क्त ॥
स्फुर । पु० फलके ॥ स्फुरणं ॥
स्फुरणम् । न० स्फरणे । फरकना
० इतिभाषा ॥ यथा० अङ्गस्फुर
णमेवस्फुरणम ॥ किञ्चिच्चलने
॥ भाने ॥ कम्पने ॥ स्फुरस्फुरणे
सञ्चलनेच । कुटादि । ल्युट ॥
स्फुरन् । त्रि० कम्पनयुक्ते ॥ दीप्य
माने ॥
स्फुरितम् । न० स्फुरणे ॥ त्रि० मन
स कल्पनायाम ॥ उल्लसिते ॥
उज्ज्वले ॥ प्रतिफलिते ॥
स्फुर्जक । पु० कालस्कन्धे । ति
न्दुके ॥
स्फुर्जथु । पु० वज्रपतनजनितध्व
नौ ॥ स्फूर्जथौ ॥
स्फुलम् । न० तम्बू० इ० प्र० वस्त्रवे
श्मनि ॥
स्फुलिङ्ग । त्रि० अग्निकणे । चिन्
गारी० इ० भा० ॥ स्फु० इत्यनु
करणशब्द । स्फुला० फूत्कारेण०

लिङ्गति० गच्छति । लिङ्गिगतौ । पचाद्यच् ॥

स्फुलिङ्गा । स्त्री० अग्निकणजातौ ॥ जातावपिनङीष् । अजादित्वपाठात्० टाप् ॥

स्फुलिङ्गनी । स्त्री० अग्नेर्जिह्वाविशेषे ॥

स्फूत्कार । पु० फूत्कारे ॥

स्फूर्ज्जक । पु० तिन्दुकवृक्षे । तेंदू० बं० भा० प्र० ॥ स्फूर्जति । टवोस्फूर्जावज्रनिर्घोषे ॥ ण्वुल् ॥

स्फूर्ज्जथु । पु० वज्रनिर्घोषे । वज्रपातजध्वनौ ॥ स्फूर्ज्जनम् । टुवोस्फूर्जा० । ट्वितोथुच् । मेघनादे । तडज्जौये ॥

स्फूर्ज्जन । पु० तिन्दुके ॥

स्फूर्त्ति । स्त्री० स्फुरणे ॥

स्फूर्त्तिमान् । त्रि० पशुपतौ ॥ यथा । पाशुपतिक पाशुपतविद्रूप स्फूर्त्तिमानुमतः ॥ कृतिचकाण्डशेष ॥ स्फूर्त्तिविशिष्टे ॥

स्फेमा । पु० स्फिरत्वे । प्रचुरतायाम् ॥ स्फिरस्यभाव । पृथ्वादित्वादिमनिच् । प्रियस्थिरेत्यादिनास्फादेश ॥

स्फेय० । त्रि० प्रचुरतरे । स्फिरतरे ॥ द्वयोरनयोरतिशयेनस्फिरम् । ईयसुन् । प्रियस्थिरेतिस्फादेश ॥

स्फेरम । त्रि० भूयिष्ठे ॥

स्फेष्ठ० । त्रि० अतिशये । भूयिष्ठे ॥ अयमेषामतिशयेनस्फिर । इष्ठन् । प्रियस्थिरेतिसाधु ॥

स्फैयकृत । पु० स्फाकृतौपक्षे ॥ अण् ॥

स्फोट । पुं० स्फोटके । विस्फोटे । पिडके । शब्दव्यापारे । स्फुट्यते० व्यज्यतेऽर्थ० स्फुटत्यर्थोयस्मादितिवा । स्फुटविकसने । घञ० अच्वा ॥

स्फोटक । पु० फोडाइतिख्याते० रोगे । पिडके ॥ स्फोटति स्फुटिर्विशरणे । ण्वुल् ॥

स्फोटनम् । न० विदारणे ॥

स्फोटनी । स्त्री० मणिशङ्खादिवेधोपकरणे । आस्फोटन्याम् ॥ स्फोट्यतेऽनया । स्फुटभेदनेचुरादि । करणेल्युट् ॥

स्फोटबीज ।)
स्फोटबीजक ।) पु० वातारीभल्लातके ॥

स्फोटायन । पु० मुनिविशेषे । काशीवृत्तिः स्फोटप्रतिपादनपरे० वैयाकरणे । स्फोटोऽयनपरायणंयस्यस ॥

स्फोटिका । स्त्री० खञ्जनिकायाम् । हापुतिकायाम् ॥

स्फ्य । पु० यज्ञाङ्गभूते० खड्गा

स्मरवीथिका । स्त्री॰ वेश्यायाम् ॥

स्मरवृद्धि । स्त्री॰ कामवृद्ध्याख्यौषधौ । मदनायुधे ॥ स्मरस्य वृद्धिर्यया ॥

स्मरसख । पु॰ वसन्ते ॥ कामोद्दीपकत्वात् ॥ स्मरस्य सखा । टच् ॥

स्मरसह । त्रि॰ कामोद्दीपके ॥ सहते । षष्ठ॰ । पचाद्यच् । स्मरस्य सहः ।

स्मरस्तम्भ । पु॰ उपस्थे । मेढ्रे ॥ स्मरस्यस्तम्भइवस्तम्भ ॥

स्मरसाय्य । पु॰ गर्द्दभे ॥

स्मरहर । पु॰ शिवे । स्मरं हरति । हरतेरनुद्यमनेऽच् ॥

स्मरागारम् । न॰ भगे ॥

स्मराङ्कुश । पुं॰ कररुहे । नखे ॥

स्मराम्र । पु॰ राजाम्रे ॥

स्मरासव । पु॰ लालायाम् । मुखसुरे । मद्यप्रभेदे ॥

स्मरेष्म । पुं॰ अर्के ॥

स्मर्त्तव्य । त्रि॰ स्मरणीये ॥ यथा । स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥

स्माय । पु॰ गूढहसिते ॥

स्मारक । त्रि॰ स्मरणकारके ॥

स्मार्त्त । त्रि॰ स्मृतिशास्त्रविदि ॥ स्मृतिविहिते ॥ स्मृतिसम्बन्धिनि ॥ न॰ स्मृतिशास्त्रोक्तकर्म्मणि ॥ यथा । श्रौतं कर्म स्वयं कुर्यादन्योऽपि स्मार्त्तमाचरेत् । अशक्तौ श्रौतमप्यन्यः कुर्यादाचारमन्ततः ॥

स्मार्त्तयज्ञ । पु॰ यज्ञविशेषे ॥ स चतुर्विधो यथा । देवयज्ञः पितृयज्ञो भूतयज्ञस्तथैव च । मनुष्ययज्ञ इत्येव स्मार्त्तयज्ञश्चतुर्विधः ॥

स्मितम् । न॰ ईषद्धास्ये ॥ तल्लक्षणं यथा । ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितम् । अलक्षितद्विजद्वारमुत्तमानां स्मितं भवेदिति ॥ ष्मिङ् ईषद्धसने । भावे क्तः ॥ त्रि॰ विकसिते ॥

स्मितदृक् । त्रि॰ स्मेराक्षे ॥

स्मृत । त्रि॰ स्मृतिविषये । कृतस्मरणे ॥ यथा । आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः । विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥

स्मृति । स्त्री॰ धर्म्मसंहितायाम् । मन्वादिप्रणीते धर्म्मशास्त्रे ॥ अर्थ्यते अनुष्ठानप्रकारोऽनया । स्मृ चिन्तायाम् । क्तिन् । वेदार्थस्मरणपूर्व्वकरचितत्वाद्वा ॥ धा स्वमात्रे । अरविन्दमनयाहूति स्मृति ॥ महर्षिभिर्वेदार्थस्मरणा स्मृति । तद्योगादन्योऽपि स्मृति ॥ अर्थे । कर्त्तव्यानुसन्धा

अपि पीतवासाहरिमूर्त्तिरास्तांयशोरसिस्रग्विणी ॥ माला स्याम् ॥

स्रग्वी । पु॰ भूतल्प्यावरूपावैजयन्त्यास्यारजविश्वाणेहरी ॥ त्रि॰ कुसुममालाधारिणि ॥ स्रगस्य स्त्यस्य । भूमायामेधास्रजोविनिरितिविनि ॥

स्रज्, स्रक् । स्त्री॰ मूर्द्धन्यस्तपुष्पदामनि ॥ माल्ये ॥ सृज्यते॰ सृजतिवा । सृजविसर्गे । ऋत्विगित्यादिना॰ कम्मणि॰ कर्त्तरि वानिन्॰ अमागमश्च । कुत्वम् ॥ अतिशक्करीच्छन्द १५ प्रभेदे । तल्लक्षणं यथा । सगिणमपिपरसनवरचितयति । यथा । अयिसहचरि॰ रुचिरतरगुणमयीमद्विमवरतिरनपगतपरिमला । सगिवनिरसविनतनुरमरसासुमुखिमुदितदनुजदलनहृदयी ॥

स्रज्वा पु॰ प्रजापती ॥ पटसङ्घे ॥ रज्जौ ॥

स्रव । पु॰ स्रवे ॥ स्रवणम् । सुगतौ । ऋदोरप् ॥ वारिप्रवाहे । यथा हरिश्चन्द्र । निर्भरस्रुतार, सरि । तत्र, सव प्रस्रवणमिति ॥

स्रवणम् । न॰ सच्छिद्रहृती, अर्मे अनेकांतनिर्गमे । क्षरणे ॥ स्रु॰

। ल्युट् ॥ मूत्रे ॥

स्रवद्गोथा । स्त्री॰ वृद्धायां ॥

स्रवद्गर्भा । स्त्री॰ पतितगर्भायाङ्गवि । अवतोकायाम ॥ पतितगर्भायाम् ॥ स्रवन् गर्भोयस्याः ॥

स्रवद्रङ्ग । पु॰ पण्यवीथ्यां । हाट॰ बजार॰ इ॰ भा॰ प्र॰ ॥

स्रवन्ती । स्त्री॰ नद्याम् ॥ सरिति । निम्नगायाम् ॥ स्रवति । स्रु॰ । लट् शत । उगितश्चेतिङीप् । अभ्यस्तेनादिति नुम् ॥ शुल्मस्थाने ॥ ओषधिभेदे ॥ वरम्याम् ॥

स्रवा । स्त्री॰ मूर्वायाम् । मुरहरा॰ इ॰ भा॰ प्र ॥ स्रवति । स्रु॰ । अच् । सुवाबादेशी । टाप् । औषध्यांमेपथी ॥ जीवन्याम् ॥

स्रष्टा । पु॰ प्रजापतौ । विश्वात्मनि । वेधसि । ब्रह्मणि । शिवे ॥ विष्णौ ॥ सृजति । सृजविसर्गे । तृच् । सृजिदृशोरित्यम ।

स्रस्त । त्रि॰ च्युते ॥ स्रंसतेस्म । स्रंसुध्वंसुभ्रंसने । गत्यर्थाकर्मकेति कर्त्तरिक्तः ।

स्रस्तम् । न॰ च्युते ॥

स्रस्तर पु॰ न॰ वीरणकटे । पल्लवादिशये ॥ पुं॰ कुशमुष्टौ ॥

स्राक् । अ॰ द्रुते । झटित्यर्थे ॥ स्रापकी । सम्पदादित्वात्क्विप् । स्रामकति । अककुटिलायाङ्गतौ ।

क्विप् ॥

स्राम । त्रि० एकनेत्रे । यस्य सद्यश्च स्रुनासिकास्रवति तस्मिन् ॥

स्राव । पु० क्षरणे । आगर्भाधाना चतुर्थमासपर्यन्त गर्भच्यवरणे ॥

स्रावकम् । न० मरीचे ॥

स्रावणी । स्त्री० ऋद्धिवृक्षे ॥

स्रावित । त्रि० गालिते ॥

स्रुग्दारु । न० व्याघ्रपादवृक्षे । विकङ्कते ॥

स्रुघ्न । पु० आगराख्ये० नगरे । तदुपान्तदेशे । मथुरायामिव० मथुरावत्स्रुघ्नप्राकाराकृतिकौमुदी ॥

स्रुघ्नी । स्त्री० सर्जिकाक्षारे ॥

स्रुक्०ग् । स्त्री० खादिरादिवनपात्रविशेषे । तल्लक्षणं यथा । धूर्वीपञ्चाङ्गुलीनां तु स्रुवोऽमेदा स्रुव बिलस्यमर० । तच्चटवत्क्षतिर्भवा । उपभ्रच्छत्राकारा । शुभ्रर्द्धचन्द्राकृति । वैकङ्कतीभुवाप्यौक्षा आश्वत्थीचोपभृन्मता । जुहू० पालाशकाष्ठघखादिरस्तत्वीमता ॥ स्रुवादिकन्तु यज्ञादौपात्रमित्यभिधीयते । स्रुव० पुमानेकहस्तोवाहुमाद्वास्रुगीरिता । तद्विशेषा शराणाया स्त्रीजुहूरुपभृद्ध्रुवेतिमध्दृरत्नावली ॥ स्रवतिघृतादिकम् । स्रुस्रवणे स्रुव० कश्चित्-वीतिचिक्प्रत्यय० इकारश्चारणा

र्थः । कृत् । शुत्वम् ॥

स्रुत । त्रि० क्षरितजलादौ । स्रौ । रीये । च्युते । स्रुयतेस्म । स्रुगतौ । क्त

स्रुता । स्त्री० हिङ्गुपत्र्याम् ॥

स्रुव । पु० यज्ञपात्रविशेषे । स्रुचि ॥ स्रवति । स्रु० । अच् । संज्ञापूर्वकत्वान्नगुण । उवङ् ॥ यद्वा । स्रवतिघृतादिकम् । स्रुस्रवणे । स्रुव क ॥

स्रुवा । स्त्री० होमपात्रान्तरे । स्रुचि । मूर्वायाम् ॥ शल्लक्याम् ॥ टाप् ॥

स्रुवाहक्ष । पु० विकङ्कते । स्वादुकण्टकी ॥ स्रुवायावृक्ष ॥

स्रू । स्त्री० होमपात्रविशेषे । यज्ञोपकरणे ॥ स्रवे । निर्झरे । स्रवन्तीघृतादिकम् । स्रुस्रवणे । क्विप्विप्रच्छिश्रिस्रुद्रुकटप्रज्वादीनां घोंऽसम्प्रसारणञ्चेतिक्विप्दीर्घौ ।

स्रोतम् । न० स्रोतसि ॥

स्रोतईश । पु० समुद्रे ॥ स्रोतसामीशः ॥

स्रोत । न० स्रुतोऽम्बुसरणे ॥ प्रवाहे । वेगेनजलगतौ ॥ इन्द्रिये ॥ शरीरस्थनवच्छिद्रेषु ॥ स्रवति । स्रुगतौ । स्रुरीभ्यांतुट्चेत्यसुन्० तुडागमश्च ॥

स्रोतस्वती । स्त्री० नदीमार्गसरि

स्वपनम् । न० निद्रायाम् । ञिष्वप् शये । ल्युट् ॥

स्वपिण्डा । स्त्री० पिण्डखर्जूर्याम् ॥

स्वप्न । पु० निद्रायाम् । शयने । स्वपे ॥ प्रसुप्तस्य विज्ञाने । आत्म हासनामये । जागरितसंस्कारज प्रत्यय सविषय स्वप्नदृष्टुत्वम् यं स्मरण कारणस्याऽर्थविकाशियथा । जाग्रदवस्थायां यद्दृष्टं यच्छ्रुत तज्ज नितवासनया निद्रासमये य प्रपञ्चो यः प्रतीयते सा स्वप्नावस्थेति वासु देवसरस्वती ॥ तथाच । वाक्य पुकारणं भूपस इतेषु जागरितवासना नुसारेणमनसस्तदर्थाभासाकाराव भासन स्वप्नशब्दितम् ॥ यथाहु । इन्द्रियाणामुपरमेमनोऽनुपरत य दि । सेवतेविषयानेवतद्विद्यात्स्व प्नदर्शनमिति । सचसप्तविधोयथा । दृष्ट, श्रुतोऽनुभूतश्चप्रार्थितः कल्पितस्तथा । भावितोदोषज श्चेति स्वप्न सप्तविधः स्मृतइति ॥ स्वप्नजाग्रदादिकल्पनयातस्यवि ध्यमाह । स्पष्टस्मृतिरथास्पष्टस्मृ तिरस्मृतिरित्यमी । स्वप्नभेदाः । स्वप्नमध्येजाग्रत्स्वप्नसुषुप्तयइति ॥ सन्ध्यं तृतीय स्वप्नस्थानमितिश्रुति: ॥ स्वपित्यनेन । ञिष्वप् शये । कृदन्त्सिद्धपन्यनिस्वपिभ्योनिदिति नन् ॥ स्वप्नोऽन्यथाग्रहणं सर्पं इव रज्जामितिभाष्यम् । यथा रज्जां सर्पोऽगृह्यमाणोऽन्यथागृह्यते० तथा त्मनिदेहादियहणमन्यथाग्रहणम्० आत्मनोदेहादिवैलक्षण्यस्य श्रुति युक्तिसिद्धत्वात् ॥ अन्यथागृह्णत स्वप्नोनिद्रातत्त्वमजानत । विपर्या सितयो: क्षीणे तुरीयं पदमश्नुते ॥

स्वप्नकृत् । पु० सुनिषण्णके ॥ जीवे ।

स्वप्नक् । त्रि० शयालौ । निद्राशीले । स्वप्नशील । ञिष्वप्० । स्वपितृषोर्नजिङ् ॥

स्वप्नदृक् । पुं० जीवे । स्वप्नान्प श्यति । दृशिर० । क्विप् ॥

स्वप्नस्थान । पु० तैजसे । स्थूल प्रपञ्चलयस्थानस्वप्नव्युत्पत्तिदितचैत न्ये । स्वप्न स्थानमस्य ॥

स्वप्नान्त । पु० स्वप्नमध्ये । स्व प्नविज्ञाने ॥ सुषुप्तिस्थाने । स्व प्नस्यान्तोऽवसानं यस्मिन् ॥

स्वप्रकाश । पुं० अन्यानपेक्षप्रका शे । चन्द्रसूर्यादिप्रकाशनिरपेक्षे० स्वयमेवभासमानेद्रष्टरि । दृश्यानां जडानांबुद्ध्यादीनांदर्शनं स्वप्रका शद्रष्टारं विनानघटते ॥ यथोक्तं च क्षौधरिसूरिभि: । नप्रकाशेदमित्युक्तिर्यत्प्रकाशं विना धनात् । स्वप्रका शं तमात्मानमप्रकाश: कथं स्पृशे दिति ॥ स्वेनात्मनैवप्रकाशते । काशृदीप्तौ । पचाद्यच् ॥

चतुर्थं प्रचयो नोत्कोधतोसोऽकान्द स स्मृत इति ॥ उदात्तादिभिः स्व यं राजन्त इति मनोज्ञत्वाद्वा ॥ स्व र इति कण्ठगतमाधुर्यमिति भरत पूज्यपादाः ॥ श्रुत्यारब्धेऽनुरण नी ॥ तदुक्तम् । श्रुत्यनन्तरभावी य स्निग्धोऽनुरणनात्मकः । स्व तो रञ्जयति श्रोतृचित्तं स स्वर उच्यत इति ॥ शब्दे ध्वनौ ॥ यथा । कारि ष्यत्यथोपभेरीमृदङ्गसि शब्दनिस्व नाभूपा । गर्दभजर्जरकक्षस्वरा सघनतीव्रसत्यतेति ॥ नासा समीरणे ॥ निषादादिसप्तसु ॥ ते यथा । निषादर्षभगान्धारषड्जम ध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ ष ड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजा विकौ च गान्धारं क्रौञ्चो नदति मध्य मम् । पुष्पसाधारणे काले कोकि लो रौति पञ्चमम् । अश्वस्तु धैवतं रौ ति निषादं रौति कुञ्जर इति ॥ स्व रोय स्मृतिष्वासेष्वनन्तहृदयाञ्जन इत्यन्ये च ॥

स्वरत । अ॰ स्वरितेत्यर्थे ॥ आद्या दित्वात्तसि ॥ यथा । दुष्ट श ब्दः स्वरतो वर्णतो वेति ॥

स्वरपत्तनम । न॰ सामवेदे ॥ इ॰ वि॰ शेष ॥

स्वरभङ्ग । पुं॰ गलरोगविशेषे ॥

स्वरभङ्गी । पुं॰ पक्षिविशेषे ॥

स्वरभेद । पुं॰ स्वरभङ्गरोगे ॥

स्वरमण्डलिका । स्त्री॰ वीणाविशेषे ॥

स्वरलासिका । स्त्री॰ वंश्याम ॥

स्वरस । पुं॰ वस्त्रनिष्पीडितरसे ॥ यथा । अहतात्तत्क्षणाकृष्टाद्द्रव्या त्क्षुण्णात्समुद्भवेत् । वस्त्रनिष्पीडि तो यस्तु स्वरसो रस उच्यते ॥ अन्यत : कीटाभिभक्षितादिभिरनुपहत ॥ शिलापिष्टकल्के ॥ यथा । स्वर स स्वरस प्रोक्त कल्कोद्दृष्टदि पेषितइति ॥ कषायविशेषे ॥ य था । सद्यः समुद्धृताद्द्रव्यात्क्षुण्ण न्नाद्विपीडनात् । यो रसस्त्वभिनि र्यातिस्वरस सप्रकीर्तितइति ॥ अपिच । दिष्ट कल्कोविनीयस्व रस पीडितोरस । क्वाथ' क षायो निर्यूहो निर्यासो वैष्णवस्थ इति रत्नमाला ॥

स्वरा । स्त्री॰ ब्रह्मणोज्येष्ठपत्न्याम् । गायत्रीसपत्न्याम् ॥

स्वरांश : । पुं॰ सङ्गीतेस्वरस्यार्द्धपा दे वा ॥

स्वराट् । पुं॰ स्वतोभासमानेसवित रि ॥ इन्द्रियानपेक्षत : सिद्धज्ञा नेपरमेश्वरे ॥ स्वेनैव राजते । रा जृदीप्तौ ॥ सत्सूद्विषेत्यादिना क्वि प् ॥

। यद्यद्यपि कुतोऽमृतत्वसम्भव । यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च सुखं तत्स्वःपदास्पदम् ॥ स्वर्यतेऽस्मिन्निति वा । स्वर्गतिस्थानादौ ॥ स्वः स्वर्गतिघञ् ॥ मन. प्रीतिकारः स्वर्गो नरकस्तद्विपर्ययः । नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तमा ॥ पारिभाषिकस्वर्गो यथा । मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलङ्कृताः । वासः प्रासादपृष्ठेषु स्वर्गः शुभकर्मणामिति गारुडे १०९ ऽध्याय ॥

स्वर्गगामी । त्रि० स्वर्गगमनकर्त्तरि ॥ यथा । सर्वहिंसानिवृत्ता ये सर्वदुःखहरा श्च ये । सर्वस्याश्रयभूता ये ते नराः स्वर्गगामिनः ॥

स्वर्गङ्गा । स्त्री० मन्दाकिन्याम् ॥

स्वर्गद्वारम् । न० तीर्थविशेषे ॥

स्वर्गपतिः । पु० इन्द्रे । पुरन्दरे

स्वर्गपरः । पु० स्वर्गप्रधाने ॥ स्वर्गपरः श्रेयसामुपितस्य नपरः त्वष्टीयसः ॥

स्वर्गलोकः । पु० वैकुण्ठे ॥ स्वर्गीयते इति स्वर्गः । स्वर्गश्चासौ लोकश्च ॥ यजमानो । स्वर्गलोकोऽयम् ॥

स्वर्लोकेशः । पुं० इन्द्रे ॥ शरीरे ॥

स्वर्गवधूः । स्त्री० सूर्यभार्यायाम् ॥

स्वर्गसरित् । स्त्री० मन्दाकिन्याम्

स्वर्गसरिद्वरा । ) स्त्री० भागीरथ्याम् ।
स्वर्गापगा । )

स्वर्गीयः । पु० हरौ ॥ स्वर्गीयतइति स्वर्गीयः ॥

स्वर्गिगिरिः । पु० सुमेरौ ॥

स्वर्गः । पु० देवे । सुरे ॥ त्रि० स्वर्गगामिनि ॥ तल्लक्षणन्तु । दयाभूते सुसम्बाद परलोकप्रतिक्रिया । सत्यं परहिताचोक्ति र्वेदप्रामाण्यदर्शनम् ॥ गुरुदेवर्षिपूजा च केवलं साधुसङ्गम । सत्क्रियाभ्यसनमैत्री स्वर्गिणां लक्षणं विदुरिति ॥

स्वर्गिवधूः । स्त्री० अपसरसु ॥

स्वर्गिगिरिः । पुं० मेरौ । सुरालये ॥

स्वर्गौकाः । पु० अमरे । सुरे ॥

स्वर्ग्यः । त्रि० स्वर्गलोकप्राप्तिसाधनभूते ॥ स्वर्गनिमित्ते । स्वर्गार्थिहिते ॥ स्वर्गस्य निमित्तं संयोगउत्पातेनेति । गोदृष्टयोऽसंख्यापरिमाणाञ्चादेयत् ॥

स्वर्णम् । न० हेम्नि । भर्मारि । अस्यपर्यायायथा । स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकम् । तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् । चामीकरं जातरूपं महारजतकाञ्चने । रुक्मकार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियामिति ॥ अमरकोषादिर्यथा । दाहेऽतिरक्तमपराग्ने स

स्ववान् । त्रि० धनिनि । स्वमस्यास्ति मतुप् ॥

स्ववश । त्रि० अपराधीने । तन्त्रे ॥ स्वस्मिन् वशः आयत्तः ॥

स्ववासिनी । स्त्री० सुवासिन्याम् । चिरण्ट्याम् । स्वेषु पित्रादिषु वस्तुं शीलमस्याः । सुप्यजातौ णिनि ॥

स्ववीज । पु० आत्मनि । न० निजकारणे । स्वीयवीर्ये ॥

स्वसंवित् । स्त्री० स्वरूपसम्यग्ज्ञाने ।

स्वसा । स्त्री० भगिन्याम् । सुष्ठु अस्यति० अस्यतेर्वा । असु क्षेपणे । सावसेर्ऋन् ॥

स्वसुखम । न० स्वरूपभूते परमानन्दे ॥

स्वस्तन वि स्वर्गभावे ॥

स्वस्ति अ० मङ्गलसमीहितसाधने । समीहितस्यापत्तौ । पुण्ये ॥ आशंसायाम् ॥ आशीर्वादे ॥ दानस्वीकारमन्त्रे । यथा । स्वस्तिदेवीवायुपत्नी प्रतिविश्वसुपूजिता । आदानस्य प्रदानस्य निष्फलस्य यया विना तिदेशो भागमतम् ॥ अस्यति० असति वा । असदीप्तौ० असु क्षेपणे वा । सुपूर्वकात्० क्तिच् । बाहुलकात् तिर्वा ॥ यद्वा । अस्ति । असभुवि । सावसेरिति । बहुल वचनात्तभूभाव ॥

स्वस्तिक । पु० मङ्गलद्रव्ये । तण्डुलचूर्णनिर्मितत्रिकोणाकाराविशालद्रव्ये ॥ चतुष्के ॥ दिष्टकप्रकारे ॥ रततास्तिके । जिनानां चतुर्विंशतिचिह्नान्तर्गतचिह्नविशेषे । रसोनके ॥ राजादीश्वरसद्मविशेषे ॥ चतुष्पथे ॥ सर्पाणां फणास्थनीलरेखाविशेषे ॥ पु० न० राजादीश्वराणां सद्मविशेषे ॥ तल्लक्षणं यथा । प्रागुत्तरद्वाररहितं स्वस्तिकाख्यं धनप्रदमिति ॥ अपिच । स्वस्तिकं प्राङ्मुखं यत्स्यादलिन्दानुगतं भवेत् । तत्पार्श्वानुगतौ चान्यौ तत्पर्यन्तगतोऽपरः ॥ इति । सितावरणाके ॥ अभिप्रेतार्थस्याविनाशे । अष्टाङ्गयोगस्यतृतीयाङ्गविशेषे ॥ तद्यथा । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे । ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत् प्रचक्षते इति ॥ स्वस्ति क्षेमं कायति । कै शब्दे । आतोऽनुपसर्गे कः । मूलविभुजादित्वात् ॥

स्वस्तिमुख । पु० ब्राह्मणे ॥ लेखे । पत्रे ॥ त्रि० वन्दिनि ॥ स्वस्तिमुखे यस्य ॥

स्वस्तिवाचनम् । न० विहितमङ्गलकर्मारम्भे मन्त्रविशेषाणां पाठे । मन्त्रोच्चारणपूर्वकतण्डुलविकिरणे ।

स्वर्णरूपप्रभयासमेत कान्त्यातम प्रीतिरतिप्रसन्न । स्वाति प्रसू सौयद्दिमानवक्ष्मदामति प्राप्त विभूतियोग ॥ त्रि॰ स्वात्याजा ते ॥ ग्रथितफल्गुनीरुष्यमोलुक ॥

स्वाती । स्त्री॰ पञ्चदशर्क्षे ॥

स्वातीपथ । पु॰ छायापथे । स्वाती वीथ्याम् ॥

स्वातीवीथी । स्त्री॰ सूर्यादीनांमध्य मार्गे मध्यमवीथ्याम् ॥ यथा । सूर्यादीनांवर्त्मामार्गादक्षिणोत्तरमध्य माद्रक्ष्यपद्मस्य॰ तथाहि वापिपत्त्युन्येमवाये वर्चिभिर्मता॥स्व तिचातयासवातिमध्यवीथ्यांभिवि श्रुतासत्र ज्येष्ठाभिशाख नुराधाव थिराजगमीमता । एतास्वेव स्तिस्रोमध्यतीमार्ग उच्यतवृत्तिका युपुण्याभ्याम् ॥

स्वात्मा । पु॰ स्वकीयात्मनि ॥

स्वात्म मतरसास्वाद । पु॰ स्वात्मैवा मृतरस अमृतद्रव्यतस्यास्वादनौ ॥

स्वाद । पुं॰ । रसग्रहणे स्वादनम् । स्वाद॰ । घञ् ॥

स्वादनम् । न॰ चर्वणे ॥ स्वादनमश्च भक्षणमाहारोभोजन स्वदनमितिवच स्वायुष । प्रीतिकारणे ॥

स्वादित । त्रि॰ चास्वादिते ॥

स्वादिमा । पु॰ स्वादुतायाम् । स्वादो र्भावः । इमनिच् ॥

स्वादु । पु॰ मधुररसे ॥ यथा । मधुरस्तुरसज्ञेयोगल्पम । दुमधु सवमृतिविमचन्द्र ॥ गयडौवे । गुडे । औषधौषधौ ॥ सुगन्धिद्र व्यभेदे । अगुरुसारे ॥ स्त्री॰ द्राक्षा याम ॥ त्रि॰ मिष्टे । रसनाकर्षि णि ॥ मधुरे । मनोज्ञे । सुन्दरे ॥ स्वदते । स्वदष्वास्वादने । कृवापि स्युण् ॥

स्वादुकण्टक पु॰ विकङ्कते । गोक्षुरके ॥ कण्टकोऽस्यास्ति । अर्श आद्यच । स्वादुवासौकण्टकश्च । स्वादु कण्टकोऽस्य ॥

स्वादुकन्द । स्त्री॰ भिद्दार्थाम ॥

स्वादुका । स्त्री॰ नागदन्त्याम् ॥

स्वादुखण्ड । पु॰ गुडे ॥ मधुरभागे ॥

स्वादुगन्धा । स्त्री॰ भिद्दार्थाम् ॥

स्वादुक्षारम् । न॰ स्वादूक्षार्थे स्वर्थे ॥ स्वादुमिषमुल् ॥

स्वापर्णी । स्त्री॰ दुग्धिकायाम् ॥

स्वादुपाका । स्त्री॰काकमाच्याम ॥ स्वादु पाकोऽस्या ॥

स्वादुपिण्डा । स्त्री॰ पिण्डखर्जूर्याम् ॥

स्वादुपुष्प । पुं॰ कटभ्याम ।

स्वादुफलम । न॰ बदरीफले ॥

स्वादुफला । स्त्री॰ द्राक्षायाम । कोली ॥

वेदाभ्यासे ॥ स्वाध्यायश्चाभ्यसन ॥

स्वाध्यायी । पु॰ पण्यजीविनि ॥ स्वाध्याययुक्ते ॥ स्वाध्यायोऽस्यास्ति । इनि ॥

स्वाध्वरिक । त्रि॰ स्वध्वरादिनि ॥ शोभनोऽध्वरः स्वध्वरः । स्वध्वरमित्याह॰ तिमच्चर्त्तिथा । ठक् । स्वागतादीनाञ्चेत्यैजागमो न ॥

स्वान । पु॰ निर्घोषे । निह्रादे । शब्दे ॥ स्वननम् । स्वन शब्दे । स्वनहसेर्वेति पक्षे घञ् ॥

स्वानुभव । पु॰ आत्माकारान्तःकरणसाक्षात्कारे ॥

स्वान्त । न॰ हृदि । मानसे । मनसि । चित्ते ॥ गह्वरे । स्वन्यते स्म । स्वन॰ क्षुब्धस्वान्तध्वान्तेति मनस्यनिट्कमेतन्निपातितम् ॥ स्वस्यान्तोऽवच्छेदो भवति येन तदिति वा ॥

स्वाप । पु॰ निद्रायाम् । कारणभावेनावस्थाने । शयने । शय्यायाम् । अज्ञाने । तत्त्वाप्रतिबोधे दर्पनष्टस्त्र दृश्यन्ते तन्वि विप्रकारनिरूपिजीवावस्थाभेदे । स्पर्शाज्ञतायाम् ॥ स्वपनम् । ञिष्वप शये । घञ् ॥ धान्येऽगुरुकुङ्कुमसुरासवविशेषुर दिनाप्यनुवशम् । नीलशावरशि-

रामचलनोनैवार्द्धरथा स्त्रियमिच्छन् ॥

स्वापतेयम् । ) स्वापतेयकम् । ) न॰ धने । वित्ते ॥ स्वपति॰ स्वपति॰ । स्वपतौ धनस्वामिनो साधु । पथ्यतिथिवसतिस्वपतेर्ढञ् । स्वागतादित्वान्नैजागम ॥

स्वायन । पु॰ न॰ अस्त्रविशेषे । पु॰ श्रीकृष्णे । विष्णौ ॥ स्वापयति सर्वमायया आत्मज्ञानविधुरान् करोति । ञिष्वप शये । अस्मात्सान्ताल्ल्युट् । औणादिकोयुक्त्वा ॥

स्वाप्यय । पु॰ सुषुप्तौ । स्वस्मिन्नप्यय ॥

स्वाभाविक । त्रि॰ स्वभावसिद्धे । स्वभावतत्त्वयुक्ते ॥ स्वभावोऽनादिरविद्या॰ तत्कार्ये । सहजे । अकृत्रिमे ॥ स्वभावे भव । स्वभावादागतो वा । ठक् ॥

स्वाभाविकी । स्त्री॰ प्रकृतौ । द्रव्यस्वभावतएवासद्धायाप्रकृतौ । यथाऽग्न्यादीनाम् उष्णप्रकाशादिलक्षणा स्वाभाविकी प्रकृतिः ॥

स्वाभास । त्रि॰ रमणीये ॥ सुष्ठु आभासते । भास॰ । पचाद्यच् ॥ पु॰ कुबेरे ॥ स्वेन धनेन आभासते ॥

स्वाभाव्य । पु॰ हरौ । स्वभा-

येनैवस्वभाव्योऽसाध्योनित्यनिष्पन्न रूपत्वात् ॥
स्वामिजङ्घी । पुं॰ परशुरामे ॥
स्वामिता । स्त्री॰ स्वामित्वे ॥ स्वामिनोभाव । तस्यभावस्त्वतलौ ॥
स्वामी पुं॰ कार्त्तिकेये । विशाखे । शिखिवाहने ॥ पत्यौ । भर्त्तरि । गुरौ । श्रीनाथे ॥ यथा । गुरुमाम्नानभावितजपकालाद्दसीश्चिवे । श्रीनाथदेवस्वामीतयिवादेवीधनीव देत् ॥ हरे ॥ हरौ ॥ परमहसे ॥ वात्स्यायनमुनौ ॥ प्राज्ञस्यौयाहङ्क्ते ॥ नृपे । भूपे ॥ त्रि॰ अधिपतौ । अस्यपर्यायास्तु । स्वामीत्वीश्वर पतिरीशिता । अधिभूर्नायकोनेताप्रभु परिवृढोधिपइति ॥ स्वमैश्वर्यमस्यास्तिस्वामि ऐश्वर्यइत्यामिनच् । निपात्यते ॥
स्वाम्यम् । न॰ आधिपत्ये ॥
स्वायम्भुवः । पुं॰ प्रथममनौ । ब्रह्मणः पौत्रे ॥ स्वयम्भुवोऽपत्यम् । अण् । सञ्ज्ञापूर्वकस्यवि धेरनित्यत्वान्नगुण ॥
स्वायम्भुवी । स्त्री॰ ब्राह्मोओषधौ ॥
स्वार । पुं॰ उपतापरि ॥ स्वरति । स्वृशब्दोपतापयोः । स्वः । स्वरएव । प्रज्ञाद्यण् ॥ भावेवा घञ् ॥
स्वारस्यम् । न॰ स्वभावे ॥ स्वरसभाव । ष्यञ् ॥
स्वाराट् । पुं॰ इन्द्रे । नमुचिसूदने ॥ स्व स्वर्गे राजते । सत्सुद्विषेति क्विप । दीर्घत्वम् ॥ स्वेषुदेवेषु॰ स्वेनधनेनवा॰ राजते । सत्सूद्विषेतिक्विप । राजतेरिति॰ इकोपद्रवीदीर्घ । आन्त ॥
स्वाराज्यम् । न॰ स्वराज्ये । स्वराड्भावे ॥ ष्यञ् ॥
स्वारामगुच्छकम् । न॰ ग्रन्थिपर्णे ॥ ऐन्द्रपदे ॥
स्वारोचिष । पुं॰ द्वितीयमनौ ॥ स्वरोचिषोऽपत्यम् । अण् ॥
स्वार्थ । पुं॰ स्वप्रयोजने ॥ स्वीयाभिधेये ॥ स्वकोयधने ॥ स्वीयवस्तुनि ॥
स्वार्थदर्शन । त्रि॰ निजार्थावलोकने ॥ स्वस्यात्मनोर्थं पश्यतीतितथा ॥
स्वार्थानुमानम् । न॰ स्वानुमितिहेतौ ॥ तथाहि । स्वयमेवभूयोदर्शनेनयत्रधूमस्तत्राग्निरितिमहानसादौव्याप्तिगृहीत्वा॰ पर्वतसमीपङ्गत॰ तद्गतेचाग्नौसन्दिहान, पर्वतेधूमंपश्यन्व्याप्तिस्मरतियत्रधूमस्तत्राग्निरिति । तदनन्तरवह्निव्याप्यधूमवानयपर्वतइतिज्ञानमुत्पद्यते । अयमेवलिङ्गपरामर्शइत्युच्यते । तस्मात्प

वंतीवक्त्रिमान्। स्रुतिस्मामनुमि
तिव त्वयते । तदेतत्स्वार्थानुमा
नम ॥

स्वाश्रय । त्रि० अनन्याश्रये ॥

स्वास्थ्य । न० आरोग्ये ॥ स्व
रूपेऽवस्थाने ॥ सन्तोषे ॥ स्व
स्थस्यभाव । ष्यञ् ॥

स्वाहा । अ० देवहविर्दानमन्त्रे ॥ स्वा
हते । स्वादयाह्लादने । आप्रत्यय
। पृषोदरादित्वाद्दस्यह ॥ सुष्ठु
आहूयतेऽनेनवा । डाप्रत्यय ॥

स्वाहा । स्त्री० अग्ने पत्न्याम् । अ
ग्नाय्याम् ॥ यथा । स्वाहादेवीवह्नि
पत्नीप्रतिविश्वं सुपूजिता । ययावि
नाहविर्दानं नशक्तोतु सुरा ग्रमाह्र
तिदेवीभागवतम् ॥ सुष्ठु आहूय
न्ते देवा अनया । अन्येभ्योपीतिड
। टाप् ॥ स्वाहाऽस्त्यस्याः वा । अर्श
आद्यच् ॥ स्वानुषाजिहीतेवा ॥
वृत्तिमन्त्रविशेषे । तारिण्याम् ॥

स्वाहापति । पु० अग्नौ ॥ ब्रू० व
रणौ ॥ *

स्वाहाप्रिय । पुं० वैश्वानरे । वह्नौ
॥ स्वाहाप्रियायस्य । अपूर्वप्रिया
दिभ्यिति निषेधान्नपुंवद्भाव ॥

स्वाहाभुक् । पु० पितृमि । देवता-
याम् ॥

स्वित् । अ० प्रश्ने ॥ वितर्के । नानाप
क्षावमर्षे ॥ पादपूरणे ॥ सुष्ठु एति
० अयतिवा । इण् गतौ ० इगतौ
वा । क्विप ० तुक ॥

स्विदित । त्रि० स्वेदिते ॥

स्विन्न । त्रि० प्रस्विन्ने । स्वेदान्विते ।
घर्मयुक्ते ॥ स्विन्नोघर्मपितोजनद्रू
तिहलायुध ॥ पक्वे ॥ यथा । अ
स्य क्वे नगर प्राहु सतुष धान्यमु
च्यते । आमं वितुषमित्युक्त स्विन्न
मन्नमुदाहृतमितिवशिष्ठ ॥

स्विष्टम् । न० सम्यग्यजने ॥ त्रि० स
म्यक्पूजिते ॥

स्विष्टकृत । पुं० पूर्वाहुत्यन्ते क्रियमा
णे होमविशेषे ॥ सु० सुष्ठु शोभन
इष्टं सर्वमपिकरोति । कृञ् ०
क्विप् तुक् ॥

स्विष्टकृत् । पुं० होमविशेषे ॥ शोभ
नाकृष्टि स्विष्ट । तांकरोति ।
कृञ् क्विपतुक् ॥

स्वीकार । पु० अङ्गीकारे । स्वीकर
णम । च्व्यन्तस्वशब्दपूर्वात्कृञो
भावेघञ् ॥ यावत्ताः स्वनिर्वा
ह स्वीकुर्यात्तावदर्थवित् । आ
धिक्येन्यूनतायांवाच्यवतेपरमार्थ
त ॥

स्वीकृत । त्रि० अङ्गीकृते ।

स्वीय । त्रि० आत्मीये ॥ प्राक्स्वी
ताच्छ ॥

स्वीया । स्त्री० स्वामिन्येवानुरक्ता
यांनायिकायां ॥

हसारूढा । स्त्री॰ ब्रह्माण्याम् ॥

हंसिका । स्त्री॰ हंस्याम् । हंसी । हम॰ । हंसिमश्विन्यासिक्कन् ॥

हसिनी । स्त्री॰ शिखरिण्या प्रभेदे । यथा । निर्नीरसुरभिक्षीरसयुक्त गालित दधि । शर्करैलालसाढ्यरसयुक्ता हसिनीभवेत् ॥ हसीशिखरिणीरुच्या शुभा वर्णविकाशिनी । सुशीतजननी चैव कफपित्तविनाशिनी ॥

हसी । स्त्री॰ हसयोषिति । वरटायाम् ॥ हसिन्याम् । आकृति २२ प्रभेदे ॥ तल्लक्षणन्तु । मौगौ नाश्वा रौ गौ गौ वसुभुवनयतिरिति भवति हसी । यथा । सार्वकान्ते कान्ते सौविकचकमलमधुसुरभि पिबन्ती कामक्रीडाकूतस्फीतप्रमदसरसभरमलघु रसन्ती । कालिन्दीये पश्यारण्ये पवनपतनपरितरलपरागे कंसारातेपश्य स्वेच्छसरभसगतिरिह विलसति हसी ॥ छन्दोन्तरेऽपि । यथा । आञ्जे हर्षीभमगणत पञ्चादौर्वी विपुलफणत । हसीव्याप्ता श्रुतिरसयतिस्तञ्चाकीषानजयति मति ॥

हसोदकम् । न॰ जलभेदे । यथा । नादेय नवमृद्घटेषु निहित सन्तप्तमर्कांशुभिर्यामिन्याञ्च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् । एलाद्यैः परिवासित श्रमहर पित्तोपशान्तिर्विमूर्च्छारक्तमदात्ययेषु चाहृत म सलिल हसोदकमिति राजनिर्घण्ट ॥

हहो । अ॰ प्रश्ने ॥ दम्भे ॥ दर्पे ॥ सम्बोधने ॥

हक्क । पु॰ गजसमाह्वाने ॥

हक्कार । पु॰ आह्वाने ॥

हञ्जा । अ॰ नाट्योक्तिषु चेटीसम्बोधने ॥

हञ्जि । पु॰ क्षुति । क्षवे ॥

हञ्जिका । स्त्री॰ भार्ग्याम् ॥ भनक्ति रोगान् । भञ्जो आमर्दने । ण्वुल् । पृषोदरादि ॥

हञ्जी । स्त्री॰ हञ्जिकायाम् । भार्ग्याम् ॥ हन्ति रोगान् । पचाद्यच् । पृषोदरादि । गौरादि ॥

हञ्जे । अ॰ नाट्योक्त्या चेटीसम्बुद्धौ ॥ हिण्डते । हिडि गत्यनादरयोः । बाहुलकादिप्रत्यय । इतोऽकारोडश्चापि ॥

हटपर्णिका । स्त्री॰ शैवाले ॥

हट्ट । पु॰ क्रयविक्रययोः प्रसिद्धस्थाने । आपणे । हाट इति भाषाप्रसिद्धे ॥

हट्टचौर । पु॰ प्रसह्यचौरे । बन्दीकारे । चिल्लाभे ॥

हट्टवणिक । पु॰ हट्टवाणिज इति ख्याते गणविशेषे ॥

हम्वा । स्त्री० हम्भायाम् ॥

हम्भा । स्त्री० गोध्वनौ । रम्भायाम् ॥

हय । पु० वेटके । तुरगे । अश्वे । वाजिनि । सप्तसंख्यासंख्यायां । सप्तयोगमाह्वया । हयति । हयगतौ । पच ॥ हिनोतिवा । पच् ॥ शरीररथस्याकर्षकादिन्द्रियेषु ॥ धनूराशौ ॥

हयकातरा । ) स्त्री० अश्वकातरायाम् ॥ यथा । कातराहयपर्याये कातराम्ते प्रकीर्त्तिता । अश्वकातरिकातिक्ताबातघ्नीदीपनीपरा ॥ द्र रा० नि० वट ॥
हयकातरिका । )

हयगन्धम । न० काचलवणे ॥

हयगन्धा । स्त्री० अश्वगन्धायाम् ॥ अजमोदायाम् ॥

हयग्रीव । पु० वेदोद्धारार्थ विष्णोरवतारविशेषे । असुरप्रभेदे ॥

हयग्रीवहा । पु० विष्णौ ॥

हयङ्कष । पु० मातलौ ॥

हयद्वीप । पु० लङ्कादिद्वीपवत्समुद्रान्तवर्त्ति निद्वीपविशेषे ॥

हयनम् । न० पुरुषस्कन्धवाह्ये चौदोलाख्ये यानविशेषे । कर्णीरथे ॥ हयगतौ ॥ ल्युट् ॥

हयपुच्छी । स्त्री० माषपर्ण्यामोषधौ ॥ हयपुच्छमिवपर्णान्यस्या । गौरादि ॥

हयप्रिय । पु० यवे ॥ द्रुतिविलम्बन्द्र ॥

हयप्रिया । स्त्री० अश्वगन्धायाम् ॥ खर्ज्जूर्याम ॥ द्रुतिराजनिघण्ट ॥

हयमार । पु० करवीरे ॥

हयमारक । पु० करवीरे ॥ हयानां मारक ॥

हयमारण । पु० अश्वत्थवृक्षे ॥

हयवाहन । पु० सूर्यपुत्रे । रैवन्ते ॥ चि० हयारोहे ॥ हयोवाहनंयस्य ॥

हयवानशङ्कर । पुं० रक्ताकाञ्चने ॥

हयशाला । स्त्री० मन्दुरायाम् । अश्वालये ॥

हयशीर्ष । पु० विष्णौ ॥

हया । स्त्री० अश्वगन्धाया ।

हयाध्यक्ष । पु० अश्वाध्यक्षे ॥ स तुसत्वमन्तु । हयशिक्षाविधानज्ञ श्चिकित्सितपारग । अश्वाध्यक्षोमहीभर्त्तु स्वासनश्चप्रशस्यते ॥

हयानन्द । पु० मुद्गे ॥

हयायुर्वेद । पु० अश्वचिकित्साशास्त्रे ॥

हयारि । पु० करवीरे ॥ महिषे ॥

हयाशना । स्त्री० शल्लकीवृक्षे ॥

हयाह्वया । स्त्री० अश्वगन्धायाम् ॥

हयी । स्त्री० वाम्याम् । अश्वायाम् । बडवायां । चोडी० द्र०भा०प्र० ॥

हरिणनर्त्तक । पु॰ किन्नरे । मृगनर्त्तके ॥

हरिणप्लुता । स्त्री॰ अर्द्धसमवृत्तप्रभेदे ॥ विषमेसगणत्रितयलगात्यसमेन गणौभगणौचर । यथवमाभद्रे । दिताक्षिकुर्वेरलाहरिणप्लुता ॥

हरिणहृदय । त्रि॰ भीरौ ॥

हरिणाक्षी । स्त्री॰ रमण्याम् । मृगलोचनायाम् । हट्टविलासिनीनामगन्धद्रव्ये ॥

हरिणाङ्क । पुं॰ चन्द्रे । शशिनि ॥

हरिणी । स्त्री॰ मृग्याम् । एण्याम् ॥ हरिणाक्षी । पुंयोगादितिङीष् । हरितायाम् ॥ वर्णादनुदात्तादितिङीब्नौ ॥ नारीभेदे । चाक्षुषीति ॥ सुवर्णप्रतिमायाम् स्वर्णयूथ्याम् ॥ मञ्जिष्ठायाम् ॥ सूर्वेश्यायाम् ॥ अत्यष्टिच्छन्द १७ प्रभेदे । तल्लक्षणंयथा । नसमरसलाग षड्वेदैर्हयैर्हरिणीमता । अपिच । भवतिहरिणीन्सौम्रौ स्लौगौरसाम्बुधिविष्टपैरिति ॥ यथा । व्यथितसचिविर्नैवनीत्वाप्रभुवर्हरिणीगणात्॰ व्रजमृगदृशास्तोकश्रोत्रसम्भ्रयनाश्रयाम् । हृदयमनिशदूर्वाश्यामेमुरारिकलेवरेव्यक्तिरदधिकोवल्गाकाङ्क्षीविलोलविलोचनम ॥

हरित् । पु॰ अश्वविशेषे । नीलपीतमिश्रितवर्णे । पालाशे । हरिते । हराङ्कृतिभाषाप्रसिद्धे ॥ मुद्गे । स्त्री॰ दिशि ॥ हरिद्रायाम ॥ पु॰ न॰ तृणे ॥ त्रि॰ हरिद्वर्णविशिष्टे ॥ हरति॰ हरन्तिनयन्त्यन्यान् यासा । हृञ्॰ । दृहरुहियुषिभ्यइतिरितीति ॥

हरित । पु॰ हरिद्वर्णे । पालाशे । हरा॰ भू॰ भा॰ प्र॰ ॥ मन्यामकी तृणे ॥ न॰ स्योणाके ॥ त्रि॰ हरिद्वर्णयुक्ते ॥ हरति । श्याश्यामितञ्जितीतन् ॥

हरितकम् । न॰ शाके ॥ शिग्रौ ॥ हरितोवर्णोऽस्यास्ति । अर्शआद्यच् । स्वार्थेकन् । हरति । क्रियतेवा । हृञ्॰ । श्याश्यामितन् । कन ॥

हरितपत्रिका । स्त्री॰ पाठ्याम् ॥

हरितशाक । पु॰ शिग्रौ ॥

हरिता । स्त्री॰ दूर्वायाम् । जयन्त्याम । आस्रो॰ भू॰ प्र॰ पुष्पवर्णे ॥ हरिद्रायाम् ॥ पाठ्याम् ॥ कपिलद्राक्षायाम् ॥ नीलदूर्वायाम ॥ वर्णादनुदात्तात्तोपधात्तोनइतिपक्षे ङीपनकारादेशयोरभाव ॥

हरितालम् । न॰ धातुविशेषे । पिञ्जरे । पीतके । ताले । आले । हरितालके ॥ तत्तुहरेर्वीर्यम् ।

हस्तर्क्षयायाम ॥ भाद्रशुक्लचतुर्थ्याम् । यथा । भाद्रे मासि सितेपक्षे वसुदैवतसंयुता । हरितालीचतुर्थी स्यात्सर्वपापप्रीतिदा सदा । भाद्रे मासि सितेपक्षे चतुर्थ्यामभियोगत । ददाति क्षिप्रं विपदः हृष्टस्त्रीमसमय ॥ कश्चिचामलक्षेषु हरीसूर्ये चतुर्थिका । हरितालीसमाख्याता रुद्राणीप्रीतिदा सदा ॥

हरिताश्मम । न० तुत्थे । नीलाश्मनि ॥

हरिताश्म । न० तुत्थे ॥ पुष्परागे ॥

हरितोषणम् । न० भगवत्प्रीतिकरे सर्वभूतदयालक्षणे कर्म्मविशेषे ॥ हरेराराधने ॥ हरेस्तोषणं येन ॥

हरित्पर्णम । न० मूलके ॥

हरिद्भ° । पु० हरित्कुशे ॥ मरुवके ॥

हरिदश्व । पु० रवौ । सूर्ये ॥ हरन्ति शीघ्रगमन्यदेशं प्रापयन्तीति हरितो हरिन्नामका अश्वा यस्य- स ॥ अर्कवृक्षे ॥

हरिदास । त्रि० भगवद्भक्ते ॥

हरिदेश । पुं० ग्रन्थपर्णे ॥ हरिर्देवो यस्य ॥

हरिद्रव । पु० नागकेशरचूर्णे ॥

हरिद्रा । स्त्री० निशाख्यायाम् । काञ्चन्याम् । पीतायाम् । वरवर्णिन्याम् । हलदी० इ० भा० प्र० ॥ अस्या गुणास्तु । हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत् । वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा ॥ विषगन्धिहरिद्रान्या सा पीता वातला मता । पित्तघ्नमधुरा तिक्ता सर्वकण्डूविनाशिनीति ॥ हरिद्वर्णविशिष्टा द्राति । द्राकुत्सायां गतौ । आतोनुपेतिक । हरिद्रूयतीवा । हरितद्रवतिवा । द्रुगतौ । अन्येष्वपीतिड ॥ हरितरातिवा ॥ टाप् ॥

हरिद्राक्ष । पुं० हरितालपक्षिणि ॥ हरिद्रागान्यस्य ॥

हरिद्राभ । पु० पीतवर्णे । गौरे ॥ असनवृक्षे । कर्पूरे । त्रि० पीतवर्णवति ॥ हरिद्रेवाभाती भिरस्य ॥

हरिद्राराग । त्रि० अस्थिरस्नेहे । असत्सौहृदे ॥ हरिद्रारागइवरागोऽस्य । हरिद्रारागश्चाचिरस्थायित्वात्तथैतियावत् । यथा । अथ मोचासुरागौ च हरिद्रारागउच्यतइति हलायुध ॥

हरिद्रु । पु० द्रुमे । वृक्षे ॥ दारुहरिद्रायाम ॥ वृक्षविशेषे । पीतदारुणि । पीतकाष्ठे । हलदुवा० इ० भा० प्र० ॥ हरितपिङ्ग० पीतोवा द्रुरस्य । यद्वा हरिभिर्द्रूयते । द्रुगतौ । हरिमितयो द्रुम

ह्रुतिः ॥

हरिद्वारम् । न॰ तीर्थविशेषे । गङ्गाद्वारे । मायापुर्याम् ॥

हरिधामा । पु॰ मुञ्जे ॥

हरिनाम । न॰ श्रीहरेराख्याने ॥

हरिनेत्रम् । न॰ श्रीहरेश्चक्षुसि । श्वेतपद्मे ॥

हरिनेत्र । पु॰ पेचके । घूके ॥

हरिन्मणि । पु॰ गारुत्मते । मरकतमणौ ॥ हरिद्वर्णमणि । भाषा पान्नि आदि ॥

हरिन्मुद्ग । पु॰ शारदमुद्गे ॥

हरिपदम् । न॰ विष्णुचरणे ॥ रविसङ्क्रान्तिविशेषे ॥ यथा । वृषभसिंहालिकुम्भेषु सङ्क्रमतोऽर्कस्य भवेद्धरिपदमिति । २ । ५ । ८ । ११ ॥

हरिपर्णम् । न॰ मूलके ॥

हरिप्रस्थ । पुं॰ इन्द्रप्रस्थे ॥

हरिप्रिय । पु॰ कदम्बवृक्षे ॥ विष्णुकन्दे ॥ पीतभृङ्गराजे ॥ बन्धूके ॥ शङ्खे ॥ करवीरे ॥ न॰ उशीरे ॥ कृष्णचन्दने । कालीयके ॥

हरिप्रिया । स्त्री॰ लक्ष्म्याम् । पद्मालयायाम् ॥ हरेः प्रिया ॥ तुलस्याम् ॥ वनकर्कट्याम् ॥ गङ्गादिषत् वस्तुषु ॥ यथा । गङ्गासरस्वतीलक्ष्मीश्चैतास्तिस्रः प्रिया हरेः । तुलसीसहितास्ताश्च चतस्रः कीर्त्तिताः शुभाः ॥ इति देवीभागवतम् ॥

हरिवालुकम् । न॰ एलवालुके । ऐलेये ॥ हरिवर्णवालुकम् ॥ पु॰ हारीतपक्षिणि ॥

हरिभक्त । पु॰ हरिसेवके ॥ तल्लक्षणं यथा । सर्वजीवेषु यो विष्णुभावयेत् समताधिया । हरौ करोति भक्तिं च हरिभक्तः स उच्यते ॥

हरिभद्रम् । न॰ हरिवालुके ॥

हरिभुक् । पु॰ मयूरे ॥ सर्पे ॥

हरिमा । पु॰ कान्तौ ॥ हरति । हृञ् ॰ । पृथ्वादिभ्य इमनिज्वा ॥

हरिमन्थ । पु॰ अग्निमन्थे । गणिकारिकायाम् ॥ चणके ॥ हरिभिर्मथ्यते । मन्थ विलोडने ॥ कर्मणि घञ् ॥

हरिमन्थक । पु॰ चणके ॥ स्वार्थे कः ॥

हरिमन्थज । पु॰॰ चणके ॥ हरीन् अश्वान् मन्थ जनयति । जनी॰ अन्येष्वपीति डः ॥

हरिमन्दिरम् । न॰ विष्णोर्गृहे ॥ तिलकविशेषे ॥ यथा । तिलकान्तूर्द्ध्वपुण्ड्रान् मध्यच्छिद्रान् विनारद । यद्भिन्नाल्लाटसद्दृश्यं तद्धरिमन्दिरम् ॥ हरिः सर्वानतारीऽनिशब्दाद्धीनान्विशेत । तस्मात्तिलकं वीक्ष्य च हरिमन्दिरमिति पद्मपुराणम् ॥ अपिच । नासिकायास्त्रिभागे तु भागेमानेनवीभवेत् । मध्ये मध्ये (

हरीतकी

यथा हरिहरमनुसरसाधीयारप यातुमिच्छसिचेत्अनुभवधे रूपत मयडवद्सिवस्तुतएकं नजानासि ॥
हरिहरक्षेत्रम् । न० हरिक्षेत्रे ॥
हरिहरात्मक । पु० शिवरूषभे ॥ गरुड़े ॥
हरीतकी । स्त्री० स्वनामख्यातप्रसिद्धे पथ्यावृक्षे । तत फले ॥ तत्पर्यायायथा अभयात्वव्यथापथ्याकायस्थापूतनाऽमृता । हरीतकीहैमवतीचेतकीश्रेयसीशिवेति ॥ अस्याः प्रभेदाद्याश्चयथा । हरीतक्यमृतोत्पन्नासप्तभेदैरुदीरिता । तस्यानामानिवर्णाश्चवच्याम्यथयथाक्रमात् ॥ विजयारोहिणीचैवपूतनाचामृताऽभया । जीवन्तीचेतकीचेतिनामान्यासप्तविधास्मृता ॥ अलाबुवृत्ताविजयावृत्तारोहिणीमता । स्वल्पत्वकपूतनाज्ञेयास्थूलमांसाऽमृतास्मृता पञ्चास्वाभयाज्ञेयाजीवन्तीस्वर्णवर्णभाक त्र्यस्रास्मृतचेतकीविद्याद्दिष्यासांरूपलक्षणम् ॥ विन्ध्याद्रौविजयाहिमाचलभवास्याञ्चेतकीपूतनासिन्धौस्याद्थरोहिणीतुविजयाजातातप्रतिष्ठानके । चम्पायाममृताऽभयाचजनितादेशेसुराष्ट्राह्वयेजीवन्तीतिहरीतकीनिगदितासासप्तभेदाबुधै ॥ सर्वप्रयोगेविजयाच रोहिणीक्षतेषुलेपेषुचपूतनोदिता

हरीतकि

। विरेचनेस्यादमृताद्गुणाधिकाजीवन्तिकास्याद्दिहजीर्णरोगजित् ॥ स्याच्चेतकीसर्वरुजापहारिकानेत्रामयघ्नीमभयांवदन्तिताम् । तुल्य यथारोगमियप्रयोगैर्जातान्ञ्चयागुणास्यान्नकदाचिदन्यथा ॥ चेतकीचप्रुताहस्तेयावात्तिष्ठतिदेहिन । तावद्विरिच्यतेवेगात्तत्प्रभावान्नसंशय ॥ सप्तानामपिजातीनाप्रधानविजयास्मृता । सुखप्रयोगसुलभासर्वव्याधिषुशस्यते ॥ स्निग्धा.पमुनिमज्जतियासाज्ञेयागुणवतीभिषक्प्रवरै । यस्यायस्याभूयोनिमज्जनसागुणाद्याख्याता ॥ हरीतकसमव्याधीनुभूयस्तकतिपयद्यु । हरीतकीतुपाप्रोक्तातकतिदीर्घवर्णाचका ॥ हरीतकीतुवृत्ताथाशनुसर्पगतयाह्वे । शिशिरवञ्चरेशीर्ष गुर्वंशयामेव भवतीति ॥ इतिराजनिघण्ट ॥ अपिचभावप्रकाशे । नवास्निग्धघनावृत्तागुर्वीक्षिप्तायाजलेसि । निमज्जेत्सासुप्रशस्ताकथितातिगुणाप्रदा ॥ नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता । हरीतक्याप्रशस्यतेयत्तच्छ्रेष्ठमुच्यते ॥ चर्विताबर्द्धयत्यग्निपेषिताम्लशोधिनी । स्विन्नासङ्ग्राहिणीपथ्याभृष्टाप्रोक्तात्रिदोषनुत् ॥ उन्मीलिनीबुद्धिबलेन्द्रियाणांनिर्मूलिनीपित्तकफानिलानाम् ।

हलपद्धति स्त्री॰ लाङ्गलपद्धतौ । सीतायाम् । हलरेखायाम् हलस्यपद्धतिः ॥

हलप्रवाह । पु॰ सीरकर्षणे ॥

हलभूति । स्त्री॰ कृषिकर्मणि ॥

हलभृति । पु॰ मुनिविशेषे । उपवर्षे । कृषिकर्मणि ॥

हलराख्यम् । न॰ अतुल्ये । कासमपुष्पकी । तरवट॰ कृ॰ अश्मोरभाष प्र॰ ॥

हलरेखा । स्त्री॰ सीतायाम् ॥ हलस्यरेखा ॥

हला । अ॰ नाट्योक्त्यासख्याह्वाने ॥ समानाभिस्तथासख्योहलाभाष्याः परस्परमितिभरत ॥ हल॰ । बाहुलकादाप्रत्ययः ॥

हला । स्त्री॰ सख्याम् ॥ वायुजलादृधवाहुाय ॥ मद्ये । अवौ । भूमौ ॥

हलायुध । पु॰ बलदेवे ॥ हलमायुधयस्य ॥ हलस्यबलभद्रस्यगणनादागत ज्वलदित्तिरास्य युद्धेषु विष्णुपुराणम् ॥

हलाह । पु॰ चित्रिताश्वे ॥

हलाहल । पु॰ ब्रह्मसर्पे ॥ हयभा बौ ॥ हले । क्षुद्रभेदे ॥ पु॰ न॰ विषप्रभेदे ॥ हलतिकठरम् । हल॰ । अच । नञ्समा॰ आहलतिवा । अच् । अहलम् आहलवा ।

लत कर्मधारय ॥ स्त्री॰ अश्मायाम ॥ हुण्याम् ॥

हलि । पु॰ महद्धले । लत्यायाम् । कृष्टसमीकरणार्थस्थूलकाष्ठे ॥

हली । पु॰ बलभद्रे ॥ हलोऽस्त्यस्य । सुखादिभ्यस्तौनि ॥ कर्षके ॥

हलिनी । स्त्री॰ लाङ्गलिकायाम् ॥ हलसमूहे ॥

हलिप्रिय । पु॰ कदम्बवृक्षे । हलिनोबलदेवस्यप्रिय॰ सुरायाअधिवासनत्वात् ॥

हलिप्रिया । स्त्री॰ सुरायाम । मदिरायाम् ॥ हलिन॰ सङ्कर्षणस्य प्रिया ॥

हली । स्त्री॰ कलिकायाम् ॥

हलीनः । पुं॰ कैतक्याम् । शाकवृक्षे ॥

हलीमक । पु॰ पाण्डुरोगप्रभेदे ॥ यदातुपाण्डोर्वर्णस्य हरित श्यावपीतक । बलोत्साहक्षयस्तन्द्रामन्दाग्नित्व मृदुज्वर ॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमा । हलीमकतदातस्यविद्यादनिलपित्ततद्भूतिमाधमिश्र ॥ पाण्डौ पाण्डुरोगिणः ॥

हलीषा । स्त्री॰ लाङ्गलदण्डे ॥

हल्यम । त्रि॰ हलकृष्टक्षेत्रे । कृष्टे ॥ हलेनकृष्टम्॰ हलस्यकर्ष॰ । मतजनहलात्दितियत् ॥

हल्या । स्त्री० हलसमूहे ॥ हलानां समूहः । पाशादिभ्योय ॥

हल्लकम् । न० रक्तसध्यके । रक्तसौगन्धिकख्याते । हेला० इ० गौ० भा० प्र० पुष्पे ॥ रक्तवर्णविकाल विकाशिपुष्पविशेषे० इत्यन्ये ॥ हलति । हलविकसने । ण्वुल् ॥ यद्वा । हलनम् । सम्पदादित्वात् क्विप् । हल लाति । लादाने । आतोनुपेतिकः । संज्ञायाकन् ॥

हल्लनम । त्रि० प्रचलायिते । इ० ज० धर ॥

हल्लीषम । न० योषितामण्डलीनृत्ये ॥ स्त्रीणां हल्लीष सङ्गनर्त्तनमितिचिका०ण्डशेष ॥

हल्लीषकम । न० स्त्रीणामण्डलिकानृत्ये । मण्डलेनतुयन्नृत्यं स्त्रीणां हल्लीषकन्तुतदितिहेमचन्द्र ॥ एकस्यपुंसोबह्वीभिः स्त्रीभिः सह क्रीडने । तत्तु रासक्रीडा । यथा । गोपीनांमण्डलीनृत्यबन्धेहल्लीषकं विदुरितिकोषात् । तल्लक्षणं रासशब्दाद्द्रष्टव्यम् ॥

हव । पु० आह्वाने । निदेशे ॥ आह्वाने । हूतौ ॥ अध्वरे । सप्ततन्तौ ॥ ह्वानम । ह्वेञ् स्पर्द्धायाम् शब्देच । भवेऽनुपसर्गस्येत्यप सम्प्रसारणञ्च ॥ हूयतेऽत्रेतिवा ॥ आहवे० इ तवेदविद । आहूयन्ते परस्परं युद्धार्थं योद्धारोऽत्र ॥

हवङ्ग । पु० काश्यपार्थेदधिमिश्रितान्नभक्षके । इतिकश्चित् ॥

हवनम । न० होमे ॥

हवनायु । पु० अग्नौ ॥

हवनी । स्त्री० हवनकुण्डे ॥

हवनीयम् । त्रि० हविषि । होमीयद्रव्ये ॥ हूयते हु० अनीयर् ॥

हविषी । स्त्री० होमकुण्डे ॥

हविरशन । पु० अग्नौ ।

हविर्गन्धा । स्त्री० शम्या ॥

हविर्गृहम ) न० हवनगृहे । होमीये ॥
हविर्गेहम । )

हविर्भुक । पु० अङ्गिरसः पुत्रेषत्त्विद्यापितरि ॥ अग्नौ ॥ हवींषि । भुङ्क्ते । भुज० । क्विप ।

हविर्भू । स्त्री० पुलस्त्यस्यपत्न्याम् ॥

हविर्मन्थ । पु० अग्निमन्थे । श्रीपर्णे ॥

हविष्कृत् । स्त्री० देवानामर्थे या हविः सम्पादयतितस्याम् ॥

हविष्मत् । पु० हविर्भुजि । त्रि० आज्यादिमति ॥ ध्यानभावनावति ॥

हविष्यम् । न० हवनीये ॥ भोज्यभेदे ॥ मुन्यन्नादिषु ॥ घृते ॥ हविषेहितम् । उगवादिभ्योयत् ॥

हविष्यान्नम् । न० हविष्ये । व्रतादा

वह्नौयद्द्रव्यंविशेषे ॥ हविष्यघृत द्रव्ये ॥

हवि । न० होतव्यद्रव्ये । सान्नाय्ये । देवतोद्देशेनाग्नौत्यज्यमानद्रव्ये । त्यागप्रश्नेपक्रियाया साक्षात्‌ कर्मकारके ॥ तद्विविधम । पुरोडाशरूपमाज्यरूपञ्च ॥ घृते । सर्पिष ॥ हविषापरिणामीय यदेतदखिल जगत्‌ ॥ हूयते । हुदानादनयो अर्चिशुचिहुरुपोऽष्वादिभ्यो सि ॥ सुन्यज्ञानिपय सीमोर्मासंयज्ञानुपलक्षणम्‌ । आकारवचनैवप्रकृत्याहविरुच्यतइतिमनु ॥

हवुषा । स्त्री० हपुषायाम ॥

हवै । अ० ज्ञानार्थस्मरणार्थौनिपातो ॥ प्रसिद्धार्थावद्योतकौवेदेनिपातौ ॥

हव्यम्‌ । न० दैवेऽन्ने । हवनीये । हूयन्तेप्रीयन्तेदेवाऽनेन० हूयते० प्रक्षिप्यतेवा । हु० । अचोयत । गुणावादेशौ ॥

हव्यपाक । पु० चरौ ॥ पच्यते । पचे कर्मणिघञ । हव्यञ्चतत्० पाकश्च वह्ना । भावेघञ । पचनम्० पाक । हव्यस्यपाक ० पाकाऽधिकरणम्‌ ॥

हव्यवाह : । पु० अग्नौ ॥

हव्यवाहन । पु० अग्नौ ॥ हव्य वाहयति । वहन्ताद्दहेल्यु : ॥

हव्याश ) 
हव्याशन ) पु० अग्नौ ॥
हव्येश )

हस । पु० हास्ये ॥ हसनम्‌ । हसेहसनै । स्वनहसोर्वाऽप्‌ ॥

हसन्‌ । त्रि० हास्यकुर्वति ॥ हसेर्लट शतृ ॥

हसनम्‌ । न० हास्ये ॥ हसि० । ल्युट्‌ ॥

हसनी । स्त्री० अङ्गारधान्याम्‌ ॥ हसति । हसि० । करणल्युट्टित्त्वल्युट्‌ । टिड्ढेतिङीप्‌ ॥

हसनीमणि । पु० पर्परीके । अग्नौ ॥

हसन्तिका । स्त्री० हसन्त्याम्‌ । अङ्गारधान्याम्‌ ॥

हसन्ती । स्त्री० अङ्गारधान्याम्‌ ॥ मल्लिकाप्रभेदे ॥ शाकिनीविशेषे ॥ हसति । हसि० । लट शतृ । उगितश्चेतिङीप्‌ । शप्‌श्यनोर्नित्यमितिनुम्‌ ॥

हसितम । न० अट्टहास्ये ॥ हास्ये ॥ त्रि० विकसिते । फुल्ले ॥ हसि० । नपुंसकेभावेक्त ॥

हस्त । पु० करे । पञ्चशाखे । शये । पाणौ । शब्द० कृ० भा० प्र० ॥ करिकरे शुण्डायाम्‌ । सं० कृ० कृ० भा० प्र० ॥ मानभेदे । चतुर्विंशत्यङ्गुलमितेसप्रकोष्ठकरे ॥ यथा । यथानातगड्ङ्मेरेकमङ्गुलञ्चाष्टभिर्भवेत । अष्टौचर्यौजितैर्हस्त

हस्तिचारिणी । स्त्री० महाकरञ्जे ॥
हस्तिचेष्टितम् । न० गजेङ्गिते ॥ तद्यथा । तत्रादौ दन्तकल्पनविधानम् । दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ कल्पितदन्तच्छेदलक्षणन्तु । श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रणष्टदेशाप्तिः । लोष्टे तु लब्धपूर्वं लभति देशञ्च रत्नाप्तिः ॥ स्त्रीरूपेष्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नञ्च दण्डेन ॥ ४ ॥ कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् । गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥ ५ ॥ पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते । कृष्णश्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ शुभच्छेदलक्षणन्तु । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः । गलनम्लानफलानि च दन्तस्य समानि भङ्गेन । अथ शुभाशुभमाह । मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः । स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥ अत विशेषफलमाह । दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् । वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान् ॥ पुनरपि । आदिशेदुभयभङ्गदर्शनात्पार्थिवस्य सकलं कुलक्षयम् । सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभमथोऽन्यथा भवेत ॥ दन्तभङ्गस्य विशेषफलमाह । क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा । वाममध्यरदभङ्गखण्डने मत नाशकृद्दतोऽन्यथा परम् ॥ ११ ॥ अधुना गतीङ्गितमाह । स्खलितगतिरकस्मात्त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् । द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक्शकृत्कृत्- ॥ १२ ॥ शुभचेष्टितमाह । वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नम्य चोच्चैः । कक्ष्यासन्नाहकाले जनयति च मुहुः शीत्कारं बृंहितं वा तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयेद्दक्षिणञ्च ॥ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य । ग्राहं गृहीत्वोत्तरणं हि पश्चाद्यात्स्थलं वृद्धिकरन्नृभर्त्तुः ॥ १४ ॥ इति वाराह्या ९२ अध्यायः ॥
हस्तिच्छाया । स्त्री० गजच्छायायाम् ॥ कुञ्जरच्छायायाम् ॥

हस्तिनीपुरम् । न० हस्तिनापुरे ॥

हस्तिप । पु० हस्तिपके ॥ हस्तिनं पाति । पा० । आतोऽनुपसर्गे कः ॥

हस्तिपक । पु० हस्त्यारोहे । आधोरणे । निषादिनि ॥ स्वार्थे कन् ॥

हस्तिपद । पु० हस्तिकन्दे ॥

हस्तिपर्णिका । स्त्री० राजकोषातक्याम् ॥

हस्तिपर्णी । स्त्री० राजकोषातक्याम् । मेनुआ इ० भा० प्र० ॥ एर्वारौ । कर्कट्याम् ॥ मोरटायाम् ॥

हस्तिमद । पु० गजमदे । दाने ॥

हस्तिमल्ल । पु० सुरद्विपे । ऐरावते । अभ्रमातङ्गे ॥ विनायके । विघ्नराजे ॥ शङ्खनागे ॥

हस्तिमुख । पु० गणेशे ॥ हस्तिन इव मुखं यस्य ॥

हस्तिरोहणक । पुं० महावरङ्गे ॥

हस्तिलक्षण । न० गजस्वरूपे ॥ तन्निरूपणं यथा । भद्रो मन्दो मृगो मिश्र एतस्रो गजजातयः ॥ तत्रादौ भद्रलक्षणम् । मध्वाभदन्ताः सुविभक्तदेहा नचोपदिग्धा न कृशाः क्षमाश्च । गात्रैः समैश्चापसमानवंशा वराहतुल्यैर्जघनैश्च भद्राः ॥ मन्दलक्षणं यथा । वक्षोऽथ कक्ष्यावलयः श्लथाश्च लम्बोदरस्त्वग् बृहती गलश्च । स्थूला च कुक्षिः सह मेचकेन सैंही च दृग् मन्दमतङ्गजस्य ॥ २ ॥ मृगसङ्कीर्णलक्षणन्तु । मृगास्तु कृशाधरवालमेढ्रास्तन्वङ्घ्रिकण्ठद्विजहस्तकर्णाः । स्थूलेक्षणाश्चेति यथोक्तचिह्नैः सङ्कीर्णनागा व्यतिमिश्रचिह्नाः ॥ ३ ॥ अथैतेषामुन्नतिदैर्घ्यपरिणाहानां प्रमाणमाह । पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यमष्टौ च हस्ताः परिणाहमानम् । एकद्विवृद्धावथ मन्दभद्रौ सङ्कीर्णनागोऽनियतप्रमाणः ॥ ४ ॥ अथैतेषां वर्णमदलक्षणमाह । भद्रस्य वर्णो हरितो मदश्च मन्दस्य हारिद्रकसन्निकाशः । कृष्णो मदश्चाभिहितो मृगस्य सङ्कीर्णनागस्य मदो विमिश्रः ॥ ५ ॥ गजानां शुभलक्षणान्याह । ताम्रोष्ठतालुवदनाः कलविङ्कनेत्राः स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः । चापोन्नतायतनिगूढनिमग्नवंशास्त्वेकैकरोमचितकूर्मसमानकुम्भाः ॥ ६ ॥ विस्तीर्णकर्णहनुनाभिललाटगुह्याः कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च । रेखात्रयोपचितवृत्तकराः सुवालाधन्याः सुगन्धिमदपुष्करमारुताश्च ॥ दीर्घाङ्गुलिरक्तपुष्कराः सजलाम्बुदनादबृंहणाः । बृहदायतवृत्तकन्धरा धन्या भूमिपतेर्मतङ्गजाः ॥ ८ ॥ अथाशुभलक्षणान् गजानाह । निर्मदाभ्यधि

तत्पर्यायायथा । अथसर्पी० ख ञ्जनिकातुलिका० स्फेटिकेतिचि क्रागडशेष । गैभडीर वङ्क कीरीहापुत्रीरंजमहिकेतिहाराव ली ॥

हाफिका । स्त्री० जृम्भणे । जृम्भाया म् । उपपुष्पिकायाम् । जम्भाई० ई० भा० ॥

हायन । पु० चर्चिषि । ज्वाले । अग्ने शिखायाम् ॥ व्रीहिप्रभे दे । नीवारादाविति मुकुट । षष्टिकद्रुतिस्वामी । शालिजातिवि शेषे० इतिभिषज ॥ पु० न० सम्वत्सरे । शरदि । वर्षे ॥ जहा तित्यजत्युदकम । ओहाक त्यागे । भावान् जिहीतेव्याप्नोतिवा । औ हाङ गतौ । हृञ्श्रीङ्ग्क्षालवेरि त्युमयवशाट ।

हार । पु० मुक्तावली । मुक्तादाम नि । युधि । सङ्ग्रामे । मयुगे । गुरुवर्णे०ऽ० ॥ सुग्रीववानरस्यश्व शुरे । न० हरिकिरिते ॥ त्रि० मनो हरे ॥ मनोज्ञेऽनेन । हृञ० । घञ ॥ यद्वा । हारपतिमन । स्वार्थेण्यन्तादच् ॥ हरणम् । भा वेघञ् ।

हारक । पु० कितवे । चौरे ॥ ग द्यभेदे ॥ विज्ञानविशेषे ॥ शाखोट हक्षे ॥ भाजकाङ्के ॥ त्रि० हरणक र्त्तरि ॥ हरति । हृञ० । ण्वुल् ॥ क्रियते । बाहुलकात्कर्मणि वाण्वुल् ॥

हारहारा । स्त्री० कपिलद्राक्षायाम ॥

हारहूरम् । न० मद्ये ॥ हु० हैमव न्द्र ॥

हारहूरा । स्त्री० द्राक्षायाम् ॥

हारहूरका । स्त्री० गोस्तन्याम् ॥

हारावली । स्त्री० पुरुषोत्तमकृतको षविशेषे ॥ हारपङ्क्तौ ॥

हारि । स्त्री० पथिकसन्ततौ । पथि कपङ्क्तौ ॥ द्यूतादौपराजये ॥ त्रि० मनोज्ञे । रुचिरे ॥ शुभे ॥ हरति । हृञ० । बाहुलकादिञ् ॥

हारिकण्ठ । पु० कोकिले ॥ त्रि० हाराऽन्वितगले ॥

हारिणिक । पु० मृगयौ ॥ हरिणा न्हन्ति । यत्तिमत्स्यमृगान्हन्ती तिठक ॥

हारिणी । स्त्री० अत्यष्टिछन्द १७ प्रभेदे । तल्लक्षणन्तु । वेदर्त्वश्वैर्म भनमयलागस्तेतुतदाहारिणी । य था । वक्षोनिक्षिप्तमुक्तिकवलयेश्री मालिनीमेचकेराग स्त्रीयेऽधर किसलयेलाक्षारसोरञ्जनम् । गौ रीकान्ति प्रकृतिरुचिरारम्याङ्गराग च्छटासाकंसारेरजनिनकथयाधाम नोहारिणी ॥ हारवत्याम् ॥

हारित । पु० पक्षिविशेषे । हारी

ती ॥ हारमित ॥

हारितकम् । न॰ श॰ की ॥

हारिद्र । पु॰ कदम्बवृक्षे । मौषि ॥ विषविशेषे ॥ यथा ॥ हरिद्रातुल्यमूलोयोहारिद्र॰ समुदाहृत ॥ हरिद्रावर्णे ॥ वि॰ हरिद्रारञ्जिते ॥ हरिद्रयारक्तम् । हरिद्रामहारजनाध्यमञ् ॥

हारिद्रव । पु॰ मैत्रायणीयानांशाखाप्रभेदे ॥

हारिद्रुमत पु॰ गौतमगोत्रेमुनिविशेषे ॥ हरिद्रुमतोऽपत्यम् । अण् ॥

हारी । वि॰ हारविशिष्टे ॥ हारीस्यस्य । इनि ॥ हर्त्तरि ॥ अवश्यंहरति । हञ् ॰ । णिनि ॥

हारी । स्त्री॰ मौक्तिके । यथा । मुक्तामुक्ताफलशुक्तिबीजहारीचमौक्तिकमितिशब्दरत्नावली ॥

हारीत ॥ पुं॰ धर्मशास्त्रप्रवर्त्तकेमुनिविशेषे ॥ कितवे । छग्नि ॥ पक्षिविशेषे । हरिलाहारीतलक्षतिलोकप्रसिद्धे ॥ अस्यमांसगुणायथा । हारीतोरूक्षउष्ण' स्याद्रक्तपित्तकफापह ।स्वेदस्वरकर प्रोक्तईषद्वातकरश्चस : ॥ हारीतोरक्तपीत' स्याद्धरितोऽपिसकथ्यते ॥ हारीमोत ॥ हारीस्यक्षिनवा । कृनि । हारिमनोहरमितंगमनमस्य ॥ यद्वा । हारयति । क्षिप । ए तिस्म । ईगतौ । गत्यर्थेतिक्त' । हारयासावीतश्च ॥

हारीतक । पु॰ हारीतखगे ॥ स्वार्थेका ॥

हार्द्दम् । न॰ प्रेमणि । स्नेहे ॥ अभिप्राये ॥ हृदयस्यकर्म॰ । युवादित्वात्॰ हायनान्तयुवादिभ्योणित्यण् । हृदयस्यहृल्लेखितिहृदादेश ' ॥ हृद्मर्थ्यण्वा ॥

हार्द्दी । वि॰ स्नेहवति ॥

हार्य्य ' । पु॰ कलिद्रुमे । बिभीतके हरणीयाङ्के । माच्ये ॥ अदर्षे ॥ वि॰ हर्त्तव्ये ॥ हर्त्तुंयोग्य ' । हञ्॰ । ऋहलोर्ण्यत् ॥

हाल ' । पु॰ बलदेवे ॥ शालिबाहनभूपतौ ॥ हलि ॥ हलति । हलविलेखने । ज्वलतिकसन्तेभ्योण ॥

हालक ॥ पुं॰ पोतहरितवर्णाश्वे ॥

हालहलम् । न॰ पुं॰ हालाहलेविषे ॥ हालेवहलति॰ कठरम् । हल॰ । पचाद्यच् । हलमिवहलतिवा । अच् । प्रज्ञाद्यण् ॥ मधुतिष्ठतिवाचियोषितांहृदयेहालहलमहाविषम् । अतएवनिपीयतेऽधरोहृदयमुष्टिभिरेवताड्यते ॥

हालहाल । पु॰ न॰ हालाहले ॥

हाला । स्त्री॰ सुरायाम् । बलदेवप्रियायाम् । वरुणात्मजायाम् ॥ ह

लक्षणम् । हल० । ज्वलतीतिण
ह्यतेऽनयावा । हलमितिघ
ञ ॥ हालाहलंहन्तिचैव हालातु
साम्यपीडनम् । तालमर्दो ॥

हालाक्षयानम । न० चित्स्वराभि
धेदेश्या स्थानि ॥

हालाहल । पुं० न० विषप्रभेदे ॥
तत्स्वरूपन्तु । गोस्तनाभफलोगुच्छ
स्तालपत्रच्छदस्तथा । तेजसायस्य
दन्तसमीपस्थाद्रुमाद्य विश्वि
न्यायाहिमालये । दक्षिणाब्धितटे
देशेकोङ्कणेपिचजायते ॥ हालेव
आहलति । हल० पचाद्यच् ॥
हालाहलोनैवविषं विषंरमादरञ्ज
नाव्ययमेवमन्वते । येनेनजाग
र्त्तिनिपीयतच्छिवं स्वपन्नरमांमुह्य
तिनिद्रयाहरिः ॥

हालाहल । पु० कीटविशेषे । अ
ञ्जनिकायाम् । कुटिलकीटके ॥

हालाहलधर । पुं० सर्प्पे । हाला
हलस्यधरोधारकः ॥

हालाहला । स्त्री० अञ्जनिकायाम् ।
गिरिकायाम् । बालमूषिका
याम् ॥

हालाहली । स्त्री० मदिरायाम ॥

हालिक । पु० कर्षकस्य । सैरि
भे । हलेनखनति । तेनदीव्यतिच
जतीतिठक् । हल वहति० हल
स्यायशः । हलसीराट्ठक ॥

हालिनी । स्त्री० स्थूलपललथाम् ॥

हाली । स्त्री० कनिष्ठशालिकायाम ।
यथा । कनिष्ठाश्यालिकाहालीयभि
काशीविक्लिष्टेतिहेमचन्द्र ॥ म
दिरायाम् ॥

हालु । पुं० दन्ते ॥

हाव: । पु० आह्वाने । स्त्रीणांविला
सादौ । नारीणांशृङ्गारभावसूक्रि
यासु ॥ यथा । स्त्रीणांविलासबि
व्वोकविभ्रमाललित तथा । हेला
लीलेत्यमीहावा क्रियाशृङ्गारभा
वजा ॥ शृङ्गारात्० इत्यादि०
भावान्मनोविकाराज्जाता । क्रि
याश्चेष्टाचयद्वाराश्याविलासादि
काहावशब्दवाच्याइत्यर्थं ॥ इदम
म् । हुदानादनयो । क्वचिद्पवा
दविषयेप्युत्सर्गोऽभिनिविशते० कृत्य
त्विषयेघञ् । इतिशब्द प्रकारे
। तेनान्येपिबोध्य लीलाविला
सोविच्छित्तिर्विभ्रम किलकिञ्चि
तम् । मोट्टायितकुट्टमितविब्बोको
ललितनथा । विहृतञ्चेतिमन्तव्या
दशस्त्रीणांस्वभावजाइति ॥ हूय-
न्तेरागिणोऽनेनेतिहाव० । यद्वाहूय
न्तेरागिण० कामाकृष्यनेनेतिहा
व० । अधिकरणेकरणेवाघञ् ।
यथोक्तम् । युवानोऽनेनहूयन्तेना
रीभिर्मदनानले । अतोनिरुच्यतेहा
वस्तेविलासादयोमताइति । हाक

इवायतिशेषयति वैशेषिके ।
छ ॥

हास । पु० हास्ये ॥ हसनम् । हसे हसने । स्वनहसोर्वेति पक्षे घञ् ॥ प्रकाशे ॥

हासिका । स्त्री० हासे । हासो० हू० भा० ॥ हसे० । धात्वर्थनिर्देशे ण्वुल् । प्रकाशे ॥

हास्तिकम् । न० गजतायाम् । करिसमूहे ॥ हस्तिनां समूहः । अचित्तहस्तिधेनोष्ठक् ॥ हस्तिनीनां समूहो वा ॥ भस्याढे तद्धिते पुंवद्भावः ॥ त्रि० हस्त्यारोहे ॥ हस्तिना चरति० गच्छति । चरतीति ठक् ॥

हास्तिनम् । न० हस्तिनापुरे ॥ हस्तिदघ्ने । गजपरिमाणे ॥ हस्तिप्रमाणमस्य । पुरुषहस्तिभ्यामण् चेत्यण् । इनण्यनपत्ये इति प्रकृतिभावः ॥

हास्तिनपुरम् । न० हस्तिनापुरे ॥

हास्तिनायन० । पु० हस्तिनोऽपत्ये ॥ नडादित्वात् फक् । हास्तिनायन इति टिलोपाभावः ॥

हास्यम् । न० रसविशेषे । हसे हासे । यथा । विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हास्यो हासस्थायिभावः श्वेतः प्रथमदैवतः ॥ विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः । निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः ॥ ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । नीचानामपहसितं तथातिहसितं तदेष षड्भेदः ॥ ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥ मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् । अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम् ॥ हसि० । कर्त्तरि ण्यत् ॥ त्रि० परिहसनीये ॥

हाहलम् । न० हालाहले ॥

हाहा । अ० विस्मये । शोके ॥

हाहा । पु० गन्धर्वविशेषे ॥ हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसः इत्यमरः ॥ हा इति शब्दं जहाति । ओ हाक् त्यागे । विच् । शिक्षाह । अव्युत्पत्तिपक्षे० शसि० हाहान् । आतो धातोरित्यस्याप्रवृत्तेः ॥

हाहाकार । पु० शोकध्वनौ ॥ हाहा शब्दे । हाहाकरणम् । भावे घञ् ॥

हाहालम् । न० हालाहले ॥

हूहू । पु० देवगन्धर्वे ॥ साम्नाय भ । गन्धर्वो हाहाहूहूर्गन्धर्वो गायनोऽपि चेति साहसाङ्कः । गन्धर्वपीतिहाहूसीरिति वाचस्पतिः ॥

हिंसाकर्म । क्ली॰ अथर्ववेदोक्तमन्त्रयन्त्रादिनिष्पादितमारणोच्चाटनादिक्रियायाम् । अभिचारे ॥ हिंसाफलकर्म । श्यामपार्थिवादि ॥

हिंसात्मक । त्रि॰ हिंसास्वभावे ॥

हिंसारु । पु॰ व्याघ्रे ॥

हिंसालुक । पु॰ खादुकशुनि । काटखना॰ खाखया॰ कुत्ता इ॰ भा॰ ॥

हिंसितः । त्रि॰ प्राप्तहिंसे । हिंसां प्राप्ते ॥ यथा । यस्तु कन्यां पिता दत्त्वा न प्रयच्छति तां पुनः । अष्टौपि स गणास्ते नहिंसितानावसथ । इ॰ भारतद्रुपु॰ ॥

हिंसीर । पु॰ व्याघ्रे ॥ त्रि॰ खले । दुष्टे ॥ हिनस्ति हिंसि॰ । हिंसीरस्नीरचौ । खरेमेद ॥

हिंस्र । पु॰ शिवे ॥ भीमसेने ॥ हरे ॥ त्रि॰ हिंसाशीले । घातुके ॥ हिंस्राहिंसने दोषा भाषा यथा । कृपाकार्या सतामस्वद हिंस्रेषु च जन्तुषु । हिंसायां नहि दोषश्च हिंस्राणां च जीवन्वर । इ॰ ब्र॰ वै॰ कृ॰ जन्मखण्डे ८५ अध्यायः ॥ हिनस्ति । हिंसि॰ । नमिकम्पिस्म्यजसकमहिंसदीपो र ॥

हिंस्रक । पुं॰ हिंस्रपशौ । व्याघ्रे ॥ स्वार्थे कन् ॥

हिंस्रपशु । पुं॰ हिंसकजन्तौ । व्याघ्रे । हिंसके ॥

हिंस्रा । स्त्री॰ शीस॰ इ॰ भा॰ प्र॰ सिद्धे । काकोदन्याम् ॥ जटामांस्याम् ॥ वसायाम् ॥ हिनस्ति । हिंसि॰ । र । टाप् ॥ गवेधुकायाम् ॥ नाड्याम् ॥

हिक्का । स्त्री॰ ऊर्द्धवातप्रवृत्तशब्दविशेषे ॥ रोगोपसर्गविशेषे ॥ रोगविशेषे ॥ अस्याविप्रकृष्टनिदानमाह । विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमैस्तथानिलैः ॥ व्यायामकर्मभाराध्ववेगाघातापतर्पणैः । हिक्काश्वासश्च कासश्च नृणां समुपजायते ॥ अपतर्पणम्॰ अनशनादि ॥ सम्प्राप्तिमाह । वायुः कफेनानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥ सामान्यलक्षणन्तु । मुहुर्मुहुर्वायुरुदेति सस्वनो यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । सघोषवानाशु हिनस्त्यसून् यतस्ततस्तु हिक्केत्यभिधीयते बुधैरिति ॥ हिनस्तीति हिक्का । पृषोदरादित्वात् रूपसिद्धिः । हिगिति कायति॰ शब्दं करोतीति वा ॥ हिक्कनम् । हिक्क अव्यक्ते शब्दे । गुरोश्च टाप् ॥ यथा । हिक्कयते । हिक्कहि साम । पयायथ ॥

हिक्कार । पु॰ सामभक्त्यन्तरे । पाप्म

भक्तिकस्मात्प्रथमायामभक्तौ ॥

हिङ्गु । न॰ मूलविशेषजनिर्यासेधूपने ॥ पर्य्यायोगुणाश्चयथा । सहस्रवेधिजतुकं बाह्लीकं हिङ्गु रामठम ॥ हिङ्गूष्णं पाचनंरुच्यंतीक्ष्णंवातबलासहृत् । रसेपाकेचकटु कं स्निग्धंसर्वाग्निदीपनम् ॥ शूलगुल्मोदरानाहकृमिघ्नंपित्तवर्द्धनमिति ॥ हिनोति । हिगतौवृद्धौच । हिमगच्छतिवा । मृगय्वादि । ॥ वंशपत्र्याम् ।

हिङ्गुनाडिका । स्त्री॰ नाडीहिङ्गुनि । रामठ्याम ।

हिगुनिर्य्यास पु॰ निम्बवृक्षे ॥ हिङ्ग्वाकारो॰ हिङ्गुगन्धोवानिर्य्यासोऽस्य ॥ हिङ्गुरसे ॥

हिङ्गुपत्र । पु॰ इङ्गुदीवृक्षे । हिंगोटाइ॰ भा॰ प्र॰ ॥ हिङ्गुन । पत्रमिवपत्रं यस्य ॥

हिङ्गुपत्री । स्त्री॰ कारव्याम् । पृथ्वीकायाम् ।वंशपत्र्याम् ॥ अस्यागुणायथा । हिङ्गुपत्रीभवेद्रुच्यातीक्ष्णापाचनीकटु । हृद्वस्तिरुग्विबन्धार्श ' श्लेष्मगुल्मानिलापहा ॥ हिङ्गुपत्रमिवपत्रमस्या ॥ हिङ्गुन पत्रे ॥

हिङ्गुपर्णी । स्त्री । वंशपत्र्याम् ॥

हिङ्गुल । पु॰ न॰ कुरुविन्दे । इङ्गपादे ॥ चम्पनाम ॥ नि॰ लक्षणं नि॰ गुणाश्चयथा । हिङ्गुलंदरदम्लेच्छं चित्रास्रचूर्णपारदम ॥ दरदस्त्रिविध प्रोक्तश्चर्मारः शुकतुण्डकः । हंसपादस्तृतीय स्यात्गुणवानुत्तरोत्तर ॥ चर्मारः शुक्लवर्णः स्यात्सपीतः शुकतुण्डकः । जपाकुसुमसङ्काशोहंसपादोमहोत्तम ॥ तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि । हृल्लासकुष्ठज्वरकामलाश्चप्लीहामवातौचगरंनिहन्ति ॥ अदूर्ध्वपातनयुक्त्यातुडमरुयन्त्रपाचितम् । हिङ्गुलं तत्समूलन्तुशुद्धमेवनशोधयेत् ॥ शोधनंविधिस्तु । मेषीक्षीरेणदरदमम्लवर्गैश्चभावितम । सप्तधारान्प्रयत्नेनशुद्धिमायातिनिश्चितम् शोधितस्यगुणाःसूक्ष्मास्तिक्ताकषाय मिश्रणादिना ॥ हिङ्गुलाद्रसाकर्षणविधिर्यथा । निम्बूरसैर्निम्बपत्ररसैर्वायाममात्रकम् । घृष्ट्वादरदमूर्ध्वन्तुपातयेतसूतयुक्तिवत् । ततादूर्ध्वपठरीलग्नं ग्राह्यंयोग्यरसमुत्तमम् । शुद्धमेवहितत्सूत सर्वकर्मसुयोजयेत् ॥ इ॰ भा॰ प्र॰ म । सिन्दूरे ॥

हिगुला । स्त्री॰ देशविशेषे । यथा । अक्षारनृप हिगुलायामेरवीभीमलोचन । कोट्टवीसामहामायास्त्रिगुणादिगम्बरी ॥ इतिमन्त्रचूडा

मणीपीठमाला ॥ वामनपुराणे मपि यथा । कन्याश्चोत्खेदसञ्जातास्तु स्खलितलिङ्गुता । ततस्ता माङ्गलाख्यं प्रभामैरवमूर्त्तिमान शङ्करो वरदो लोकश्रेयोर्थायिश्चाम हत त्वां पूजयिष्यन्ति सुराश्चपय पितरस्तथा ॥ यक्षविद्याधराश्चैव मानवाश्च शुभङ्करि । त्वां स्तोष्यन्ति सदा देवि बलिपुष्पोत्करैः वरै श्च स्वं कीर्त्तिशुभ नामयस्मात् रुधिरचर्च्चिता । कृष्णे वसुमा वरदेन चर्च्चिका भूतानुयाता हरिचमर्वासिनी महीं समन्ताद्विचचार सुन्दरी स्थल गता हैङ्गुलमाश्च सुत्तममिति ॥

हिङ्गुल । पु० हिङ्गुले ॥

हिङ्गुलिका । स्त्री० कण्टकार्याम् । भण्टाक्याम् ॥

हिङ्गुली । स्त्री० वार्त्ताक्याम् । सिंह्याम् । भण्टाक्याम् ॥ हिङ्गुलाति । ला० । आतोनुपेतिक । गौरादित्वान् ङीष् ॥ बृहत्याम् । कण्टकार्याम् ॥

हिङ्गुलु पु० न० रङ्गद्रव्यविशेषे ॥ यथा । दारदन्तु हिङ्गुलु स्याद्धिङ्गुल रक्तपारदमिति चिन्तामणिः ॥

हिङ्गुशाटिका । स्त्री० वगाल्याम् ॥

हिङ्गूलम् । न० धातुविशेषे । मधुमूले । मौचाल० इ० गौ० दे० भा० प्र० ॥

हिज्ज । पु० हिज्जले ॥

हिज्जल । पु० इज्जले । निचुले । जलवेतसविशेषे ॥ यथा । इज्जलो हिज्जलश्चापि निचुलश्चाम्बुजस्तथा । जलवेतसवद्वेद्यो हिज्जलोऽयं विषापह । इति भावप्रकाशः ॥ हिनोति । हि गतौ वृद्धौ च । क्विप् । हित् जलमस्य ॥ स्थलवेतसइत्यन्ये ॥ समुद्रफलेतिख्यातवृक्षेपरे ॥

हिन्तीर । पु० हस्तिपादबन्धे । निगडे । चन्दुके ॥ इति हेमचन्द्रः ॥

हिडम्ब ।)<br>हिडिम्ब ।) पु० असुरविशेषे ॥

हिडिम्बजित् ।)<br>हिडिम्बनिसूदन ।) पु० भीमसेने ॥<br>हिडिम्बभित् ।)

हिडिम्बा । स्त्री० हिडिम्बासुरभगिन्याम् ॥

हिडिम्बापति ।)<br>हिडिम्बारमण ।) पु० वृकोदरे । रामदूते । अर्जुनध्वजे ॥

हिण्डनम् । न० भ्रमणे । रते ॥ यामे ॥ क्रीडायाम् ॥ हिडि गत्यनादरयोः । ल्युट् ॥

हिण्डक । पु० लग्नाचार्ये ॥

हिण्डिर । पुं० हलडोरे ॥

हिण्डी । स्त्री० शिखरवासिन्याम् । दुर्गायाम् ॥ इ० चि० शेष ॥

हिन्दोल । पुं० श्रावणशुक्लपक्षविहितभगवद्यात्राविशेषे । दोलयात्रेति प्रसिद्धे षड्रागान्तर्गतरागविशेषे ॥ यथा । भैरव कौशिकश्चैव हिन्दोलदीपकस्तथा । श्रीरागो मेघरागश्च षडेते पुरुषाह्वयाइति ॥
हिन्दोलक । पु० यानविशेषे । दोलायाम् । प्रेङ्खायाम् ॥
हिन्दोलनम् । न० दोलने ॥
हिन्दोला । स्त्री० दोलिकायाम् ॥
हिबुकम् । न० लग्नाच्चतुर्थभवने ॥
हिम । पुं० चन्दनवृक्षे ॥ कर्पूरे ॥ चन्द्रे । हिमन्तर्तौ ॥ हिमालयपर्वते ॥ न० तुषारे । रजनीजले ॥ तत्पर्यायायथा । अवश्यायस्तुनीहारस्तुषारस्तुहिन हिमम् । प्रालेय महिकेति ॥ चन्दने ॥ नवनीते ॥ मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शीते ॥ त्रि० शीतले ॥ हन्ति । हन० । हन्तेर्हिचेतिमक् ।
हिमज । पुं० विकङ्कतवृक्षे ॥
हिमकर । )
हिमकिरण । ) पु० चन्द्रे । कर्पूरे ॥ हिमा कराः किरणायस्य ॥
हिमकूट । पु० शिशिरर्तौ ॥ हिमकदम्बे ॥
हिमगिरि । पु० हिमालयपर्वते ॥
हिमज । पु० मैनाकाचले । मैनकापुत्रे । हिमात् जात । जनी० । पञ्चम्यामितिड ॥ न० हिमोद्भवे ॥
हिमजा । स्त्री० गौर्याम । पार्वत्याम् ॥ हिमात् हिमालयात् जाता । जनी० । ड । टाप् ॥ शच्याम । इन्द्राण्याम् । क्षीरिण्याम् ॥
हिमझटि । पु० भूमिकायाम् । कुहेलिकायाम् ॥
हिमतैलम् । न० कर्पूरतैले ॥
हिमदुग्धा । )
हिमदुग्धिका । ) स्त्री० क्षीरिण्याम् ॥
हिमदुर्दिनम् । न० पश्चिमे । हिमनिपातितैनदुर्दिनयस्त्रिन ॥
हिमद्युति । पु० इन्द्रौ । चन्द्रे ॥ हिमाद्युतिर्यस्य ॥
हिमद्रुम । पु० महानिम्बे ॥
हिमनामा । पु० कर्पूरे ॥ हिमस्यनामान्वनामास्यश ॥
हिमप्रस्थ । पु० हिमगिरौ ॥
हिमवान् । पु० उमागुरौ । नगाधिराजे । हिमालये ॥ शतद्रुचन्द्रभागाद्या । हिमवत्प्रभवानि: सृता । सतांनिधिर्ध्यो हिमवान् भोगिनांमलयाऽचल । ॥ हिमम् अस्त्यस्मिन् । मतुप् । वत्वम् ॥
हिमवत्सुत । पु० हिरण्यनाभे । मैनाकाचले ॥
हिमवत्सुता । स्त्री० उमायाम् ।

गौर्य्याम्‌ हिमवत 'सुता ॥ गङ्गायाम्‌ ॥ इ० घ० य ॥

हिमवत्सुतावधू । पु० । भौमितीर्थविशेषे ॥

हिमवालुक । पु० कर्पूरे ॥ इ० राजनिघण्टः ॥

हिमवालुका । स्त्री० कर्पूरे ॥ हिमाचासीवालुकाच ॥

हिमशर्करा । स्त्री० यावनाल्याम्‌ ॥

हिमशैल । पु० हिमवति । मेनाधवे ॥ हिमप्रधान शैल ॥

हिमशैलजा । स्त्री० पार्वत्याम्‌ ॥

हिमसंहति । स्त्री० महाहिमे । हिमान्याम्‌ । हिमानांसंहति ॥

हिमह । पु० आदित्ये ॥ वह्नौ ॥ हिम जाड्यं हन्तीति हिमहः । ड

हिमहासक । पु० हिन्तालवृक्षे ॥

हिमा । स्त्री० नागरमुस्तके ॥ सूक्ष्मैलायाम्‌ ॥ रेणुकायाम्‌ ॥ पृक्कायाम्‌ । भद्रमुस्तायाम्‌ ॥ चविकायां ॥

हिमांशु । पु० चन्द्रमसि । हिमांशवोयस्य ॥ कर्पूरे ॥

हिमांशुभिख्यः । पु० कर्पूरे । न० रौप्ये ॥

हिमाग । पु० हिमालये ॥ हिमप्रधानोगः ॥

हिमागम । पु० हेमन्ते ॥ हिमस्यागमोयस्मिन्‌ ।

हिमाचल । पुं० हिमालये ॥

हिमात्यय । पुं० वसन्तर्त्तौ । हिमस्यात्ययोयस्मिन्‌ ॥

हिमाद्रि । पु० हिमशैले ॥

हिमाद्रिजा । स्त्री० पार्वत्याम ॥ हिमाद्रेर्जाता । जनी० । ड । टाप्‌ ॥ क्षीरिण्याम्‌ ॥

हिमाद्रितनया । स्त्री० पार्वत्याम ॥

हिमाद्रितनयापति । पु० शिवे ॥

हिमानी । स्त्री० हिमसंहतौ ॥ महद्धिमम । हिमारण्ययोर्महत्वइति ङीषानुकौ ॥ यथा । आगतावतरैवहिमानीसिच्यताम सुरतरङ्गिणीसदा । कृष्णवर्त्मनिगुणान्‌कलयन्तीजीवनेपुलकयन्त्यनुरागम्‌ ॥ यावनालशर्करायाम्‌ ॥

हिमाराति । पु० चीतिकेत्रे । धनञ्जये ॥ किरणमालिनि । सूर्ये ॥ हिमस्यआराति ॥

हिमाल । पु० हिमशैले ॥ हिमेन अलति । अलभूषणादौ ॥ अच्‌ ॥

हिमालय । पु० भारतवर्षस्यसीमावर्त्तौ । उदग्गद्रौ । नगपतौ । मेनाधवे । उमागुरौ ॥ स्थावराणां मध्ये भगवतोविभूतिरयम्‌ ॥ हिमस्यालय ' ॥ शुक्लखदिरे ॥

हिमालयसुता । स्त्री० पार्वत्याम्‌ ॥

हिमालया । स्त्री० भूम्यामलक्याम ॥

हिमालम्‌ । न० उत्पले ॥

हिरण्यस्तूप । पु० ऋषिविशेषे । अङ्गिरस पुत्रे ॥

हिरण्याक्ष । पु० काश्यपाद्दित्यांसमुत्पन्ने० आद्यदैत्यविशेषे ।

हिरण्याश्व । पु० तुलापुरुषादिषोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्याश्वरथ । पु० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरुक् । अ० विनार्थे ॥ हिरुकत्वामपिमे० अ० । मध्यार्थे । हिनोति । हिगती । रुक्प्रत्यय । सामीप्ये । अधमार्थे ।

हिलमोचि । स्त्री० हिलमोचिकायाम् ॥

हिलमोचिका । स्त्री० आद्रूयाम् । चार्याम् । जलाद्याम् । हिलञ्चा० ह० गौ० भा० प्र० हिलसाख्यशाके । यथा । शोथकुष्ठकफपित्तहरतेहिलमोचिका । हिलति । हिलभावकरणे । इगुपधेतिकः । मोचयति । मुचिवलृल् । हिलाचासौमोचिका । डापोरितिह्रस्वः ॥ चुत्वं ॥

हिलमोची । स्त्री० हिलमोचिकायाः ॥

हिल्ल । पु० भरादिपक्षिणि ॥

हिल्लोल । पु० तरङ्गे । नद्यादिजलस्य वायुनातिर्यगूर्द्धगमने । रतिबन्धविशेषे ॥ यथा । स्वदिक्षस्त्वाक्षिप्य पादौकराभ्याधरवेत् कुचौ । यथेष्टताडयेद्योनिबन्धोहिल्लोलसंज्ञक ॥

हिल्लला । स्त्री० तृल्वतायाम् ॥

हिवुक्त । न० लग्नाच्चतुर्थभवने ॥

ही । अ० तु खहेतौ ॥ विषादे ॥ विस्मये ॥ यथा । हनविधिललितानाहोविचित्रोविपाकः ॥ हिनोति । हि० विच । सन्नापूर्वस्यत्वात्गुण । क्विपितुगभावो वा । भावेवाप्रत्ययौ । पृषोदरादित्वाद्दीर्घ ॥ हननमत्यान्तुलकात्तोर्वा ॥ शोके ॥

हीन । त्रि० गर्ह्ये ॥ ऊने । प्रतिवादिविशेषे ॥ यथाहनारद । अन्यवादीक्रियाद्वेषीनोपस्थायीनिरुत्तर । आहूतप्रपलायीचहीनः पञ्चविध स्मृतः ॥ ओहाति० हीयतेस्मवा । ओहाक्त्यागे । आदितश्चेति० कर्म्मणिवा । ओदितश्चेतिनत्वम् । घुमास्थेतीत्वम् ।

हीनक्रिय । त्रि० जातकर्मादिक्रियावर्ज्जिते ॥

हीनवर्ण । त्रि० नीचजातौ ॥ यथा । हीनवर्णोपभुक्तायाम्त्याज्याबध्यापिवाभवेदिति ।

हीनवादी । त्रि० विरुद्धार्थवादिनि ॥ यथाहनारद । पूर्वंवादपरित्यज्ययोन्यमालम्बतेपुन । वादसक्रमणाज्ज्ञेयोहीनवादीसवैनरइति ॥ वाक्यवर्ज्जिते । अधरे ॥

हीनाङ्ग । त्रि० स्वभावतोन्यूनाधि

हाँगी । विकलाङ्गी । अपीगण्डे ॥ तेनसहपरिहासनिषिधेयथा । जातिहीनविद्याहीन रूपहीनमद्धनम् । हीनाङ्गमतिरिक्ताङ्ग तेनदोषित्वनाक्षिपे ॥ इतिब्रह्मपुराणाङ्गवेदोचार्थविनिश्चयमितिकालिकापुराणे ४४८ध्याय ॥

हीनाङ्गी । स्त्री० क्षुद्रपिपीलिकायाम् ॥

हीर । पु० शङ्करे । शिवे । हरे ॥ प्रलयेकालत्व हरति । हृञ० । पचाद्यच । पृषोदरादित्वाद्दीत्वम ॥ वज्रे ॥ सर्पे ॥ श्रीहर्षकवेपितरि ॥ हारे । लगणे० ऽऽ।० ॥

हीरक । पु० रत्नमुख्ये । सूचीमणि । दधीच्यस्थि । हीरे । वज्रे हीरा० इ० भा० प्र० रत्ने ॥ यल्लक्षेषुतु योग्य तदत्रोलिखित मया । तत्रैवतस्मादृष्टव्य गुणनामादिवर्णनम् । भाषान्तरान्तरे ॥ यथा । वज्रिटगणमन्त्यरगणमेवचरणशोभितम्० प्रथमसुदतिनागन्तपति रत्नदन्तिनोज्ज्वितम् । राजभजनजकालपठनपञ्चरटमरछनजीरखकृतिना ममवतिकाममर्वतिसज्जनम् ॥ यथ । ध्यानमटतसाम पठतनामरटतकं भवधर्मयतमर्म भजतकर्म सुजतर्मघवम । दृषारभवनद्वाररमणसारचयमवासनातावदयति मावतरति० कालन्दपति शासनास्वार्थक ॥

हीरा । स्त्री० लक्ष्म्याम् । श्रियि ॥ तैलपायिकायाम् ॥ पिपीलिकायाम् ॥ काश्मर्याम ॥

हीराङ्ग । पु० इन्द्रस्याम । वज्रेकुलिशे ॥

हीलम् । न० रेतसि । इतिकश्चित ॥

हीलुकम् । न० मद्यविशेषे । गौडाम ॥

हीहो । अ० विस्मये ॥ हास्ये ॥ यथा । कस्त्व लोहितलोचनास्यचरणोहस कुतोमानसात्किं तत्खादितस्वर्णपङ्कजवन नीर सदाशिमर्गम् । रत्नानाश्चिय प्रवालललितकान्दूरेह क्वाचिन्महाकाला विकलवसन्तिनवकोराकश्रुहीहो क्रमम् ॥

हुङ्कृतम् । न० हुङ्कारे । वन्यवराहशब्दे ॥

हुङ्कृति । स्त्री० रणवीरध्वनौ ॥

हुड । पु० । मेषे ॥ पाजिकाकाटा इ० गौ० दे० भा० प्र० । चौरादिनिवारणार्थं भूमिनिहितकीलमयलोहमङ्कुविशेषे ॥ लगुडे ॥ इ० महाभारतम् । भावयाबुरुजडतिख्यातेयोधनाश्रयस्थाम ॥ विषमूत्रोत्सर्जनगृहे ॥

हुडम्ब । पु॰ हुडुम्बे ॥
हुड् । पु॰ मेषे
हुडवा । पु॰ दात्यूहे ॥
हुडुक्क । पु॰ वाद्यभेदेमदमत्ते ॥ दात्यूहपक्षिणि ॥ दण्डकी । हुडक्का इ॰ गौ॰ दे॰ भा॰ प्र॰ वाद्यविशेषे ।
हुडम् । न॰ भयशब्दे ॥
हुडुम्ब । पु॰ ऊर्ध्वदिष्टि । हुडु म॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
हुडु । पु॰ वृत्र ग्रामशूकरे ॥ मूर्खे ॥ राक्षसे ॥
हुत । पु॰ देवस्यास्त्रीहोमे ॥ त्रि॰ वषट्कृते । मन्त्रेणाग्नौप्रक्षिप्तघृतादौ । हुवि प्रक्षेपे । हूयते । हुशानादनयो । क्त ॥ न॰ हवने । होमे । अग्नौहवि प्रक्षेपक्रियायाम् । नपुंसकेभावे क्त ॥
हुतभुक्प्रिया । स्त्री॰ अग्निपत्न्याम ॥ स्वाहायाम् ॥ हुतभुज प्रिया ॥
हुतभुक् । पु॰ वैश्वानरे । अग्नौ ॥ हुतभुक्क । भुज॰ । क्विप् ॥ चित्रकौ ॥ हुत हविर्भुनक्तिपालयति विगुणमपिसगुणकरोति तस्मान्नेत्राणादिति हुतभुक् ॥
हुतवह । पु॰ अग्नौ ॥ हुतस्य वह ॥

हुताश । पु॰ अग्नौ ॥ हुत अश्नाति । अश॰ । कर्मण्यण् ॥
हुताशन । पु॰ अग्नौ ॥ हुत अशनमस्य ॥ यथा । लक्षहोमे तुर्यांशे स्यात कोटिहोमेहुताशन । पूर्णाहुत्यामृडोनामशान्तिकेवरद सदा ॥ शिवे ॥
हुताशनी । स्त्री॰ होलिकायाम ॥
हुति । स्त्री॰ हवने हु॰ क्तिन्॰ ॥
हुम् । अ॰ स्मृतौ ॥ अपाकृतौ ॥ अर्धप्रश्ने ॥ अभ्यनुज्ञायाम् ॥ वितर्के ॥ भये । भर्त्सने । कोपे । हूयते । हु॰ । बाहुल कात्मुम ॥
हुलहुली । स्त्री॰ मुखवाद्यायाम् । स्त्रीणामङ्गलजनकमुखध्वनिविशेषे । हुलहुलु इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
हुहु । ) पु॰ गन्धर्वविशेषे ॥ यथा । हूहूर्हुहुश्चहविषीहूहूर्हुहुश्च कुत्रचिदितिशब्दरत्नावली ॥
हुहू । )
हू अ॰ आह्वाने । आह्वायाम् । अहङ्कारे ॥ शोके ॥
हूङ्कार । पु॰ हूमितिभयजनकध्वनिकरणे ॥
हूड । पु॰ मेषे ॥
हूण । पु॰ । म्लेच्छजातिविशेषे ॥ यथा । श्वपाकाश्च॰ हूणाश्च

स्वभागिनामिति ॥

हृदयम । न० उरसि । वक्षसि ॥ बुक्कायाम् । हृदयान्तर्गतमांसविशेषे । अग्रमांसि । मानसी । स्वान्ते । स्मृतिप्रत्ययास्पदेस्थाने ॥ हरति० आहरतिविषयान्० क्रियतेविषयैर्वा । ह्रञो सुक दुकौचेतिकयम् दुगागमश्च ॥ परमात्मनि ॥ हृदिस्थम ॥ हृदयकमले ॥ यथा 'पद्मकोषप्रतीकाशं सुषिरंचाप्यधोमुखम् । हृदय तद्विजानीयाद्विश्वस्यायतनमहत् ॥ अपिच । हृदयं पुण्डरीकोपसदृश स्यादधोमुखम् । जाग्रतस्तद्विकसतिस्वपतस्तु निमीलति । आशयस्तत्तु जीवस्य चेतनस्यानमुत्तमम । अतस्तस्मिन्‌ समोव्याप्ते प्राणिन स्वपयन्तिहि ॥

हृदयग्रन्थि । पु० अहङ्कारे । चिज्जडयं थनरूपेऽहङ्कारे चिदहङ्कारतादात्म्यरूपे ॥ चिज्जडात्मकत्वात्० ग्रन्थिरिवग्रन्थि ' ॥ हृदयमेवग्रन्थिर्वा ॥ हृदुभे ॥

हृदयङ्गमम । चि० सुखजनकोक्तौ । युक्तियुक्तवाक्ये । सङ्गते ॥ हृदयङ्गच्छति । गमश्चेतिखच् ॥

हृदयज ' । पु० पुत्रे ॥ चि० हृदयउत्पन्ने ॥

हृदयज्ञ ' । चि० हृदयप्रिये ॥ हृदयाभिज्ञे ॥

हृदयदौर्बल्यम् । न० मनसोभ्रमणादिरूपेऽधैर्ये ॥ हृदयस्यदौर्बल्यम् ॥

हृदयवान् । चि० हृदयालौ । मतुप् ॥

हृदयशङ्कु । पु० । सन्देहे ॥

हृदयशुद्धि । स्त्री० अनवरोधे ॥ हृदयस्यशुद्धि ।

हृदयस्थ । चि० सर्वान्तर्यामिणि ॥

हृदयस्थानम् । न० भुजान्तरे । क्रोडे । उरसि ॥

हृदयस्पृश । चि० मनोज्ञे । हृदयस्पृशति । स्पृश० । स्पृशोऽनुदकेक्विन् ॥

हृदयात्मक । )
हृदयात्मा । ) पु० कङ्कखगे ॥

हृदयालु । पु० प्रसन्नचेतसि । सुहृदये ॥ प्रशस्तहृदयमस्यास्ति । हृदयाच्चालुरन्यतरस्यामित्यालु ॥

हृदयाविध् । चि० पिशुने ॥ हृदयमाविध्यति । क्विप ॥

हृदयिक । चि० प्रसन्नचेतसि । हृदयिनि ॥ हृदयंप्रशस्तमस्यास्ति । ठन् ।

हृदयी । चि० प्रशस्तचेतसि । हृदयालौ ॥ हृदयप्रशस्तमस्य । इनि ॥

हृदयेश । पु० धवे । भर्त्तरि । पत्यौ ॥

हृदयेशा । स्त्री० प्रेयस्याम् । भार्यायाम । कान्तायाम् ॥

१२ ८ अ

हृल्लेख । पु० तर्के ॥ ज्ञाने ॥ हृदयलिखते । लिख० । कर्म्मण्यण् । हृदयस्य हृल्लेखेत्यादिना हृदादेश ॥

हृल्लेखा । स्त्री० मायाबीजे ॥ औत्सुक्ये ॥ भुवनेश्वर्याम् ॥ ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरीति देवीगीता । हृद्दिलेखाजागर्त्तिप्राणशक्तिरियं परा । हृल्लेखाकथ्यते तस्मादिति भुवनेश्वरीरहस्यम् ॥

हृषित । त्रि० विस्मिते ॥ प्रीते ॥ प्रहते ॥ हृष्टलोमनि ॥ प्रणते ॥ वर्म्मिते ॥ हर्षितस्म० हृष्यतिस्म वा ॥ हृष अलीके० हृष तुष्टौ वा क्त । हृषेर्लोमस्विति विकल्पेनेट ॥

षी । पु० अग्नेर्षीमयी ।

हृषीकम् । न० श्रोत्रादीन्द्रिये ॥ हृष्यत्यनेन । हृष० । अनिहृषिभ्योकिच्चेतीकन् ॥

हृषीकेश । पु० विष्णौ ॥ सर्वेन्द्रियप्रवर्त्तकत्वेन सर्वान्तर्यामिणि । सर्वास्त्र कारणत्वे । सर्वनिगूढाभिप्राये ॥ हृषीकाणामिन्द्रियाणामीशोऽधिष्ठाता ॥ हृषीकाणि नियम्याह यत प्रत्यक्षतां गत । हृषीकेश इति ख्यातो नाम्ना तत्र स संस्थित ।

हृषु । पुं० हर्षे ॥ सूर्ये ॥ अग्नौ ॥ मनौ । राहौ । हृष्यति । हृष तुष्टौ । हर्षे वा हृषु अलीके । पृभिदिव्यधिगृधिधृषहृषिभ्य इति उः । एष्वर्थ षु कु प्रत्ययश्च कित् इति मनोरमा ॥

हृष्ट । त्रि० जातहर्षे । अस्य पर्यायाः यथा । हृष्टमनस्तु मत्त प्रह्लन्न प्रमुदित प्रीत इति ॥ रोमाञ्चिते । अप्रतिहते । विस्मिते ॥ हर्षितस्म० हृष्यतिस्म वा । हृषु० वा । क्त । हृषेर्लोमस्विति विकल्पेनेट कत्वात् । यस्य विभाषेति नेट् ॥

हृष्टमानस । त्रि० सहर्षमानसे । हर्षमाणे । विकुर्वाणे । प्रमनसि ॥ हृष्ट मानस यस्य स ॥

हृष्टरोमा । त्रि० रोमाञ्चिते ॥ हृष्टानि रोमाणि यस्य स ॥

हृष्टि । स्त्री० आनन्दे । माने ॥

हृष्यत् । त्रि० रोमाञ्चिते ॥

हे । अ० सम्बोधने ॥ आह्वाने असूयादौ ॥ जिहीति । जिगती । विच् ॥ पादपूरणे ॥

हेका । स्त्री० हिक्कायाम् ॥ इ० त्रि० शेष ॥

हेठ । पु० बाधायाम् । विहेठे ॥

हेडावुक । पु० अश्वविक्रयिणि । घोटकविक्रयकारिणि ॥

हेति । स्त्री० रवेरर्च्चिषि ॥ अस्त्रे ॥ वह्निज्वालायाम ॥ जिहीति

हूतस्ततोगच्छति हि० । जतियू
तिजूतिसातिहेतिकीर्त्तयश्चेति
क्तिन्नन्तानिपातिता । हन्ति० ह
न्यतेऽनयावा । क्तिन् । जतियूती
तिसाधु ॥

हेतु । पु० कारणे । बीजे । निमि
त्ते । नियतपूर्व्वभाविनि । येन
विनाय न भवति तस्मिन् ॥ हिनो
ति व्याप्नोति कार्य्यम् । हिगतौ
क्रमिमनिजनिगाभायाहिभ्यश्चेति
तु ॥ फलसाधनयोग्ये पदार्थे ॥
हेतुलक्षणंयथागौतमः उदाहरणसा
धर्म्यात्साध्यसाधनं हेतुस्तथावैधर्म्या
त् ॥ ३४ ॥ अत्रसाध्यसाधनं हेतुरि
तिसामान्यलक्षणम् । साध्यसाध
नं साध्यसिद्ध्यनुकूलज्ञापकत्वबो
धकत्वमर्थं तथाचसाध्यतावच्छे
दकावच्छिन्नसाध्यान्वितज्ञापकत्वबो
धकः साध्यान्वितत्वार्थबोधकोऽव
यवइतिफलितार्थः । तद्द्वैविध्य
माह उदाहरणसाधर्म्यात् तथा
वैधर्म्यादिति । साधर्म्यमन्वयः
वैधर्म्यं व्यतिरेकः । तादृशव्या
प्तिरितिफलितार्थः । उदाहरण
साधर्म्यम् उदाहरणबोध्यान्वय
व्याप्तिस्तयेऽन्वयीहेतुरित्यु
दाहरणेतिष्ठार्थम् । तथाच
ज्ञातान्वयव्याप्तिकहेतुबोधकोहेत्व
वयवः । ज्ञातव्यतिरेकव्याप्तिक
हेतुबोधकोहेत्ववयवइतिफलि
तार्थः । एवमप्रतीतान्वयव्याप्ति
कहेतुबोधकोहेत्ववयवोव्यतिरेकी
हेतुः इत्थमेवप्रतीतान्वयव्यतिरेक
व्याप्तिकहेतुबोधकोहेत्ववयवोऽन्व-
यव्यतिरेक्यपिसूचितमितिवद-
न्ति । साधने ॥

हेतुकः । पु० कारणे । स्वार्थे कः ।
त्रि० तत्सम्बन्धिनि ।

हेतुता । स्त्री० कारणतायाम् । हेतु
त्वे ॥ सङ्गतिविशेषे । प्रत्यक्षप्रमा
णं हेतुतासङ्गतं । हेतोर्भावः ।
तस्यभावस्त्वतलावितितल् ॥

हेतुमान् । त्रि० व्यक्ते । कारणवति
युक्तियुक्ते । हेतुरस्यास्मिन्नस्यवामतु
प् फणि ॥

हेतुशास्त्रम् । न० तर्कशास्त्र ।

हेतौ । अ० निमित्तार्थे ।

हेत्वाभास । पु० हेतुदोषे । सव्य
भिचारविरुद्धसत्प्रति
पक्षासिद्धबाधितभेदात् । यथो
क्तं भाषापरिच्छेदे । अनैकान्तोवि
रुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्चहेत्वाभासास्तुप
ञ्चधा । आद्यः साधारणस्तुस्यात्
असाधारणकोऽपरः । तथैवानु
पसंहारीत्रिधानैकान्तिकोभवेत् ।
यः सपक्षेविपक्षेचभवेत्साधारणस्तु
सः । यस्तूभयस्माद्व्यावृत्तः सच

जातवेदस । पतित यवरापृष्ठे रे लत्तहेमताममात् । कृमिमच्चापि भःतितद्रसेन्द्रस्यवेधत । स्वर्णं सुवर्णं कनकं हिरण्यहेमहाटकं ॥ तपनीयकलधौतगाङ्गेयगर्भकास्त्रनम् । चामीकर शातकुम्भ तथाकार्त्तस्वरस्रतत् ॥ जाम्बूनद जातरूपमहारजतामल्यपि । दाहेरक्तसित छेदेनिकषेकुङ्कुमप्रभम ॥ तारशुल्वोज्झितस्निग्धकोमलगुरुहेमसत् । तच्छ्वेतकठिनरूक्षविवर्णंसमलन्दलम् ॥ दाहेछेदेऽसितश्वेतकषेत्याज्यल घुस्फुटम् । हल॰ दीप्तद्युतिले.के । स्फटयदृघनावृत ॥ स्फुटतिहिमेतिहीयतेवा । हिमतीववीव । मस्मिन् ॥ धत्तूरे ॥ नागकेसरे ॥

मन्त । पु॰ ऋतुविशेषे । सह स हस्रयो । पौषहायणमोश्चयो ॥ र्हन्तिबोणान्मेश्वेन । हन्तेर्मुट्वे तिभन्प्रत्यय । हन्तिर्हिंचेतिहि राहेहिमुडागमेगुणश्च ॥

हेमन्तनाथ । पु॰ कपित्थे ॥

हेमपर्वत पु॰ सुमेरुगिरौ ॥

हेमपुष्पम् । न॰ अशोके ॥ जवापुष्पे ॥ पु॰ चम्पकवृक्ष ॥ हेमवर्णपुष्पयस्य ॥ राजवृक्षे ॥

हेमपुष्पक । पु॰ चम्पकवृक्षे । हेमवर्णपुष्पमस्य ॥ लोध्रे ॥ अशोके ॥

हेमपुष्पिका । स्त्री॰ स्वर्णयूथिकाया म् । पीतयूथिकायाम ॥ गणिका यूथिकाम्बष्ठासापीताहेमपुष्पिका ॥ हेमवर्णपुष्पमस्या । पाककर्णेति ङीष । स्वार्थेकन । ह्रस्व ॥

हेमपुष्पी । स्त्री॰ स्वर्णयूथ्याम । मु शल्याम ॥ स्वर्णुल्याम ॥ वन्दाकायाम् ॥ इन्द्रवारुण्याम ॥ स्वर्णजीवन्त्याम् ॥ माञ्जिष्ठायाम् ॥ हेमवर्णपुष्पमस्या । पाकर्णेतिङीष् ॥

हेमफला । स्त्री॰ स्वर्णकदल्याम ॥

हेममाला । स्त्री॰ यमपत्राम् ॥ स्वर्णस्रजि ॥

हेममाली । पु॰ सूर्ये ॥ कार्त्तवीर्ये ॥ त्रि॰ हेममालायुक्ते ॥

हेमयूथिका । हेमयूथी । } स्त्री॰ स्वर्णयूथिकायाम् ॥

हेमरागिणी । स्त्री॰ वर्णयाम । हरिद्रायाम् ॥

हेमल । पुं॰ कलादे । स्वर्णकारे ॥ कृकलासे । सरटे ॥ शिलान्तरे । कषपाषाणे । कसौटी॰ इ॰ भा॰ प्र॰ ॥

हेमलता । स्त्री॰ स्वर्णजीवन्त्याम ॥

हेमलम्ब । पु॰ वत्सरविशेषे ॥ तत्फलं यथा । पीडान्तेसर्वशस्यानि देशेदेशेशुचिस्मृते । हेमलम्बेप्रजा सर्वा चौयनैष्यसमय ॥ २१ ।

हेमवलम । न॰ मौक्तिके ॥

हेमशङ्ख । पु॰ विष्णौ ॥

हेमशिखा । स्त्री० स्वर्णक्षीर्य्याम् ॥
हेमसारम । न० तुत्थे । वृ० रसच न्द्रिका ॥
हेमसूत्रकम् । न० हारविशेषे ॥
हेमहस्तिरथ । पु० महादानविशेषे ॥
हेमा । स्त्री० अप्सरसांभेदे ॥ सुन्दर्य्यां नार्याम् ॥
हेमाङ्ग । पु० गरुडे ॥ परमेष्ठिनि ॥ सुमेरौ ॥ सिंहे ॥ चम्पके विष्णौ ॥ न० हेमवर्णशरीरे ॥ त्रि० तद्वति ॥ हेमाङ्गवपुर्ष्मत ॥
हेमाद्रि । पु० सुरपर्वते । मेरौ ॥ हेमोऽद्रि ॥ चिन्तामणिनामधेनु कल्पद्रुमनामकस्मृतिसङ्ग्रहकारकेच ग्रियेराजविशेषे ॥
हेमाद्रिजरण । पु० स्वर्णक्षीर्याम ॥
हेमाह्व ।) पु० वनचम्पके ॥ चम्पके ॥ धत्तूरे ॥
हेमाह्वय ।)
हेमाह्वया । स्त्री० स्वर्णजीवन्त्याम् ॥ हेमचाह्वयोयस्या ॥
हेमाह्वा । स्त्री० हेमक्षीर्याम् । चोकी ॥ शृणायथा । हेमाह्व रोचनोतिक्ता मादिन्युत्क्लेदकारिणी । क्रमिक ण्डूविषानाहकफपित्तास्रकुष्ठनुदिति ॥ स्वर्णजीवन्त्याम ॥
हेय । त्रि० त्याज्ये । हातव्ये ॥ पुरुषार्थोर्ड्ग्य्यसिद्धयेयदुपयुक्तमविरोधितदुपादेय विपरीतन्तुहेयम् हा तुं योग्य । श्रोहाक० । अर्होयत् ईद्यति । गुण ॥
हेर । त्रि० मुकुटप्रभेदे ॥ हरिद्रायाम् ॥ आसुर्यांमायायाम ॥ वृ० का शिता ॥
हेरम्ब । पु० विनायके एकदन्ते । लम्बोदरे । विघ्नराजे । गणेशे ॥ हेम्बरे० रणेवाश्रिवसमीपेआरम्बति । रविशब्दे । श्रोऽशोपध । पचा द्यच । तत्पुरुषेऽलुतौत्यलुक । हेउ पसिरम्बते० इतिस्वामी ॥ महिषे ॥ शौर्यगर्विते । बुद्धविशेषे । हेकले । वक्त्रटीके ।
हेरम्बजननी । स्त्री० दुर्गायाम् ॥
हेरम्बहट्ट । पु० देशविशेषे ॥
हेरिक । पु० चरे ॥
हेरुक । पु० कामाख्यायांप्रसिद्धेशि वलिङ्गविशेषे ॥ महाकालगणे ॥ बुद्धभेदे । वक्त्रटीके ।
हेलञ्ची । स्त्री० हिलमोचिकायाम् ॥
हेलनम । न० अवज्ञायाम । अवहेलने ॥ हेडृअनादरे । ल्युट् । डलयोरैक्यम ।
हेला । स्त्री० अवज्ञायाम ॥ वरयोषितांविलासे । स्त्रीणांशृङ्गारभावजेक्रियाविशेषे ॥ आह्नादसूचकोहावोहेला ऽत्यैवानुभावनम् । अपिच । हाव एवभवेद्धेलाव्यक्तः शृङ्गारसूचका कृति ॥ सुरतेप्रौढेच्छायाम् ॥ यद्वा

ह । प्रौढेच्छायातिरूढानानारीणा सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञै र्लीलापरिकीर्त्तितेति । हेलभाव कारणे । हेड् अनादरे घञ् । हेलनी रभेद । भावेकच् ।

हेलाबुक । प० अश्वविक्रयिणि ॥ इ० हारावली ।

हेलि । पु० रवौ । सूर्य्ये ॥ हेलति । हिल० इन् ॥

हेलि । स्त्री० हेलायाम ॥

हेषा । स्त्री० हयशब्दे । ह्रेषायाम ॥ हेषणम् । हेट्शब्दे । गुरोश्चेत्य

हेषी । पु० अश्वे । हेषा० अस्त्यस्य । ब्रीह्यादित्वादिनि ॥

हैहै । अ० सम्बोधने । हूतौ । दूरात् सम्बोधने । हैवहैव ।

है । अ० सम्बोधने । आह्वाने । हिनोति । हिगतौ डैप्रत्यय ॥

हैतुक । त्रि० सद्युक्तिव्यवहारिणि ॥ यथाहमनु । त्रैविद्योहैतुकस्तर्कीनिरुक्तोधर्म्मपाठकः । त्रयश्चाश्रमिणः पूर्वेपरिषत्स्याद्दशावरेति । हेतुवादासत्कर्मसु मन्देहकर्त्तरि । शुष्कतार्किके । यथा । पाषण्डिनो विकर्मस्थान् वैडालव्रतिकान्शठान् । हैतुकान्वकवृत्तींश्च वाङ्मात्रेणापिनार्चयेदिति विष्णुपुराणे ३ अंशे १८ अध्याय । पाषण्डादीनां लक्षणन्तु । भट ' स्वधर्मत्पाषण्डो० विकर्मस्थोनिषिद्धकृत् । यश्चधर्मध्वजीनित्यसुरध्वजइवोच्छ्रित ॥ प्रच्छन्नानिचपापानि वैडालनामततत्म । वैडालव्रतभक्ताश्चवैडालव्रतकास्तुत । प्रियवक्तापुरोऽन्यत्र विप्रियकुरुतेभृशम् व्यक्तापराधचेष्टश्च शठोयकर्थितोबुधै । सन्देहकृद्धेतुभिर्यः सत्कर्म्मसुसहैतुक । अर्वाग् दृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्पर । शठोमिथ्याविनीतश्च वकव्रतचरोद्विजः इति । हेतुनाचरति । ठक ॥ फलाभिसन्धियुक्ते ॥ स्त्री० हैतुकी ॥

हैम । पु० भूनिम्बे ॥ न० प्रातर्हिमे । हिमजले ॥ द्रव्यपानीयप्रभेदे ॥ यथा । हिमवच्छिखरादिभ्योद्रवीभूयाभिवर्त्तते । यत्तदेवहिमहैमजलमाहुर्मनीषिण । हिमाम्बुशीतंपित्तघ्नगुरुवातविवर्द्धनमितिभावप्रकाश ॥ अन्येतु । भौमनिकधूमेरितमम्बु समुद्रस्ययद्घनीभूतम् । पवनानीतमुदीच्यांतद्धिममितिकथ्यतेमुनिभि ॥ हिमन्तुशीतलरूक्षदारुणसूक्ष्ममत्यपि । नतुदूषयतेवातनचपित्तनवाकफमित्याहु ॥ त्रि० हिमभवे ॥ हिमजाते । हिमोविकारे ॥

हैमन । पु० न० हेमन्तर्त्तौ ॥ पु० मार्गशीर्षे ॥ हिमकालेभवषष्टिकधान्ये । यथा । हैमनास्तुहिमात

ष्य मधुरावद्दुवर्षसद्विति ॥ त्रि० हेमन्तसम्बन्धिनि । हेमन्ते त्ये । हेमन्ते जात • भव • साधु वा । सर्वत्राण्चतलोपश्चेत्यण् ॥

हैमन्तम् । न० । पु० हेमन्तर्तौ ॥ त्रि० हेमन्तसम्बन्धिनि ॥ हेमन्तभवे ॥ स न्धिवेलेति० ऋत्वण् ॥

हैमन्तिकम् । न० शालिधान्ये । आ मनधान० श० गौ० भा० प्र० ॥

हैमवत । पु० विषप्रभेदे ॥ न० भा रतवर्षे ॥ यथा । नाम्न दभारतव र्षं हिमाद्रेस्तस्य दक्षिणे । तेन हैमव तनामपरिच्छण्णं वसुधयेत् ॥ कुलाद्र यसौमेरवसुमेरो परितोस्थितस्थि ति ॥ त्रि० हिमवतिजाते ॥

हैमवतवर्षम् । न० हैमवति । भारत वर्षे । यथा । एतद्धैमवतवर्षं भा रतौयवसन्ति : । हेमकूटपरयव नानाकिम्पुरुषोमतद्विति ॥

हैमवती । स्त्री० उमायाम् । काल्याम् । पार्वत्याम् । हिमवतोपत्य स्त्री । हिमवतोभवावा । अण् । ङीप् ॥ गङ्गायाम् ॥ हिमवत प्रभवतिप्र काशते • तत्रप्रथम दृश्यतद्विति वाव त् । प्रभवतीत्यण् । स्वर्णक्षीर्याम् । पटुपर्ण्याम् । हिमावत्याम । वृक्ष पौतक्षीरानाग जिह्विकाकारा भवति । यथा । हैमवत्यपयस्याहिमवद्भूमि सम्भवा । सानागजिह्विकाकारात

न्मूलेवाखिजौषधमिति । हरीतक्या म् । श्वेतवचायाम् । हिमवतिजाता • भवावा । तत्रजातद्विति • तत्रभवद्विति वाण् । चोरिच्याम् । रेणुकायाम् ॥ अतस्याम् ॥ कपिलद्राक्षायाम् ॥

हैमा । स्त्री० पौतयूथिकायाम् ॥

हैमी । स्त्री० पौतयूथिकायाम ॥ हैमम य्याम् । स्वर्णकेतक्याम् । चोरिच्याम् । कास्वमनोर्याम् । हिमाद्रिजायाम् ॥

हैयङ्गवीनम । न० एकराविपर्युषिता द्ग्धुत्पन्ने • गोदोहविघृते । त स्तु हैयङ्गवीनयत् • गोदोहव घृतमित्यमर । यथा । हविर्यत्तत्तद्ग ग्धोत्य ततस्यात्वेयङ्गवीनकम । है यङ्गवीनचक्षुष्यदीपनरुचिकृत्परम् । बलकृद्वृष्यकृष्य विशेषात्क्षमता मनम् ॥ ह्यागोदोहस्वविकार । है यङ्गवीनसञ्ज्ञायामितिह्योगोदोहस्य हियङ्गुरादेशो विकारार्थेखञ्निपात्य ते ॥ नवनौते ॥

हैरण्यगर्भ । पु० स्वायम्भुवमनो ॥ हिरण्यगर्भस्यापत्यम । अण् हिरण्य गर्भोपासके ॥

हैरिक । पु० चौरे ॥

हैहय । पु० कार्त्तवीर्ये एकवीरन्न पे । हय्यापत्यम । स्त्रीभ्योढक् । पृषोदरादि । यथा । हैमत्वेनहैया • नामैकदेशेननामग्रहणात् । हेमा ग्रहंकुर्वनहयतिगच्छतीतिहेहयोऽ

अश्वस्तस्यायं हैहय । यद्वा । हेमन्त
हेमन्त इति वदन् हयति गच्छतीति हैह
यो विष्णुस्तस्यायम् हैहय । देशविशे
षे ॥ यथा । पश्चिमे हैहयास्ताद्रिम्ले
च्छवासः कायस्थ इति कूर्मचक्रम् ॥

हैहय । पु० कार्त्तवीर्य्ये । शब्द० प्र०
र० लो ॥

हो अ० विस्मये । सम्बोधने ॥ आ
ह्वाने । हानम् । आह्वाङ्गतौ ॥ डो
प्रत्यय ॥

होड । पु० तराप्लवहने । भट्ट० हु
डौ० कृ० गौ० दे० भा० प्र० नौका
विशेषे ॥ न० लोपत्रे । चौरधने ।

होडा । स्त्री० बालिकायाम् । वयसि
प्रथम इति ङीप् बाधित्वा अजादित्वा
ट्टाप ।

होडा । पु० चौरे । अकारान्त ॥ इति
कश्चित् ॥

होढम् । न० चौरकर्त्तृकाहृतधने ।

होता । पुं० । ऋग्वेदविदि । देवाना
माह्वानकर्त्तरि ऋग्वेदऋत्विजि
॥ ऋग्मन्त्रैर्देवानाह्वयतीति सुरगतौ ॥
होमकर्त्तरि । जुहोति । हुदानाद
नयो । नप्तृनेष्टृत्वष्टृपवितृप्रोपे
त्यादिनासाधु ॥ तृन्विधावृ
त्विक्षुचानुपसर्गस्येति तृन्वा ॥

होत्रम् । न० हविषि । हूयते । हु०
। हुयामाश्रुभसिभ्यस्त्रन् ॥

होत्रा । स्त्री० ऋत्विजि ॥ टाप् ॥
स्तुतौ ॥

होत्री । स्त्री० यजमानपत्न्याञ्चाग्निमू
र्त्तौ ॥

होत्रीयम् । न० होमागारे ॥ त्रि० हो
तृसम्बन्धिनि ॥

होम । पु० । पञ्चमहायज्ञेषु दैवयज्ञ ॥
सायम्प्रातर्होमयो ॥ सावित्र्यादिहो
मादौ ॥ हवने । देवतोद्देशेनाग्नौ
हविःप्रक्षेपे ॥ याग एव त्यज्य
मानद्रव्यस्याग्नौ प्रक्षेपाद्धोम इत्यु
च्यते ॥ अत्रानुकल्पश्चोक्तम् । ऋ
त्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ वि
ट्पति । एतैरेव हुतं यत्तु तद्धु
तं स्वयमेव हीति । हवनम् हु० ।
अर्त्तिस्तुसुहुस्रितिमन् ॥

होमक । पु० होतरि ।

होमकुण्डम् । न० हवन्याम् ।

होमधान्यम् । न० तिले ॥

होमधूम । पु० निगमे । इति हेमच
न्द्र ॥

होमभस्म । न० वैहुते ॥

होमाग्नि । पु० यज्ञाग्नौ । महा
ज्वाले । महावीरे ॥

होमि । पु० पावके । अग्नौ । घृ
ते ॥

होमी । पु० होमकर्त्तरि । जुहोति ।
हु० । उल्मुकादिभ्यो होमिन इति जु
होतेर्मिनि ॥

होमीय । त्रि० होतव्यद्रव्ये ।

ह्रदालयेश्वर । पुं॰ ह्रदालयेशस्थशिवे ॥

ह्रदिनी । स्त्री॰ नद्याम् । सरिति ॥ ह्रदाः सन्त्यस्याम् । अतइनि । ङीप् ॥

ह्रसिमा । पुं॰ ह्रस्वत्वे ॥ ह्रस्वस्यभाव । पृथ्वादित्वादिमनिच । स्थूलदूरेतिसाधु ॥

ह्रसिष्ठ । त्रि॰ अतिह्रस्वे । ह्रस्वतमे ॥ अयमेषामतिशयेनह्रस्व । इष्ठनि स्थूलदूरेतिसाधु ॥

ह्रसीयान् । त्रि॰ ह्रस्वतरे ॥ अयमनयोरतिशयेह्रस्व । ईयसुनि स्थूलदूरेतिसाधु ॥

ह्रस्व । पुं॰ द्व्यणुके ॥ एकमात्रवर्णे ॥ न॰ परिमाणविशेषे ॥ यथा । अणुदीर्घमहद्ध्रस्वमितितद्भेदईरितइति ॥ गौरसुवर्णशाके । पुष्पकासीसे ॥ त्रि॰ प्रकृतपुरुषपरिमाणात् न्यूनमनुष्ये । खर्वे । वामने । मेना॰ ह॰ भा॰ प्र॰ ॥ क्षुद्रवस्तुमात्रे । वामने । न्यञ्चि । नीचे । खर्वे ॥ ह्रसति॰ ह्रस्यतेवा । ह्रसशब्दे । बाहुलकात् । उल्वादिवो ।

ह्रस्वकुश । पुं॰ श्वेतकुशे ॥

ह्रस्वगर्भ । पुं॰ कुशे ॥

ह्रस्वगवेधुका । स्त्री॰ नागबलायाम् । काँगहीतिख्यातायाम् ॥ गवेधू मीएधती । एध॰ । बाहुलकादु । सज्ञायांकन् । ह्रस्वाचासौगवेधुकाच ॥

ह्रस्वजम्बु । स्त्री॰ क्षुद्रजम्ब्वाम् ॥

ह्रस्वतण्डुल । पुं॰ राजान्ने ॥

ह्रस्वदर्भ । पुं॰ श्वेतकुशे ॥

ह्रस्वदा । स्त्री॰ शल्लक्याम् ॥ इतिराजनिघण्ट॰ ॥

ह्रस्वपत्र । पुं॰ गिरिजमधूकागमे ॥

ह्रस्वपत्रिका । स्त्री॰ अश्वत्थ्याम ॥

ह्रस्वग्रन्थ । पुं॰ क्षुद्रश्रवणी । मुण्डी । ह्रस्वपर्णी । पीपरी ॥ गुणास्तु । ग्रन्थ कटु कषायशिशिरारक्तदोषजित् । मूर्च्छाभ्रमप्रलापघ्नोह्रस्वग्रन्थोविशेषतइति ॥

ह्रस्वफल । पुं॰ मधुनारिकेरे ॥

ह्रस्वफला । स्त्री॰ भूमिजम्ब्वाम् ॥

ह्रस्वमूल । पुं॰ रक्तेक्षौ ॥

ह्रस्वशाखाशिफ । पुं॰ ह्रस्वशाखामूले । क्षुपे ॥ शाखाच॰ शिफामूलञ्चतेशाखाशिफे । ह्रस्वेशाखाशिफेयस्य ॥

ह्रस्वा । स्त्री॰ खर्वायाम् । वामन्याम् ॥ नागबलायाम् । सूक्ष्मपर्ण्याम् ॥ भूमिजम्ब्वाम् ॥

ह्रस्वाग्नि । पुं॰ चित्रके । दयाग्नौ ॥

ह्रस्वाङ्ग । पुं॰ अष्टवर्गगतजीवकौषधौ । कूर्चशीर्षे । ह्रस्वान्यङ्गान्यस्य ॥

ह्रस्वैरण्ड । पुं॰ रक्तैरण्डे ॥

ह्राद । पुं॰ स्तनिते । गर्जिते । श

न्दे ॥ हिरण्यकशिपी ककीर्यसि पुर्षे ॥

ह्रादनि । पु० गर्जितशब्दे ॥

ह्रादी । त्रि० सशब्दे ॥

ह्रादिनी । स्त्री० वज्रे ॥ ह्रादत्यवश्य म् । ह्रादयत्यक्तशब्दे । आवश्यकी णिनि । ह्राद स्फूर्जथुरस्यस्या इतिवा । इनि ॥ तडिति । विद्यु ति ॥ ह्रादोऽव्यक्तशब्दोऽस्त्यस्या । इनि । अव्यवहितोत्तरेत्यत्तिकाल यस्याइतिषष्ठ्यर्थं ॥ शल्लक्याम् । गजभक्ष्यायाम् । सुवहायाम ॥ भ द्यम् ॥ ह्लादयत्यवश्यम् । ह्लादी सुखिच । आवश्यकीणिनि । रल योरैक्यम ।।

ह्रास । पु०शब्दे । अभिलापे । ध्वनौ ॥ यथा । शब्दाभिलापौत्वभिधाऽभिधानवाचकोध्वनि । ह्रास कु हरितस्वेतिमुद्राङ्कितखिङ्काणडशेष ।। आरवे ॥ क्षये ॥ यथा । ह्रासव ह्रौचसततदिनरात्र्योर्यथाक्रमम् । स न्ध्यामुहूर्त्तमाख्यातह्रासवृद्धौचसा समेति ॥

ह्रिवेरम् । न०हरिवेरे । ह्रीवेरे ॥ इ० ह्रि० ण ॥

ह्री । स्त्री० लज्जायाम् । अकार्य्यप्रवृत्या रम्भेतत्प्रतिबन्धिकायांधीः । कलज्जाया म् ॥ ह्रीलज्जायाम् । सम्पदादिस्वा त्क्विप ॥ पार्वत्याम् ॥

ह्रीका । पुं० कार्के ॥ नकुले ॥ सत्वदे वे ॥ त्रि० लज्जिते ॥ जिह्रेति । ह्री० । ह्रियोरश्चलोवेतिकन् ॥

ह्रीका ॥ स्त्री० त्रपायाम् । लज्जायाम् ॥ टाप ॥ त्रासे ॥

ह्रीकु । पु० जतुनि ॥ त्रपुणि ॥ वा ले ॥ मार्जारे ॥ त्रि० अप्रशस्ते ॥ अप्रगल्भे॥ सलज्जे । लज्जिते॥ जि ह्रेति । ह्री० । ह्रिय कुकारश्चलो वा । शिस्वाद्गुण ॥

ह्रीकू । स्त्री० भुवि ।

ह्रीजित । त्रि० सलज्जे । लज्जाशी ले । लज्जिते ॥ ह्रियाजित ॥

ह्रीण । ) त्रि० लज्जिते । सपत्रे ॥
ह्रीत । )

अह्रैषीत् । ह्री० । क्त ॥ नुदविदो न्दघ्राघ्राह्रीभ्योन्यतरस्यामितिनिष्ठा तस्यनीवा ॥

ह्रीता । स्त्री० लज्जितायाम् ।। ह्रिय. कर्त्तरिक्त ।।

ह्रीवेरम् । न० सुगन्धिबाला० इ० भा० प्र०गन्धवस्तुनि । तत्पर्यायायथा । बा लंह्रीवेरबर्हिष्ठोदीच्य केशाम्बुनामचे ति ।। गुणास्तु । ह्रीवेरंछर्दि हृल्लास तृष्णातीसारनाशनमितिराजवल्लभ ।। ह्रीयुक्तवेरमस्य ।।

ह्रेपित । त्रि० ह्रियलज्जाप्रापिते ॥ जि ह्रीतेतंप्रयोक्तकर्म्मणिक्त । अर्त्तिह्री त्यादिनापुगागम ॥ *

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | पृष्ठ | पङ्क्ति |
|---|---|---|---|---|
| ऽऽ तुिक् | ०० ०० | १ | प्र० | १६ |
| त | यत्नप्रियकर्दम | १ | द्वि० | १६ |
| स्न | वटहस्ते | १ | ० | १७ |
| य | हृष्यते | २ | ० | १४ |
| प | मा।कृत्या० | ३ | प्र० | १४ |
| र्म | विशेषे | ३ | ० | १५ |
| ष्ट | अतिपूर्वपि० | ३ | ० | २२ |
| सु | मखे | ३ | ० | २६ |
| ष्ठा | ज्योतिष्टोमा० | ३ | द्वि० | १९ |
| वृ | शुक्ल ति | ३ | ० | २८ |
| ऽ विषच | परिषचति | ४ | प्र० | १२ |
| द्रौ | शूद्रासु | ४ | ० | २४ |
| ० ष्टा | धम्मश्रेष्ठा । स्तो० | ४ | द्वि० | २५ |
| महो | अग्निजिह्वोद्भं रोमा | ५ | प्र० | १८ |
| घा | नखोघोर | ५ | ० | २४ |
| ह्मा | शुद्धाप० | ५ | द्वि० | ५ |
| हि | ब्रोहीन् | ५ | ० | १५ |
| स्फय | स्फ्यकपालादि० | ५ |  | २६ |
| स्फय | स्फ्यचकपालानि | ५ | ० | २७ |
| र्हे त्यु | तत्वामीर्हेत्युपकक्ष | ६ | प्र | ९ |
| र्व | सुयकोर्द्ध निप | ६ | द्वि० | १४ |
| न् - न् | महदेवान्नमामि० | ७ | प्र० | १ |
| थ्य | हविर्थ्यार्थो० | ७ | द्वि० | १८ |
| स्न | स्वज्जनरती | ८ | प्र० | ३ |
| य । थ | तथाशब्दस्तथशब्दो | ८ | द्वि० | २२ |
| ० भा | यथार्थानुभव । पु० | ९ | प्र० | २५ |
| थ | अर्थं गतं | १० | द्वि० | २४ |
| न | असाधून् | ११ | प्र० | २३ |
| ऽ ऽ असाधून् | ० ० ० ० | ११ | ० | २४ |
| च । य | माधुर्यैदचे तियमा | १२ | द्वि० | १८ |
| पि पि | प्रहरमयिनचिर मयि | १३ | प्र० | १४ |
| ऽ मिश्रौश्रौ | अजिरमिश्रौऽभ्य | १४ | द्वि० | १० |
| ते | नृपतौ | १४ | ० | २२ |
| ये। | यापो | १४ | ० | २९ |
| स्य | स्व लक्ष्यकीर्त्तित | १५ | प्र | १० |
| र्यो | सर्यों।सकरोगुरु | १५ | ० | १४ |
| रो | स्थैर्यं कारोच | १५ | ० | १६ |
| यो | यौति | १५ | ० | २९ |
| ह्नि | वह्निद्दीपन | १५ | द्वि० | २१ |
| प्र च्चा | चोराद्द०भो०प्र० ९ च्चारि | १५ | ० | २५ |
| प | यशान्याम् | १५ | ० | २९ |
| व ह | जूर्णाह्व ये | १६ | ० | ५ |
| ष्य | पुष्यिकायाम् | १६ | ० | ६ |
| स्य | यवनस्य | १६ | ० | ११ |
| स्या | फलान्यस्य० | १६ | ० | १८ |
| ख | ढक्कायाम् | १८ | प्र० | ९ |
| ष्टे | विशिष्टे | १८ | द्वि० | १५ |

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति |
|---|---|---|---|---|
| अ | भावायत्तस्वस्यां | ७६४ | द्वि० | १८ |
| स | सालोकि | ७६५ | प्र | २२ |
| ऽ पूजज | पूजने | ७६५ | द्वि | १ |
| आ | भत्रवाचाऽदि० | ७६५ | ० | ११ |
| स्ये | मेकस्त्वबुद्धि० | ७६७ | प्र० | ५ |
| ति | रा मे | ७६७ | ० | २७ |
| ट | कट्टरे | ७६७ | द्वि | ३ |
| ० गू | भरयू । स्त्री० | ७६८ | ० | २३ |
| स | साज्ञानजो० | ७६९ | प्र० | १८ |
| त | सरसिजातम् | ७६९ | ० | २९ |
| ऽ तत्पुरु | ऽ विज्ञातो ऽ त्युक्त | ७६९ | द्वि० | १९ |
| डा | फलाभजि | ७७ | प्र० | ६ |
| व | सभाव | ७७२ | ० | ५ |
| २ १ अस | कारसज | ७७२ | द्वि | १४ |
| ० स्तो | सर्णो । स्त्री० | ७७२ | ० | १८ |
| स्यष्यु त | इत्यु चातइत्यर्थं० | ७७४ | ० | १० |
| ० स | सर्व्वगत । पि० | ७७५ | प्र० | १८ |
| अ | विवदधस्त्रजे | ७७६ | ० | २९ |
| व | विवव | ७७६ | द्वि | २ |
| षा | बाष्पस्रोतांसि | ७७७ | प्र० | ९ |
| वा | वाद्ना | ७७७ | ० | १४ |
| - कि | क्षिप् | ७७८ | ० | १८ |
| द | तत्सर्वाद्दे | ७७९ | ० | ३ |
| १ स | ।पि०सकाव० | ७८१ | ० | २ |

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति |
|---|---|---|---|---|
| अ | सवस्याभ्यासाऽमिदे | ७८२ | द्वि० | २ |
| का | यथाकर्थं० | ७८३ | प्र० | १५ |
| दे | स्वेदोऽस्मात् | ७८४ | ० | १९ |
| क्यक्ये | हितक्योर्क्ये | ७८४ | द्वि० | १८ |
| । | ।पुरोदाराद्दि। | ७८५ | ० | २० |
| वा | यतसादेवतादेवी | ७८६ | द्वि० | २६ |
| ० । | अविभिन्न । भि० | ७८७ | प्र० | ९ |
| स्यू | स्यूणामितिप | ७८७ | द्वि | ६ |
| स्यू | स्यूणासुप० | ७८७ | ० | ११ |
| पु | पुष्पाकार | ७८८ | प्र० | ११ |
| प षा | ईषदृष्टाष्ययुक्तो | ७८८ | | १७ |
| षाष्प । | साकल्ये | ७८८ | द्वि | ९ |
| ति | क्षति | ७८८ | ० | २४ |
| षा | वैदूविधिने | ७९० | प्र | १२ |
| तति | पतितेः | ७९० | द्वि० | २२ |
| त ि | मर्तवयेऽपतिते० | ७९१ | प्र० | २४ |
| स्यू | निस्यूताभावो | ७९१ | ० | १४ |
| स्रो | प्रस्रो | ७९१ | ० | १५ |
| ह्वर्णी | स्रोतदूर्वायाम | ७९१ | ० | १८ |
| पास | प्रापयति | ७९२ | द्वि० | १२ |
| पा | पणास्त्र | ७९२ | प्र० | ७ |
| ति | सिञ्चतीति | ७९२ | ० | २४ |
| ति | पातमी | ७९३ | ० | १७ |
| स्य | प्रश्रये | ७९३ | द्वि० | १४ |

| अशुद्धिलेख | शुद्धिलेख | पृष्ठाङ्क | स्तम्भ | पङ्क्ति |
|---|---|---|---|---|
| श्च | सां छिच्य | ९२४ | द्वि० | १० |
| ० स्त्री | स्तो पिकम् । न० | ९२४ | ० | २५ |
| थ | अत्यु ऋथामिदे | ९२५ | प्र | १५ |
| ध | निमित्त | ९२६ | ० | ६ |
| ञ्चि का। | किञ्चित्कार्थं | ९२६ | द्वि० | २७ |
| हि | शुद्धि सा थ्योति० | ९२७ | ० | १५ |
| ङ्ग | भिङ्गे० | ९२७ | ० | २४ |
| ० पु०सौ | स्त्रोपुसो ।पु० | ९२७ | ० | १७ |
| ० | स्त्रोप्रथसा।स्त्री० | ९२८ | प्र० | ११ |
| था | तथापि | ९२८ | ० | १२ |
| ट | विनिगङ्गतारिपु० | ९२८ | ० | १८ |
| त | सर्वतो | ९२८ | ० | २२ |
| ले | लोकपतिना | ९२८ | ० | २६ |
| स्वाध्या | स्वभाव मुखतोमिथ्य | ९२८ | द्वि | १२ |
| द्द | दुष्कृताम्यपि० | ९२८ | ० | १५ |
| प | पूजिता | ९२८ | ० | १७ |
| न्त | वेध्यन्ते | ९२८ | ० | २४ |
| ग्न | लोभाग्निमतो | ९२९ | प्र० | २० |
| म विशे | विशेषमेषा० | ९२९ | ० | २९ |
| भे | यच मेदोष० | ९२९ | द्वि० | २९ |
| ० सु | स्वगु ।न० | ९३० | ० | ५ |
| षि | जितश्रम | ९३१ | प्र० | १६ |
| मु | तिष्ठतिर्भुक् | ९३२ | ० | १५ |
| भि | भयभिषामति० | ९३२ | ० | १९ |
| पक | दृष्कारी | ९३३ | ० | ११ |
| भो | मोघ | ९३३ | ० | १८ |
| द्द | सन्द ग्रपतिना० | ९३३ | द्वि० | ९ |
| त्य | व्युत्पत्त्या | ९३४ | प्र० | १ |
| य | सञ्चयामि | ९३४ | ० | १० |
| त्रि | भट्टाग्रीति | ९३४ | ० | १२ |
| भास्को | भास्करो | ९३४ | द्वि० | ३ |
| ० ना | स्याने।मि० | ९३४ | ० | १३ |
| । | स्यानभवे | ९३४ | ० | १९ |
| तो | यतो | ९३४ | ० | २२ |
| सु | मनुष्या | ९३५ | प्र० | ९ |
| थ्ये | सामर्थ्ये | ९३५ | ० | १४ |
| धो | क्राधोत्याचो | ९३ | ० | १८ |
| मा | स्यायिभावः | ९३५ | प्र० | १९ |
| य | यथाय० | ९३५ | ० | २१ |
| या | यथा।दिस्या० | ९३५ | ० | २६ |
| ख्य | ख्यातोपाख्य० | ९३५ | द्वि० | १३ |
| च | पश्चात् | ९३५ | ० | २० |
| ति | मितौकारान्ता० | ९३६ | ० | १३ |
| खि | चिरस्थायि | ९३७ | प्र० | २९ |
| ० स्त्री | स्थिरप्रज्ञोपु० | ९३७ | द्वि० | २५ |
| ० ष्ट | स्त्र्यानाष्टधकादु० | ९३९ | प्र० | १५ |
| ख्य | स्यूलदेश्वर।पु० | ९३९ | ० | १९ |
| क | कोपीवे | ९३९ | द्वि० | १९ |